स व्यवहारविषयः पुनश्चाष्टदशधाभिद्यते। यथाह मनुः—"तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः। सम्भूय च समुत्थानं दत्तस्यानपकर्म च॥ वेतनस्यैवचादानं संविदश्च व्यतिक्रमः। क्रयविक्रयानुशयो विवादः स्वामिपालयोः॥ सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके। स्तेयं च साहसं चैव स्त्रीग्रहणं एव च। स्त्रीपुंधर्मो विभागश्च द्यूतसमाह्वय एव च। पदान्यष्टादशैतानि व्यवहारस्थिती इह॥ इति।

This litigation subject concerns the following 18 points as said in Manu VIII; of there 18 points, the first is— ऋणादानम् (giving or non-giving and realisation of debts) (2) निक्षेप (placing of one's wealth with another out of confidence) (3) अस्वामिविक्रय (selling by a non-owner) (4) सम्भूय समुत्थान (enterprise or business by several in conjunction as partners) (5) दत्तस्यअनपकर्म (not taking back even after illegal giving) (6) वेतनस्यअदानम् (not giving wages) (7) संविदः व्यतिक्रमः (perversion of contract or promise) (8) क्रयविक्रयानुशयः (quarrel when remorse arises due to buying or selling) (9) स्वामिपालयोर्विवादः (quarrel of owners of cattle etc,) (10) स्वामीविवादः (quarrel over boundary line of ग्राम &c) (11) दण्डपारुष्यम् (12) वाक्पारुष्यम् (13) स्तेयम् (theft of money etc) (14) साहसम् (forcible taking of money etc) (15) स्त्रीसंग्रहणम् (illicit connection with females) (16) स्त्रीपुंधर्म (arrangement of one with a female) (17) विभाग (division of anesctral property) (18) द्यूताह्वय is द्यूतसमाह्वय (challenge with stake at dice).

एतान्यपिसाध्यभेदेन पुनर्बहुत्वंगतानि। यथाह नारदः—"एषामेव प्रभेदोन्यः शतमष्टोत्तरं भवेत्। क्रियाभेदात् मनुष्याणां शतशाखो निगद्यते" इति॥



["आवेदयति-चेद्राज्ञे" इत्यनेन स्वयमेवागत्य आवेदयति, न राजप्रेरितः तत्पुरुषप्रेरितो वा इति दर्शयति। यथाह मनुः—"नोत्पादयेत् स्वयं कार्य्यं राजा वाप्यस्य पुरुषः। न च प्रापितमन्येन ग्रसेतार्थं कथञ्चन" इति। परैरिति परेण पराभ्यां परैरित्येकस्य एकेन द्वाभ्यां बहुभिर्वा व्यवहारो भवति इति दर्शयति।]

यत् पुनः—"एकस्य बहुभिःसार्धं स्त्रीणां प्रेष्यजनस्य च। अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः इतिवचनं, तत् भिन्नसाध्यद्वयविषयम् (this concerns two different suits or matters to be proved—साध्य)।

"आवेदयति चेद्राज्ञे" इत्यनेनैव राज्ञा पृष्ठो विनीतवेष आवदेवेत्। आवेदितं च युक्तंचेत् मुद्रादिना (चिह्नविशेषेण)—(royal sealed Paper or the like) प्रत्यर्थ्याह्वान्, अकल्यादीनां (व्याधितानां) अनाह्वानम् इत्यादर्थसिद्धमिति न पृथगुक्तम्—(In आवेदयति राज्ञे – summoning of प्रत्यर्थि if in health goes without saying so not here separately stated) स्मृत्यन्तरे स्पष्टार्थमुक्तम् यथा, "काले कार्य्यार्थिनं पृच्छेत् प्रणतं पुरतःस्थितं। किं कार्य्यं काचतेपोड़ा मा भैषीर्ब्रूहि मानव॥ केन कस्मिन्कदा कस्मात् पृच्छेदेवं सभागतम्। एवं पृष्ठ स यद् ब्रूयात् स सभ्यैर्ब्राह्मणैःसह। विमृश्य कार्य्यं, न्याय्यं चेदाह्वानार्थमतः परम्। मुद्रां वा निक्षिपेत्तस्मिन् पुरुषं वा समादिशेत्। अकल्यकबालस्थविरविषमस्थक्रियाकुलान्। कार्य्यातिपाति-व्यसनि-नृपकार्य्योत्सवाकुलान्। मत्तोन्मत्तप्रमत्तार्त्तान् भृत्याश्चाह्वयेत् नृपः। न हीनपक्षां युवतिं कूले जातां प्रसूतिकां। सर्ववर्णोत्तमां कन्यां, ता ज्ञातिप्रभुकाः स्मृताः॥ तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्रयाः। निष्कुला याश्च पतितास्तासामाह्वानमिष्यते। कालं देशं च विज्ञाय कार्य्याणाञ्च बलाबले। अकल्यादीनपि शनैर्यानैर्वाहयेत् नृपः। ज्ञात्वाभियोगं येपि स्युर्वने प्रव्रजितादयः। तानप्याह्वानयेद्राजा गुरुकार्य्येष्वकोपयन्॥ इति॥ [कल्य and not कल्प means सुस्थ]।

आसेधव्यवस्थापि अर्थसिद्धैव (आसेधः=restraining; restraining interning etc. too of प्रत्यर्थि goes without saying here in

"आवेदयतिचेत्राज्ञे" )। [ नारदेनोक्ता—"वक्तव्येऽर्थे ह्यतिष्ठन्तमुत्क्रामन्तं च तद्वचः। आसेधयेत् ( निरोधयेत् ) विवादार्थी ( वादी ) यावदाह्वानदर्शनम्। स्थनासेधः कालकृतः प्रवासात् कर्मणस्तथा। चतुर्विधः स्यादासेधः नासिद्धस्तं विलङ्घयेत्। आसेधकाले आसिद्ध आसेधं योतिवर्त्तते। स विनेयोऽन्यथाकुर्वन् आसेद्धादन्डभाग्भवेत् नदीसन्तारकान्तार दुर्देशोपप्लवादिषु। आसिद्धस्तं परासेधमुत्क्रामन्नापराध्नुयात॥ निर्वेष्टुकामो रोगार्त्तोयियक्षुर्व्यसनेस्थितः। अभियुक्तस्तथान्येन राजकार्य्योद्यतस्तथा गवां प्रचारेगोपालाः शस्यावापेकृषीवलाः। शिल्पिनश्चापि ततकालमायुधीयाश्च विग्रहे"। इति। आसेधो राजाज्ञयावरोधः। अकल्यादयः, पुत्रादिकमन्यं वा सुहृदं प्रेषयेयुः, न च ते परार्थवादिनः—"योन भ्राता न च पिता न पुत्रो न नियोगकृत्। परार्थवादी दन्डयः स्याद् व्यवहारेषु विब्रुवन्॥ विरुद्धं विविधं विशेषेण वा ब्रुवन् = विब्रुवन् इत्यर्थः ] ॥ ५ ॥

## CHARCHA

1. स्मृत्याचार etc—विशेषण अपेतः व्यपेतः। स्मृति is धर्मशास्त्र; आचार is usage, custom and timely duties etc. स्मृतिश्च आचारश्च, द्वन्द्व। ताभ्याम् व्यपेतः gone from, i.e outside of, सुप्सुपा। तेन। Qual. मार्गेण। मार्गेण has करणे ३या।

2. आधर्षितः—आ+धृष+णिच् क्त कर्मणि=आधर्षितः oppressed. Its अनुक्तकर्त्ता is – परैः। आधर्षितः refers to आधर्षितः जनः।

3. राज्ञे—क्रियायोगे, कर्माणि वा चतुर्थी। The क्रिया here is आवेदयति। राज्ञे आवेदयिति=राजानम् अनुकूलयितुं विज्ञापयति वा। This suggests filing of suit by the plaintiff ( वादिन् वा अर्थिन् ), also summoning the प्रत्यथिन् (defendant or विवादिन्), and restraining the accused persons where possible or necessary (See Mita). Now suits may arise on all the 18 points; तत्व्यवहारपदं=विवादपदं stated in Mitakshara by quoting **Manu VIII ( which see).**



6. **Then आवेदित statement of अर्थिन् is to be written before the प्रत्यर्थिन् with name, date etc.**

**प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना।**
**समा-मास-तदर्धाह-र्नामजात्यादिचिह्नितम्॥ ६॥**

Prose—अर्थिना यथा ( येन प्रकारेण ) आवेदितं ( विज्ञापितं ) प्रत्यर्थिनः ( विवादिनः, प्रतिपक्षस्य इत्यर्थः ) अग्रतः तत् समा-मास-तदर्धाह-र्नामजात्यादि-चिह्नितं ( यथा तथा कृत्वा ) लेख्यं ( लेखनीयम् )।

Beng. অর্থী ( বা মামলাকারী বাদী ) যাহা যেভাবে বলিয়াছে, তাহা প্রত্যর্থী বা বিবাদীর সামনে লিখিতে হইবে, আর তাতে বৎসর, মাস, পক্ষ, দিন, নাম, জাতি ( স্থান ) প্রভৃতির নামের সুস্পষ্ট পরিচয় বা উল্লেখ থাকিবে।

Eng. The petition or narration (statement) of the Plaintiff as stated by him, should be written before the antiparty or the defendant specifying the year, month, paksha, date, name, caste etc. ( of the parties ) therein.

Mita—प्रत्यर्थिनि मुद्रालेख्यपुरुषाणामन्यतमेनानीते किंकुर्य्यादित्याह—(what should the प्रत्यर्थिन् do being brought before the king's council either by sealed summon or by officer is being said) ?—अर्थ्यते इत्यर्थः साध्यः, सोस्यास्तीति अर्थी, तत्प्रतिपक्षः प्रत्यर्थी, तस्याग्रतः पुरतो लेख्यं लेखनीयम् यथा येन प्रकारेण पूर्वमावेदनकाले आवेदितं तथा, न पुनरन्यथा, अन्यथावादित्वेन व्यवहारस्य भङ्गप्रसङ्गात्। "अन्यवादी कार्य्यद्वेषी नोपस्थाता निरुत्तरः। आहूतः प्रपलायी च हीनः पञ्चविधः स्मृतः"—( नारदस्मृतिः )॥ आवेदनकाले एवार्तिवचनस्य लिखितत्वात् पुनर्लेखनमनर्थकम् इत्यत आह—समामासेत्यादि। अर्थात् संवत्सर-मास-तिथि-वारादिना अर्थिप्रत्यर्थिनाम् नामब्राह्मणजात्यादिचिह्नितम् ( लेख्यं स्यात् )। आदिशब्देन द्रव्यतत्संख्यास्थान-

केवाक्षमादिलिङ्गादीनि गृह्यन्ते। [ यथोक्तम् – "अर्थवद्धर्मसंयुक्तं परिपूर्णमनाकुलम्। साध्यवद्वाचकपदं प्रकृतार्थानुबन्धि च। प्रसिद्धमविरुद्धं च निश्चितं साधने क्षमम्। संक्षिप्तं लिखिलार्थं च देशकालाविरोधि च। वर्षर्तुमासपक्षाहोवेलादेशप्रदेशवत्। स्थानावसथसाध्याख्यजात्याकारवयोयुतम्। साध्यप्रमाणसंख्यावत् आत्मप्रत्यर्थिनामवत्। परात्मपूर्वजानेकराजनामभिरङ्कितम्। क्षमालिङ्गात्मपीड़ावत् कथिताहर्तृदायकम्। यदावेदयते राज्ञे तद् भाषा इत्यतिधीयते॥" [ भाषा=प्रतिज्ञा=पक्ष (statement) इति नार्थान्तरम्—These are not separate words but synonyms ]। अवेदनसमये कार्य्यमात्रं लिखितं प्रत्यर्थिनोग्रतः समामासादिविशिष्टं लिख्यते इति विशेषः (the matter only is to be stated during petition, but this is to be done with dates etc before the defendant—this is the speciality here).]

संवत्सरविशेषणं यद्यपि सर्वव्यवहारेषु नोपयुज्यते, तथापि आधि-प्रतिग्रह-क्रयेषु—( in mortgage, gift, buying ) निर्णयार्थमुपयुज्यते, "आधौप्रतिग्रहे क्रीते पूर्वातुवलवत्तरा" इति वचनात्। अर्थव्यवहारोपि एकस्मिन् वत्सरे यत् सख्याकं यद्रव्यं यतो येन गृहीतं प्रत्यर्पितञ्च, पुनः अन्यस्मिन् वत्सरे तद्रव्यं तत् संख्याकं ततस्तेनगृहीतं, याच्यमानो यदिब्रूयात् सत्यं गृहीतं प्रत्यर्पितञ्च इति। वत्सरान्तरे गृहीतं प्रत्यर्पितञ्च नास्मित् वत्सरे—इत्युपयुज्यते। एवं मासाद्यपि योज्यम्। देशस्थानादयः पुनः स्थावरेष्वेवोपयुज्यते—"देशश्चैव तथास्थानं संनिवेशस्तथैव च। जातिःसंज्ञाधिवासश्च प्रमाणं क्षेत्रनाम च। पितृपैतामहञ्चैव पूर्वराजानुकीर्त्तनम्। स्थावरेषु विवादेषु दशैतानि निवशयेत्" – इति स्मरणात् ( कात्यायनस्मृतौ )। देशो मध्यदेशादिः। स्थानं वाराणस्यादि। संनिवेशः—तत्रैव पूर्वपरादिदिग्विभागपरिच्छिन्नः सम्यक् निविष्टः गृहक्षेत्रादिः। जातिः – अर्थिप्रत्यर्थिनोर्ब्राह्मणत्वादि। संज्ञा च – देवदत्तादिः। अधिवासः—समोपदेशनिवासी जनः। प्रमाणं निवर्त्तनादि भूपरिमाणम्। क्षेत्रनाम—शानिक्षेत्रं, क्रमुकक्षेत्रं, कृष्णभूमः, पाण्डुभूम इति। पितुः पितामहस्य च नाम अर्थिप्रत्यर्थिनोः पूर्वेषां त्रयाणाम्। राज्ञां नामकीर्त्तनञ्च।



समामासदीनां यस्मिन् व्यवहारे यावदुयुज्यते तत्र तावत् तल्लेखनीयम् इति तात्पर्य्यार्थः—( The sense is, year, month, dates etc should be given suiting each separate suit). ( एवं पक्षलक्षणेस्थिते पक्षलक्षणरहितां पक्षवदवभासमानानां पक्षाभासत्वं सिद्धमेव इति योगीश्वरेण न पृथक पक्षाभासाः उक्ताः ( such being the characteristics of पक्ष वा statements having the signs mentioned above, naturally then, पक्षाभासत्व of those having no real पक्षलक्षण comes up automatically, so योगीश्वर Yajnavalkya has not mentioned it separately here)।

अन्यैस्तु विस्पष्टार्थमुक्ताः—"अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनं। असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत्" इति। अप्रसिद्धं यथा—"मदीयं शशविषाणं गृहीत्वान प्रयच्छति" इत्यादि। निराबाधं—"अस्मद्गृहदीपालोकेनायं स्वगृहे व्यवहरतीति"। निरर्थं – अभिधेयरहितं 'कचटपगजड़दव' इत्यादि। निष्प्रयोजनं यथा – "अयं देवदत्तोस्मद् गृहसन्निधौ मुखरमधीते" इत्यादि। असाध्यं यथा—"अहं देवदत्तेन सभ्रूभङ्गमुपहसितं इत्यादि॥ एतत् सर्वं साधनासंम्भवात् असाध्यम्। अल्पकालत्वान्न साक्षिसम्भवो लिखितं दूरतोल्पत्वान्न दिव्यमिति। विरुद्धं यथा—"यथाहं मूकेन शप्त" इत्यादि। पुरराष्ट्राभिविरुद्धं वा—"राज्ञा विवर्जितोयश्च यश्च पौरविरोधकृत। राष्ट्रस्य वा समस्तस्य प्रकृतीनां तथैव च। अन्ये वा ये पुरग्राममहाजनविरोधकाः। अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्त्तिताः" इति।—[ Such अप्रसिद्ध पक्षाभासादियुक्त suits are not to be taken or admitted ].

यत्तु—"अनेकपदसंकीर्णः पूर्वपक्षो न सिध्यति" इति, तत्र यद्यनेकवस्तुसंकीर्ण इत्युच्यते तदा न दोषः। "मदीयम नेन हिरण्यं वासो रूपकादि वा अपहृतमित्येवं विषयस्य अदुष्टत्वात्। ऋणादानादि पदसंकरे पक्षाभास इति चेत् तदपिन।" "मदीया रूपका अनेन वृद्ध्यागृहीताः सुवर्णं चास्य हस्ते निक्षिप्तम्। क्षेत्रमय-

अपहरतीति प्रभृतीनां पक्षत्वं सिध्यत्येव। किन्तु क्रियाभेदात्क्रमेण व्यवहारो न युगपत् इत्येतावत्। यथाह—कात्यायनः—"वहुप्रतिज्ञं यत् कार्य्यं व्यवहारे सुनिश्चितं। कामं तदपि गृह्णीयात् तत्त्वबुभुत्सया" इति। तस्मादनेक पदसंकीर्णः पूर्वपक्षो युगपन्न सिध्यतीति तस्यार्थः। अर्थिग्रहणात् पुत्रपित्रादिग्रहणं तेषामेकार्थत्वात्। नियुक्तस्यापि नियोगेनैव तदेकार्थत्वाक्षेपात्॥ "अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोपि वा। यो यस्यार्थे विवदते तयोर्जयपराजयौ" इति स्मरणात् नियुक्तजयपराजयौ मूलस्वामिनोरेव। एतच्च भूमौ फलके वा पाण्डुलेखेन लिखित्वा आवापोद्धारेण (न्यूनाधिक्यपरिहारेण) विशोधितं पश्चात्पत्रे निवेशयेत्। "पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोभिलेखयेत्। पाण्डुलेखेन फलके ततः पत्रे विशोधितम्',—इति कात्यायनस्मरणात्। शोधनञ्च यावदुत्तरदर्शनं कर्त्तव्यं नातः परम्। अनवस्थाप्रसङ्गात्। अतएव नरदेनोक्तं— "शोधयेत्पूर्ववादं तु यावन्नोत्तरदर्शनम्। अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत्" —इति (=प्रथम खसड़ा परे संशोधन)। पूर्वपक्षमशोधयित्वैव यदोत्तरं दापयन्ति सभ्यास्तदा 'रागाल्लोभात्" इत्युक्तदण्डेन सभ्यान् दण्डयित्वा पुनः प्रतिज्ञापूर्वकं व्यवहारः प्रवर्त्तनीयो राज्ञेति—(when councillors dispose of cases without such scrutinising of the first statement पूर्वपक्ष, then they are to be punished by the king and a fresh suit is to be ordered as in modern times)। ६।

## CHARCHA

1. समामास &c.—Adv. qual कृत्वा understood (see prose); or adv. qual. लेख्यम्।...—चिह्नितं यथातथा लेख्यमित्यर्थः। समा. is year. मासार्द्ध is पक्ष। अहन् is day. नाम name; जाति caste तस्य अर्द्धम् तदर्द्धम्, ६तत्। समा च मासश्च तदर्धञ्च नाम च जातिश्च द्वन्द्व। तानि आदीनि (सामान्ये नपुंसकम) येषां, वहुं। तैः चिह्नितम्। Adv. These are necessary (each one or all) as a suit, a particular lititigation. See Mita also.



7. Then the कर्त्तव्य after admission of such written statement is being stated. here—

श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ
ततोर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्॥ ७॥

Prose—श्रुतार्थस्य (प्रत्यर्थिना श्रुतार्थस्य) उत्तरं, पूर्वावेदकसन्निधौ लेख्यं (लेखणीयं)। ततः अर्थी (वादी) प्रतिज्ञातार्थसाधनं (प्रतिज्ञातार्थस्य प्रमाणं) सद्यः (तदानीमेव) लेखयेत्।

Beng. বাদীর কথা শুনিয়া, বিবাদী প্রত্যর্থী, তার উত্তর প্রথম আবেদক অর্থাৎ বাদীর সাম্‌নেই লিখাইবেন। বাদী আবার নিজ প্রতিজ্ঞাত মাম্‌লার স্বপক্ষে প্রমাণ তখনই লিখাইবেন। (বাদী তৎক্ষণাৎ স্বপক্ষসাধনের জন্য প্রমাণ প্রদর্শন করিয়া লিখাইবেন)।

Eng.–Having heard the plaintiff's statement (पूर्वपक्ष), the defendant (प्रत्यर्थी) should give his reply before him and have it recorded; then the plaintiff too should show proof in favour of his statement प्रतिज्ञा there and then and have it recorded in writing.

Mita—एवं शोधितपत्रारूढे पूर्वपक्षे किंकर्त्तव्यमित्याह—श्रुतः भाषार्थो येन प्रत्यर्थिना असौ "श्रुतार्थः", "तस्योत्तरं" पूर्वपक्षात् उत्तरत्भवति इत्युत्तरं "लेख्यं" लेखनीयम्। पूर्वावेदकस्य अर्थिनः सन्निधौ समीपे, उत्तरं च पूर्वोक्तस्य निराकरणम् उच्यते। यथाह—"पक्षस्य व्यापकं सारम् असंदिग्धमनाकुलम् अव्याख्यागम्यम् इत्युत्तरं तद्विदो विदुः" इति॥ [पक्षस्य व्यापकं निराकरण-समर्थं, सारं न्याय्यं न्यायादनपेतम्। असंदिग्धं–सन्देहरहितम्। अनाकुलम् पूर्वापराविरुद्धम्। अव्याख्यागम्यम् अप्रसिद्धपदप्रयोगेन दुःश्लिष्टविभक्तिसमासाध्याहाराभिधानेन वा अन्यदेशभाषाभिधानेन वा यद्

व्याख्येयार्थं न भवति तत् सदुत्तरम् ॥ तच्च चतुर्विधम् – संप्रतिपत्तिः, मिथ्या, प्रत्यवस्कन्दनं (=सकारणोत्तरम्), पूर्वन्यायश्चेति। यथाह कात्यायनः – "सत्यं मिथ्योत्तरञ्चैव प्रत्यवस्कन्दनं तथा। पूर्वन्यायविधिश्चैवम् उत्तरं स्याच्चतुर्विधम्" इति। तत्र सत्योत्तरं यथा – "रूपकशतं मह्यं धारयति" इत्युक्ते "सत्यं धारयामि" इति। यथाह—"साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता" इति। मिथ्योत्तरं यथा—"नाहं धारयामि" इति। तथा च कात्यायनः—'अभियुक्तोभियोगम् यदि कुर्यादपह्नवम्। मिथ्यातत्तुजानीयादुत्तरं व्यवहारतः ॥ तच्च मिथ्योत्तरं पुनश्चतुर्विधम् – "मिथ्यैतन्नाभिजानामि तदा तत्रन सन्निधिः। अजातश्चास्मि तत्काले इति मिथ्याचतुर्विधम्" ॥ प्रत्यवस्कन्दनं नाम—"सत्यं गृहीतं प्रतिदत्तं प्रतिग्रहेणलब्धम्" इति। यथाह नारदः—"अर्थिना लिखितो योर्थः प्रत्यर्थी यदि तं तथा। प्रपद्य कारणं ब्रूयात् प्रत्यवस्कन्दनं स्मृतम्"। पूर्वन्यायोत्तरं तु यत्राभियुक्त एवं ब्रूयात्—"अस्मिन्नर्थे अनेनाहमाभियुक्तस्तत्र चायं व्यवहारमार्गेण पराजितः" इति। उक्तञ्च कात्यायनेन—"आचारेणावसन्नोपि पुनर्लेखयते यदि। सोभिधेययोजितः पूर्वं प्राङ्न्यायस्तु स उच्यते" ॥ एवमुत्तरलक्षणे स्थिने उत्तरलक्षणरहितानाम् उत्तरवदवभासमानानामुत्तराभासत्वमर्थसिद्धम्। (1)। स्पष्टीकृतं च स्मृत्यन्तरे—"संन्दिग्धमन्यत् प्रकृतात् अत्यल्पमतिभूरि च। पक्षैकदेशव्याप्यन्यत्तथा नैवोत्तरं भवेत्। यद्व्यस्तपदमव्यापि निगूढार्थं तथाकुलम्। व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धये" इति ॥ तत्र सन्दिग्धम्—"सुवर्णशतमनेन गृहीतम्" इत्युक्ते "सत्यं गृहीतं सुवर्णशतं माषशतं वा" इति। प्रकृतात् अन्यत् यथा—"सुवर्णशताभियोगे पणशतं धारयामि" इति। अत्यल्पं यथा—सुवर्णशताभियोगे "पञ्चाशतं धारयामि" इति। अतिभूरि (यथा)—सुवर्णशताभियोगे द्विशतं धारयामि" इति। पक्षैकदेशव्यापि—हिरण्यवस्त्राद्य-भियोगे "हिरण्यं गृहीतं नान्यत्" इति। व्यस्तपदम्—ऋणादानाभियोगे पदान्तरेणोत्तरम्, यथा सुवर्णशताभियोगे "अनेनाहं ताड़ितः" इति। अव्यापि देशस्थानादिविशेषेण अव्यापि यथा मध्यदेशे वाराणस्यां पूर्वस्यां दिशि क्षेत्रमनेनापहृतम् इति पूर्वपक्षे लिखिते "क्षेत्रमपहृतम्" इति। निगूढार्थं यथा –



सुवर्णशताभियोगे किमहमेव अस्मै धारयामि इति ध्वनिना प्राड्विवाकः सभ्यो वा अर्थी वा अन्यन्यै धारयति इति सूचयतीति निगूढार्थम्। आकुलं पूर्वापरविरुद्धं यथा – सुवर्णशताभियोगे कृते "सत्यं गृहीतं न धारयामि" इति। व्याख्यागम्यं यथा—दुःश्लिष्टाविभक्तिसमासाध्याहाराभिधानेन व्याख्यागम्यम्, अदेश भाषाभिधानेन वा। यथा—सुवर्णशतविषये पितृऋणाभियोगे 'गृहीतशतवचनात सुवर्णानां पितुर्न जानामि" इति। अत्र गृहीतशतस्य पितुर्वचनात् सुवर्णानांशतं गृहीतम्' इति न जानामि। असारं यथा न्यायविरुद्धं, यथा "सुवर्णशतमनेन वृद्ध्या गृहीतवृद्धिरेव दत्ता न मूलमिति अभियोगे "सत्यं वृद्धिर्दत्ता न मूलं गृहीतमिति ॥ उत्तरम्' इति एकवचननिर्देशात् उत्तराणां सङ्करो निरस्तः, यथाह कात्यायनः "पक्षैकदेशे यत् सत्यमेकदेशे च कारणं। मिथ्या चैव एकदेशे च संकरात् तदनुत्तरम्" ॥ अनुत्तरत्वे च कारणं तेनैवोक्तम्—नचैकस्मिन्विवादे क्रिया-स्याद्वादिनोर्द्वयोः न स्वार्थसिद्धिरुभयो र्न चैकत्र क्रियाद्वयम्" ॥ मिथ्याकारणोत्तरयोः संकरे अर्थिप्रत्यर्थिनोर्द्वयोरपि क्रिया प्राप्नोति "मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि" इति स्मरणात्। तदुभयमेकस्मिन् व्यवहारे विरुद्धम्। यथा—सुवर्णं रूपकशतञ्चनेन गृहीतमिति अभियोगे—"सुवर्णं=गृहीतंरूपकं गृहीतं प्रतिदत्तम्, कारणात् न्यायसङ्करेतु प्रत्यर्थिन एव क्रियाद्वयम्। "प्राङ्न्यायकारणोक्तौतु प्रत्यर्थी निर्दिशेत् कियाम्।" यथा सुवर्णं गृहीतं प्रतिदत्तम रूपकं व्यवहारमार्गेण पराजितः"। अत्रच प्राङ्न्याये जयपत्रेण वा प्राङ्न्याय-दर्शिभिर्वा भावयितव्यम्, कारणोक्तौतु साक्षिलेख्यादिभिर्भावयितव्यमिति विरोधः। एवमुत्तरत्रयसंकरेपि द्रष्टव्यम्। यथा—अनेन सुवर्णं रूपकम् वस्त्राणि च 'गृहीतानि' इत्यभियोगे सत्यं सुवर्णं गृहीतं प्रतिदत्तं रूपकशतं न गृहीतं, वस्त्रविषये तु पूर्वन्यायेन पराजितः" इति ( एवं चतुःसंकरेपिएतेषां चानुत्तरत्वं यौगपद्येन तस्य तस्यांशस्य तेन तेन बिना असिद्धेः क्रमोणोत्तरत्वम्। क्रमाश्चार्थिनः प्रत्यर्थिनः सभ्यानां चेच्छया भवति ( यत्र पुनरुभयोः संकरे तत्र यस्य प्रभूतार्थविषयत्वं तत्क्रियोपादानेन पूर्वं व्यवहार प्रवर्त्तयितव्यः, पश्चात् अल्पविषयोपादानेन तु व्यवहारो द्रष्टव्यः। यत्र तु संप्रतिपत्तेरुत्तरान्तरस्य

च संकरस्तत्रोत्तरान्तरोपादानेन व्यवहारो द्रष्टव्यः। संप्रतिपत्तौ क्रियाभावात्। यथा हारीतः—"मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे। सत्यंचापि सहान्येन तत्र ग्राह्यं किमुत्तरम् "इत्युक्त्वा उक्तम्—" यत् प्रभूतार्थविषयं तत्र वा स्यात् क्रियाफलम्। उत्तरं तत्र तज्ज्ञेयमसंकीर्णमतोन्यथा संकीर्णंभवति इति शेषः। शेषापेक्षया ऐच्छिकक्रमं भवति। तत्र प्रभूतार्थं यथा—"अनेन सुवर्णं रुपकशतं वस्त्राणि च गृहितीनि इत्यभियोगे सत्यं सुवर्णं रुपकशतं न गृहीतं, वस्त्राणि च गृहीतानि प्रतिदत्तानिच" इति। अत्र मिथ्योत्तरस्य प्रभूतविषयत्वात् अर्थिनः क्रियामादाय प्रथमं व्यवहारः प्रवर्तयितव्यः, पश्चात् वस्त्रविषयो व्यवहारः। एवं मिथ्याप्राङ्न्यायसंकारे कारणप्राङ्न्यायसंकरे च योजनीयम्। तथा तस्मिन्नेवाभियोगे, गृहीतानि प्रतिदत्तानि इति वा वस्त्रविषयं पूर्वं पराजित इति चोत्तरे संप्रतिपत्तेः भुरिविषयत्वेपि तत्र क्रियाभावात् मिथ्याद्युत्तर-क्रियामादाय व्यवहारः प्रवर्त्तयितव्यः। यत्रतु मिथ्याकारणोत्तरयोः कृत्स्नपक्षव्यापित्वं यथा—शृङ्गग्राहिकतया (=ततन्यायेन) कश्चिद्वदति 'इयं गौर्मदीया अमुकस्मिन् काले नष्टा, अद्यास्य गृहे दृष्टा इति। अन्यस्तु 'मिथ्यैतत्', प्रदर्शितकालात् पूर्वमेवास्मद् गृहेस्थिता मम गृहेजाता च इति वदति। इदं तावत् पक्षनिराकरणसमर्थत्वात् नानुत्तरम्। नापिमिथ्यैव कारणोपन्यासात्, नापि कारणमयं एकदेशव्यापि अभ्युपगमाभावात्। तस्मात् सकारणं मिथ्योत्तर-मिदम्। अत्र च प्रतिवादिनः क्रिया, "कारणे प्रतिवादिनि" इति वचनात्॥ ननु 'मिथ्याक्रिया पूर्ववादे' इति पूर्ववादिनः कस्मात् क्रिया न भवति? तस्य शुद्धमिथ्याविषयत्वात्, "कारणे प्रतिवादिनि" इत्येतदपि कस्मात् शुद्धकारणविषयं न भवति? नैतत्। सर्वस्यापि कारणोत्तरस्य मिथ्यासह-चरितरुपत्वात् शुद्धकारणोत्तरस्याभावात्। प्रसिद्धकारणोत्तरे प्रतिज्ञातार्थैकदेशस्य अभ्युपगमे नैकदेशस्य मिथ्यात्वम् यथा— 'सत्यं रूपकशतं गृहीतं न धारयामि, प्रतिदत्तत्वात्। प्रकृतोदाहरणे तु प्रतिज्ञातार्थैकदेशस्य अभ्युपगमो नास्तीति विशेषः। एतच्च हारीतेन स्पष्टीकृतं "मिथ्याकारणयोर्वापि ग्राह्यं कारणमुत्तरम्" इति। यत्र मिथ्याप्राङ्न्याययोः पक्षव्यापित्वं यथा—





'रूपकशतं धारयामि' इत्यभियोगे मिथ्यैतत् अस्मिन्नर्थे पूर्वमयं पराजितः इति। अत्रापि प्रतिवादिन एव क्रिया, "प्राङ्न्यायकारणोक्तौतु प्रत्यर्थी निर्दिशेत् क्रियाम्" इति वचनात्, शुद्धप्राङ्न्यायेस्याभावात् अनुत्तरत्वप्रसङ्गात्त, संप्रतिपत्तेरपि साध्यत्वेनोपदिष्टस्य पक्षस्य सिद्धत्वोपन्यासेन साध्यत्वनिरा-करणादेवोत्तरम्। यदा तु कारणप्राङ्न्यायसंकरः, यथा—शतमनेन गृहीतम्' इत्यभियुक्तः प्रतिवदति 'सत्यं गृहीतं प्रतिदत्तञ्च इत्यस्मिन्नेवार्थे प्राङ्न्यायेनायं पराजितः इति। तत्र प्रतिवादिनी यथारुचि इति न क्वचित् वादिप्रतिवादिनो-रेकस्मिन् व्यवहारे क्रियाद्वयप्रसङ्गः इति—निर्णयः॥ [N. B.— The gist here is this—the reply of the defendant against the matter or petition of the अर्थी or वादी, should be able to retort the plaintiff's statement with just clear undoubtful and non-cortradictory lucid meaning requiring no explanation or interpretation of any kind. The four reply will be —either सत्य i. e. acceptance or संप्रतिपत्ति; or मिथ्या, or a refuting reply with cause (प्रत्यवस्कन्दनं=सकारणोत्तरम्), or with reference to his prior defeat on this point---(This is पूर्वन्याय)। This or such will be the right reply(उत्तर)before the plaintiff; and other things are उत्तराभास or apparent reply but is not the real reply ; it will do us no good—न स्वार्थसिद्धये स्यात् ]

एवमुत्तरे पत्रे निवेशिते साध्यसिद्धेः साधनायत्तत्वात् साधननिर्देशं कः कुर्यात् (Now who is next to do the showing of cause or साधन to establish the साध्य to be proved—the अर्थी is to show proof now of his plaint or suit or व्यवहार )—इत्याह—तत उत्तरानन्तरम्, अर्थी साध्यवान्. सद्यएव अनन्तरमेव "प्रतिज्ञार्थसाधनं लेखयेत्।" प्रतिज्ञातः साध्यः स चासौ अर्थश्च इति प्रतिज्ञातार्थः, तस्य साधनं च—साध्यतेनेन इति साधनम् प्रमाणम्। [अत्र "सद्यः लेखयेत्" इति वदता उत्तराभिधाने

कालविलम्बमप्यङ्गीकृतम् इति गम्यते। तच्चोत्तरत्र विवेचयिष्यते। अर्थी प्रतिज्ञातार्थसाधनं लेखयेदिति वदतायस्य साध्यमस्ति स प्रतिज्ञातार्थसाधनम् लेखयेत् इति उक्तम्। अतश्च प्राङ्न्यायोत्तरे प्राङ्न्यायस्यैव साध्यत्वात् प्रत्यर्थी एव अर्थी जात इति स एव साधनं लेखयेत्। कारणोत्तरेपि कारणस्यैव साध्यत्वात् कारणवादी एव अर्थीस एव लेखयेत्। मिथ्योत्तरे तु पूर्ववाद्येवार्थी स एव साधनं निर्दिशेत्। "ततोर्थी लेखयेत्" इतिवदता अर्थ्येव लेखयेत् नान्य इत्युक्तम्। अतश्च संप्रतिपत्युत्तरे साध्याभावेन भापोत्तरत्वादिनोः द्वयोरप्यर्थित्वाभावात् साधननिर्देश एव नास्ति इति तावतैव व्यवहारः परिसमाप्यते इति गम्यते। एतदेव हारीतेन स्पष्टमुक्तम् – प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थीनिर्दिशेत् क्रियाम्। मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्" इति ॥ ७ ॥

## CHARCHA

1. श्रुतार्थस्य etc—श्रुतः अर्थः येन (प्रत्यर्थिना), वहु। The प्रत्यर्थी who heard the statement—तस्य। शेषे ६ष्ठी, related to उत्तरम्। The उत्तरम् is to be written down [ (लेख्यम्=लिख+णिच् यत्कर्मणि) ]। पूर्वविदकस्यसन्निधौ (अधि ७मी) एव लेख्यम्। Or—It means the matter heard—by कर्मधा।

2. लेखयेत्=लिख+णिच्+यात्। Then अर्थी should have this recorded, The recording should be there and then—सद्यः (which will favour the अर्थी) ॥ अर्थी प्रमाणं (साधन) लिखति=अर्थी राजपुरुषेण साधनम् लेखयेत् in णिच्।

3. प्रतिज्ञातार्थसाधनम्—प्रतिज्ञात is what is to be proved (साध्यवस्तु) i.e. the statement written or filed, प्रतिज्ञातः चासौ अर्थश्च कर्मधा। तस्य साधनम् (कारणम्)। obj. of लेखयेत्। The अर्थी is to do this.



4. The cause of suit being proved the suit is won usually, thus 4 points are involved in a suit or व्यवहार in general—

तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोन्यथा।
चतुष्पाद्व्यवहारोयं विवादेषूपदर्शितः ॥ ८ ॥

Prose—तत्सिद्धौ (साध्यस्य प्रमाणेन सिद्धौ सत्याम्) अर्थी सिद्धिम् (जयम्) आप्नोति। अन्यथा (अप्रमाणेन) अथ विपरीतं (पराजयम्) आप्नोति। विवादेषु अयं चतुष्पात् [ (1) "प्रत्यर्थिनोग्रतः लेख्यम्" (sl.6) (2) श्रुतार्थस्य ,उत्तरंलेख्यम् (sl, 7), (3) ततः अर्थीलेखयेत (sl 7) (4) प्रमाण or साधन सिद्धयादि (sl 8) ] व्यवहारः उपदर्शितः।

Beng—মামলার দরখাস্তবস্তুপ্রমাণ দ্বারা সিদ্ধ হইলে অর্থী জয়লাভ করে, আর, লিখিত বস্তু প্রমাণ করিতে না পারিলে পরাজিত হয়। (ঋণদানাদি) অষ্টাদশবিবাদবিষয়ে এই চতুষ্পাৎ সাধারণ ব্যবহারবিধি প্রদর্শিত হইল। (প্রথম = লিখিত ভাষাপদ, দ্বিতীয় শ্রুতার্থের উত্তর-লেখন, তৃতীয় অর্থীর পাল্টাকারণ জবাব প্রদর্শন, চতুর্থ প্রমাণসিদ্ধি)।

Eng—Thus प्रतिज्ञातार्थवस्तु (The original written matter) being proved, the अर्थी gains victory. other wise he is defeated ; thus here the four-pointed general procedure is shown in all the main 18 varieties of cases (mentioned in Manu and quoted before here in P17) ; [ The four points (पाद) are —(1) प्रत्यर्थिनोग्रतः लेख्यं called भाषापाद—with statement in plaint as in sl 6, (2) श्रुतार्थस्य उत्तरं (sl. 7)=उत्तरपाद defendant's reply (3) अर्थी प्रमाणं लेखयेत् (sl 7) plaintiffs affidavit in reply and proofs क्रियापाद (4) तत्सिद्धौसिद्धिः (sl 8)—साध्यसिद्धि पाद ]।

Mita—ततः किमित्यत आह—"तस्य साधनस्य प्रमाणस्य" वक्ष्यमाणलिखित साद्ययादिलक्षणस्य "सिद्धौ" निवृत्तौ "सिद्धि" जयलक्षणाम् आप्नोति। अतोस्मात् प्रकारात् अन्यथा प्रकारान्तरेण साधनासिद्धौ "विपरीतं साध्यस्यासिद्धिं पराजयलक्षणामाप्नोतीति सम्बन्धः॥ एवं व्यवहाररूपमभिधाय उपसंहरति —"व्यवहारान् नृपः पश्येत्" (sl. 1) इत्युक्तो व्यवहारः। सोयमित्थं "चतुष्पात्" चतुरंशकलनया विवादेषु ऋणादानादिषु "उपदर्शितः" वर्णितः। तत्र "प्रत्यर्थिनोग्रतः लेख्यम्" (sl. 6) इति भाषापादः प्रथमः। "श्रुतस्यार्थस्यौत्तरम् लेख्यम्" (sl. 7) इति उत्तरपादो द्वितीयः। ततः "अर्थी लेख्येत्सद्य इति क्रिया पादस्ततीय। तत् सिद्धौ सिद्धिमाप्नोति इति साध्यसिद्धिपादश्चतुर्थः॥ यथोक्तं—परस्परं मनुष्याणां स्वार्थविप्रविपत्तिषु वाक्यन्यायाद्यवस्थानं व्यवहार उदाहृतः। भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवृत्तिभिः आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयते" इति॥ संप्रतिपत्त्युत्तरे तु साधनानिर्देशात् भाषार्थस्य असाध्यत्वात् न साध्यसिद्धिलक्षणः पादोस्तीति द्विपात्त्वमेव। उत्तराभिधानान्तरं सभ्यानाम् अर्थिप्रत्यर्थिनोः कस्य क्रिया स्यादिति परामर्शं लक्षणस्य प्रत्याकलितस्य योगीश्वरेण व्यवहार पादऽत्वेनानभिधानात् व्यवहारहत्तृसम्बदाभावाच्च न व्यवहारपादत्वमिति स्थितम्॥ इति साधारणव्यवहारमातृकाप्रकरणम्॥

## CHARCHA

1. तत्सिद्धौ—तस्य (प्रधानस्य साधनस्य) सिद्धिः। provision of proof ६तत्-1 तस्याम्। अधिं ७मी। or भावे ७मी।

2. चतुष्पात---चत्वारः पादाः अस्य, वह-1 Having 4 points or procedures.

In this final बहुव्रीहि of चतुर्+पाद, पाद becomes पात् with elision of final अ by the rule "संख्यासुपूर्वस्य" पादस्य लोपः। The four points (पाद) are—(1) first petition and then written statement of अर्थी—भाषापाद (2) next the



reply of प्रत्यर्थी—उत्तरपाद (3) अर्थी's reply with proof क्रियापद – (4) lastly culmination of proof or सिद्धिपाद including जय-पराजय-दण्ड, see Mita, also Eng. & Beng Tr. And in fact this is the procudure in High Courts etc even now—thus statement in plaint; defendant's Reply with affidavit; Plaintiff's counter reply and affidavit; procedure of proof etc: And this is the general procedure in all व्यवहारपद (matters of suits); इति साधारणव्यवहार मातृका प्रकरणम्॥

## अथ विशेषस्यप्रकरणम् or असाधारणस्य व्यवहारमातृकाप्रकरणम्।

(Now follow special restrictions in litigations or special formula in special legal procedures)

9. Duties of प्रत्यर्थी and अर्थी in a suit.

अभियोगमनिस्तीर्य्य नैनं प्रत्यभियोजयेत्।
अभियुक्तं च नान्येन नोक्तं विप्रकृतिंनयेत्॥ ६॥

Prose—अभियोगम (अपराधम्) अनिस्तीर्य्यं (अनुत्तीर्य्य) (वादिना आनीतमभियोगमजित्वा इत्यर्थः) एनम् (अभियोक्तारं वादिनं) न प्रत्यभियोजयेत् (अपराधेन न योजयेत्)। अन्येन अभियुक्तं (जनं) च न प्रत्यभियोजयेत्। उक्तं (अभियोगकाले, आवेदनसमये उक्तं कथितं विषयं) विप्रकृतिं (भाषाकालेच विरुद्धभावं) न नयेत्।

Beng—বাদীর আনীত অভিযোগ মীমাংসিত না হওয়া পর্য্যন্ত প্রতিবাদী অভিযোক্তা বাদীকে, পাল্টা কোন অভিযোগে অভিযুক্ত করিবে না। বাদীকর্ত্তৃক অভিযুক্ত ব্যক্তিকেও অন্যকোনও বাদী অভিযোগে অভিযুক্ত করিবেন না। বাদী অভিযোগকালে

যে বিষয় বলিয়াছে বা যে পক্ষ স্থাপন করিয়াছে, ভাষাকালে (লিখাইবার সময়) তাহার বিরুদ্ধভাব কিছু লিখাইবে না বা বলিবে না।

Eng—The defendant (प्रत्यर्थी वा प्रतिवादी) should not accuse with any counter complaint till the final disposal of the suit, already brought against him by the Plaintiff (वादी or अर्थी); no one even should further accuse any defendant already accused by another plaintiff; and the statement filed during complaint should not be contradicted later during recording in suits (भाषाकाले)।

Mita—एवं सर्वव्यावहारोपयोगिनीं व्यवहारमातृकामभिधाय अधुना क्वचिद्व्यवहारविशेषे कश्चिद्विशेषं दर्शयितुमाह—। अभियुज्यते इति अभियोगः अपराधः। "तमभियोगम् अनिस्तीर्य्य" अपरिहृत्य एनमभियोक्तारं न प्रत्यभियोजयेत्" अपराधेन न संयोजयेत्। [ यद्यपि प्रत्यवस्कन्दनं प्रत्यभियोगरूपं तथापि स्वापराधपरिहारात्मकत्वात् नास्य प्रतिषेधविषयत्वम्। अतः स्वाभियोगानुपमर्दनरूपस्य प्रत्यभियोगस्यायं निषेधः॥ इदं प्रत्यर्थिनमधिकृत्यउक्तम् [ Though प्रत्यवस्कन्दनं is a kind of or implies some प्रत्यभियोग, still that being meant only to set aside a charge or being a reputation of charge will not come under this consideration of प्रत्यभियोग (a fresh suit) intended here. This is here said with reference to a प्रत्यर्थिन् only ]।

अथ अर्थिनं प्रत्याह अभियुक्तंचनान्येन इति। "अन्येनाभियुक्तम्" अनिस्तीर्णाभिमोगम् अन्योर्थी "नाभियोजयेत्"। किञ्च "उक्तम्" आवेदनसमये यदुक्तं तत् 'विप्रकृतिं' विरुद्धभावं "न नयेत्" प्रापयेत्। एतदुक्तंभवति—यद्वस्तु येन रुपेणावेदनसमये निवेदितं तद्वस्तु तथैव भाषाकालेपिलेखनीयं नान्यथा, [ "ननु प्रत्यर्थिनोग्रतः लेख्यं यथावेदितमर्थिना" (sl. 6) इत्यत्रैवेदम्



उक्तम्, किमर्थं पुनरुच्यते "नोक्तं विप्रकृतिंनयेत्" इति? उच्यते—"यथावेदितमर्थिना" इत्यनेनावेदनसमये यद्वस्तु निवेदितं तदेव भाषासमयेपि तथैव लेखनीयम्। एकस्मिन् विषये न वस्त्वन्तरम् स्यात् (There should not be another matter on the same subject)। यथा—"अनेन रूपकशतकं वृद्ध्या गृहीतम्" इत्यावेदनसमये प्रतिपाद्य प्रत्यर्थिसन्निधौ भाषासमये "वस्त्रशतं वृद्ध्या गृहीतम्" इति न वक्तव्यम्। तथा सति पदान्तरागमनेपि वस्त्वन्तरगमनात् हीनवादी दण्ड्यः स्यात् (in that case something else being implied and वादी is हीनवादी and the हीनवादी should be punished); 'नोक्तं विप्रकृतिंनयेत्' इत्यनेन एकवस्तुत्वेपि (thouth the वस्तु is one) पदान्तरगमनं "वृद्ध्या गृहीत्वा अयं न प्रयन्छति" इत्यावेदनसमये अभिधाय भाषकाले (another kind of statement on the same) निषिध्यते यथा—रूपकशतं बलादपहृतवान्" इति वदति। तत्र वस्त्वन्तरगमनं निषिद्धय, इह तु पदान्तरगमनं निषिध्यते इति न पौनरुक्त्यम्। एतदेव स्पष्टीकृतं नारदेन—पूर्वपादं परित्यज्य योन्यमालम्बते पुनः। पदान्तरसंक्रमणात् ज्ञेयो हीनवादीसदैनरः"—हीनवादी दन्ड्यो भवेत् न प्रकृतादर्थाद्धीयते अतः प्रत्यर्थिनोर्थिनश्च प्रमादपरिहारार्थम् एवायम् "अभियोगमनिस्तीर्य" इत्याद्युपदेशो न प्रकृतार्थसिद्ध्यसिद्धिविषयः (the present sl. is for प्रमादपरिहार)। अतएव वक्ष्यति (sl. 19) "छलं निरस्य भूतेन व्यवहारान् नयेन्नृपः" इति। एतच्च अर्थविषयव्यवहारे द्रष्टव्यम्। मनुप्रकृते च व्यवहारे प्रमादाभिधाने प्रकृतादपि व्यवहारात् हीयते एवं (there will be a defeat)। यथाह नारदः—"सर्वेष्वर्थविवादेषु वाक्छले प्रमादाभिधानेपि नावसीदति। परस्त्रीभूमि-ऋणादाने शास्यापर्थान्नहीयते" इति। अस्यार्थः—सर्वेषु अर्थविवादेषु न मन्युकृतेषु वाक्छले प्रसादाभिधानेपि नावसीदते न पराजीयते, न प्रकृतादर्थात् हीयते इत्यर्थः। अत्रोदाहरणं परस्त्री इत्यादि। परस्त्रीभूमि-ऋणादाने प्रमादाभिधानेन दन्ड्योपि यथा प्रकृतादर्थान्नहीयते एवं सर्वेष्वर्थविवादेषु (In these प्रमादाभिधान

does not necessirily lead to पराजय )। अर्थं विवादग्रहणात् मन्युकृतविवादेषु प्रमादाभिधाने प्रकृतादप्यर्थाद्धीयते ( in provocative quarrels प्रमादाभिधान leads to पराजय or defeat ) इति गम्यते। यथा—अहमनेन शिरसिपादेन ताड़ित इत्यावेदनसमये अभिधाय भाषाकाले "पादेन हस्ते ताड़ित इति वदन् न केवलंदण्ड्यः, पराजीयते च ॥ ९ ॥

CHARCHA

1. अनिस्तीर्य्य—नि+स्तृ ( क्र्यादि )+ल्यप=निस्तीर्य्य having crossedover or tided over. न निस्तीर्य ।

2. प्रत्यभियोजयेत्—प्रति+अभि+युज+णिच् लिङयात् । Nom. प्रत्यर्थी etc. understood.

3. नयेत्—नी+लिङ+यात् । Nom. वादी &c. understood. नी is द्विकर्मकम् । Here उक्तम् ( उक्तं वस्तु ) is प्रधान कर्म, and विप्रकृतिं ( विरुद्धप्रकृति वा विरुद्धभाव ) is अप्रधानकर्म । One should not later contradict the statement made during filing a suit.

10. Exception as regards counter complaints said before.

कुर्य्यात्प्रत्यभियोगं च कलहे साहसेषु च ।
उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्य्यनिर्णये ॥ १० ॥

Prose—( आनीताभियोगमनिस्तीर्य्यापि ) कलहे ( वागदण्डपारुष्ययुक्ते कलहे ) साहसेषु ( शस्त्रादिनिमित्तव्यापादनादिषु ) च, ( सद्यएव ) प्रत्यभियोगं ( अभियोक्तारं प्रतिअभियोगं ) कुर्य्यात् । ( ततः ) उभयोः ( अर्थिप्रत्यर्थिनोः) कार्य्यनिर्णये ( दण्डदानादिव्यापारे ) समर्थः प्रतिभूः ( प्रतिनिधिः—"यामिन" इतिभाषा ) ग्राह्यः ( सभ्यैः स्वीकार्य्यः ) ।

Beng. যদি কলহ উপস্থিত হয়, বা শস্ত্রাদিদ্বারা হননোপক্রম ঘটে তবে ( আনীত অভিযোগ উত্তীর্ণ না হইলেও ) অভিযুক্তব্যক্তি



প্রত্যভিযোগ করিতে পারিবেন। এবং তখন উভয় পক্ষের দণ্ডাদি কার্য্য নির্ণয়ে উপযুক্ত যামিন বা মধ্যস্থ, ( সভ্যগণই ) ঠিক্ করিয়া দিবেন।

Eng. But in the matter of severe quarrels or in the matter of killing by some weapon, an accused person is entitled to bring or file a counter complaint ( though his previous charge has not been tidedover ) ; and in such cases the royal councillors will appoint some arbitrator able to decide punishment etc. in the matter.

Mita—"अभियोगमनिस्तीर्य्य" इत्यस्यापवादमाह—'कलहे' वागदण्डपारुष्यात्मके, "साहसेषु" विषशस्त्रादिनिमित्तव्यापादनादिषु प्रत्यभियोगसम्भवे पूर्वाभियोगमनिस्तीर्य्यापि अभियोक्तारं "प्रत्यभियोजयेत्" । [ननु अत्रापि पूर्वपक्षानुपमर्दनरूपत्वेन अनुत्तरत्वात् प्रत्यभियोगस्य प्रतिज्ञान्तरत्वे युगपद्व्यवहारासम्भवः समानः । सत्यम् । नात्रयुगपद् व्यवहाराय प्रत्यभियोगोपदेशः, अपितु न्यूनदण्डप्राप्तये अधिकदण्डनिवृत्तये वा । तथाहि—"अनेनाहं ताड़ितः शप्तोवा" इत्यभियोगे "पूर्वमहनेन ताड़ितः शप्तोवा इति प्रत्यभियोगे दण्डाल्पत्वम् । यथाह – नारदः—"पूर्वमाक्षारयेत् ( क्षीणंकुर्य्यात् ) यस्तु नियतं स्यात् स दोषभाक् । पश्चाद्यः सोप्यसत्कारी, पूर्वे तु विनयो ( दण्डः ) गुरुः" । इति । यदापुनर्द्वयोर्युगपत् ताड़नादिप्रवृत्तिस्तत्राधिकदण्डनिवृत्तिः—"पारुष्ये साहसे वापि युगपत्संप्रवृत्तयोः । विशेषश्चेन्न लभ्येत विनयः ( दण्डः ) स्यात् समस्तयोः" । एवं युगपद्व्यवहारप्रवृत्त्यसम्भवेपि कलहादौ प्रत्यभियोगोर्थवान् ऋणादानादिषु तु निरर्थक एव (Thus simultaneous suit being inadvisible and inconsistant here, the advice of प्रत्यभियोग in कलह etc. is significant but not so in taking or realising debts etc.) ॥] ।

अर्थिप्रत्यर्थिनोर्विधिमुक्त्वा ससभ्यस्य सभापतेः कर्त्तव्यमाह—'उभयोः' अर्थिप्रत्यर्थिनोः सर्वेषु विवादेषु निर्णयस्य कार्य्यं="कार्य्यनिर्णयः"

[ "आहिताग्न्यादिषु" पाठात् कार्य्यशब्दस्य पूर्वनिपातः ( ? ) ]। निर्णयस्य यत् कार्य्यं साधितधनदानं दण्डदानं च तस्मिन् "समर्थः प्रतिभूः" प्रतिभवति तत्कार्य्यं तद्द्भवतीति "प्रतिभूर्ग्राह्यः" ससभ्येन सभापतिना। तस्यासंम्भवे अर्थिप्रत्यर्थिनो रक्षणे पुरुषा नियोक्तव्याः। तेभ्यश्चताभ्यां प्रतिदिनं वेतनं देयम्। यथाह कात्यायनः—"अथचेत् प्रतिभूर्नास्ति कार्य्ययोग्यस्तुवादिनः। स रक्षितो दिनस्यान्ते दद्याद्भृत्याय वेतनम्" इति॥ १०॥

## CHARCHA

1. कुर्य्यात्—कृ+लिङ्यात्। Nom. अभियुक्तः जनः understood.

2. प्रतिभूः—प्रति+भू+क्किप् कर्त्तरि। one who stands for **others**; both as representative and guarantor (प्रतिनिधि वा जामिन)। उक्तकर्म of ग्राह्यः। सभ्यैः प्रतिभूः ग्राह्यः। This प्रतिभू **should** be a fit one (समर्थ) in कार्य्यनिर्णय (determination of **procedure**). कार्य्य is procedure, निर्णय=settling or determining. Both कार्य्य and निर्णय may be विशेष्य and विशेषण। so expound—कार्य्यस्य निर्णयः ६तत्। Mita says—निर्णयस्य कार्य्यम्, कार्य्यनिर्णयः and supports पूर्वनिपात of the word कार्य्य by the **rule** "वाहिताग्न्यादिषु"। But this is unsound. First of all, **this** regulates पूर्वनिपात in बहुव्रीहि and not in तत्पुरुष as here; **then** though आहिताग्न्यादि class is आकृतिगण (an open list), **still** the words are all there with निष्ठान्त words; for it **is an** exception of the rule "निष्ठा" i. e., निष्टान्तं बहुव्रीहौ पूर्वं स्यात्; and "वाहिताग्न्यादिषु" is the next rule; so it is **with** ref. to both बहुव्रीहि and क्तान्त words। But here कार्य्य is **ण्यन्त not a** क्तान्त word and the समास in Mita is षष्ठीतत्। **So Vijnaneshwara's** ref. here to आहिताग्नि class is wrong,



11. In such complaints punishments will be **given** for false sayings or false complaints.

निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम्।
मिथ्याभियोगी द्विगुणमभियोगाद्धनं हरेत्॥ ११॥

Prose—निह्नवे (प्रत्यर्थिना सत्यापलापे सति) भावितः (**साक्ष्यादिभिः** प्रमाणीकारितः प्रत्यर्थी) अर्थिने धनं (अभियुक्तंधनं) दद्यात्, राज्ञे च तत्सम (समानं) दण्डस्वरूपं धनं दद्यात्। मिथ्याभियोगी च अभियोगात् **द्विगुणं** धनं हरेत् (दण्डस्वरूपं धनं राज्ञे दद्यात्)।

Beng. প্রত্যর্থী যদি সত্যের অপলাপ করে, তবে **সাক্ষ্যাদিদ্বারা** প্রমাণীকারিত প্রত্যর্থী, অর্থীকে অভিযুক্ত ধন ত দিবেনই, **দণ্ডস্বরূপ** রাজাকেও তুল্য পরিমাণ ধন দিবেন। আর যদি অভিযোগ **মিথ্যা** প্রমাণিত হয়, তবে মিথ্যাভিযোগী অর্থী অভিযোগ বিষয়ের **দ্বিগুণ** ধন দণ্ডস্বরূপ রাজাকে দিবেন।

Eng. In case of denial by a defendant in a suit, if it is proved to be true by witnesses, documents etc, **then** the defendant is to give the demanded money to **the** plaintiff, also an equal amount to the king, as **punishment**, but if the suit be false then the plaintiff is to pay to **the** king twice the sum (mentioned in the plaint) as **penalty** (for instituting a false case).

Mita—अर्थिप्रत्यर्थिनोनिर्णयकार्ये ससभ्येन सभापतिना प्रतिभूर्ग्राह्य इत्युक्तं किं तन्निर्णयकार्य्यं यस्मिन् प्रतिभूर्गृह्यते इत्यपेक्षिते आह—अर्थिना **निवेदित**स्याभियोगस्य "प्रत्यर्थिनापह्नवे कृते" यदार्थीना साक्ष्यादिभि-'**भावितः**' **अङ्गीकारितः प्रत्यर्थी, तदा "दद्याद्धनं" प्रकृतमर्थिने, "राज्ञे च तत्समम्"**

अपलापदण्डम् । अथार्थी भावयितुं न शक्नोतितदा स एव "मिथ्याभियोगी जात" इत्यभियोगात् द्विगुणं धनं दद्यात् राज्ञे । [ प्राङ्न्याये प्रत्यवस्कन्दने च इदमेव योजनीयम् । ] तत्र अर्थ्येव अपह्नववादी प्रत्यर्थिना भावितो राज्ञे प्रकृतधनसमं दण्डं दद्यात् । अथ प्रत्यर्थी प्राङ्न्यायं कारणं वा भावयितुं न शक्नोति तदा स एव मिथ्याभियोगीति राज्ञे द्विगुणं धनं दद्यात् । अर्थिने च प्रकृतं धनम् । संप्रतिपत्त्युत्तरे तु दण्डाभाव एव । एतच्च ऋणादानविषयमेव । पदान्तरेषु (in other व्यवहारs) तत्र तत्र दण्डाभिधानात् अधनव्यवहारेषु अस्य असंभवाच्च न सर्वविषयत्वम् । "राज्ञा अधमर्णिकोदाप्यः" (sl 42) इत्यस्य ऋणादानविषयत्वेपि तत्रैव विशेषं वक्ष्यामि । यद्वा—एतदेव सर्वव्यवहार-विषयत्वेनापि योजनीयम् (or this concerns all varieties of व्यवहारपद) । कथम् ?—अभियोगस्य निह्नवे अभियुक्तेन कृते यद्यभियोक्ता साक्ष्यादिभिर्भावितोभियुक्तस्तदा तत्सम तत्र तत्र प्रतिपदोक्तम् एव । चशब्दोवधारणे । धनं दण्डं दद्याद्राज्ञे इत्यनुवादः । अथाभियोक्ता अभियोगं भावयितुं न शक्नोति तदा "मिथ्याभियोगी" इति प्रतिपदोक्तं धनं दण्डं द्विगुणं दद्यादिति विधीयते । अत्रापि प्राङ्न्याये प्रत्यवस्कन्दने च पूर्ववदेव योजनीयम् ॥ ११ ॥

## CHARCHA

1. निह्नवे—नि+ह्नु+अप्=निह्नव denial, तस्मिन् । भावे ७मी ।

2. भावितः—भू+णिच्+क्त कर्मणि । Made to be proved by **साक्षिन्** &c. Refers to प्रत्यर्थी । He is to give the amount complained of to the अर्थी and an equal amount to the king as penalty.

3. **अभियोगात्—अधिकार्थे द्विगुणशब्दयोगे ५मी ।** See under **"विवादात् द्विगुणं धनम्"**—sl. 4.



4. हरेत्—हृ+लिङ्यात् । used in the sense of प्रापण । **Should** pay as penalty. Nom. मिथ्याभियोगी ( अर्थी ) । वहेत् is also the reading here.

12. The defendant's reply should be made immediate in some cases.

साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियाम् ।
विवादयेत् सद्य एव कालोन्यत्रेच्छया स्मृतः ॥ १२ ॥

Prose—साहस-स्तेय-पारुष्य-गो-अभिशाप-अत्यये स्त्रियाम् ( विषये ) सद्य एव विवादयेत् ( उत्तरं दापयेत् ) । ( अस्य विवादविषये ) कालः ( उत्तरदानकालः ) इच्छयावा ( अर्थि-प्रत्यर्थि-सभ्यादीनाम् इच्छया ) स्मृतः ।

Beng—বিষশস্ত্রাদিনিমিত্ত হনন, চৌর্য্য, বাকদণ্ডপারুষ্য, দুগ্ধবতী গাভী, পাতকের অভিযোগ, ধনপ্রাণের নাশ শঙ্কায় এবং কুলস্ত্রী বা দাস-দাসীসম্বন্ধে বিবাদ বিষয়ে কালক্ষেপ না করাইয়া প্রতিবাদীকে উত্তর দেওয়াইতে হইবে। অন্য বিবাদবিষয়ে অর্থিপ্রত্যর্থি ও সভ্যদের ইচ্ছাধীন উত্তর দেওয়াইবে।

Eng. In matters of slaughter by weapons, theft, quarrels, in milch cow, in commission of crimes in loss of money or life, of women too, the reply should be made to be given there and then, but in other matters, it depends on the will of the parties or councillors.

Mita—ततः "अर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधनम् (sl. 7) इति वदता उत्तरपादलेखने कालप्रतीक्षणं दर्शितं, तत्रापवादमाह—"साहसं" विषशस्त्रादि-निमित्तं प्राणव्यापादनादि, "स्तेयं" चौर्य्यं 'पारुष्यं वाग्दण्डपारुष्यं वक्ष्यमाण लक्षणं, "गौ" दोग्ध्री, "अभिशापः" पातकाभियोगः, 'अत्ययः' प्राणधनादिपातः । तस्मिन् द्वन्द्वैकवद्भावाद् एकवचनम् । "स्त्रियां" कुलस्त्रियांदास्यां च (कुलस्त्रियां दास्यां च चारित्रविवादे, दास्यां स्वत्वविवादे ) "विवादयेत्"

उत्तरं दापयेत् सद्यएव, न तत्रकालप्रतीक्षणं कर्त्तव्यम् । "अन्यत्र" विवादान्तरेषु," "कालः" उत्तरदानकालः "इच्छया" अर्थिप्रत्यर्थिसभ्य-समापतीनाम् इच्छया स्मृत उक्तः ॥

## CHARCHA

1. साहस etc—for meanings see Mita & Tran. Here समाहारैकत्व comes by the dictum "सर्वो द्वन्द्वो विभाषा एकवद् भवतीति वाच्यम्" । विषयाधिकरणे ७मी ।

2. विवादयेद—वि+वद+णिच्+लिङ्यात् । should cause to give reply. Nom. सभ्यादिजनः &c. understood.

13-15. A bad person who is unfit for a suit is known by such signs.

देशाद्देशान्तरं याति सृक्किणी परिलेढ़ि च ।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥ १३ ॥
परिशुष्यद्स्खलद्वाक्यो विरुद्धं बहुभाषते
वाक्चक्षुः पूजयति नो तथौष्टौ निर्भुजत्यपि ॥ १४ ॥
स्वभावात् विकृतिं गच्छेन्मनोवाक्कायकर्मभिः ।
अभियोगेथ साक्ष्ये वा दुष्टः स परिकीर्त्तितः ॥ १५ ॥

Prose—यः देशात् देशान्तरं याति, सृक्किणी ( ओष्ठप्रान्तौ ) परिलेढ़ि च, यस्य ललाटं स्विद्यते ( स्वतः एव घर्मयुक्तं भवति ), मुखं चास्य वैवर्ण्यम् एति यः परिशुष्यद् स्खलद्वाक्यः ( सन् ) विरुद्धं बहुभाषते, परस्य वाक्चक्षुः नो ( न ) पूजयति, तथा ओष्ठौ निर्भूजति ( वक्रयति ), यश्च स्वभावात् मनोवाक्कर्मभिः विकृतिं गच्छेत् स ( जनः ) अभियोगे साक्ष्ये वा दुष्टः परिकीर्त्तितः ( बुधैः ) ॥

Beng. যে এক দেশ হইতে অন্য দেশে কেবলই যাইতে থাকে, ওষ্ঠপ্রান্ত জিহ্বাগ্রদ্বারা চাটে, যার ললাট স্বত ঘর্মযুক্ত হয়, মুখ বিবর্ণতা



প্রাপ্ত হয়, যে স্খলদ্‌বাক্যে ও বিচ্যুতবাক্যে বহু বিরুদ্ধ কথা বলে, পরের বাক্যের উত্তর দেয় না বা চক্ষুর প্রতি উপযুক্ত সম্মান প্রদর্শন করে না, নিজ ওষ্ঠ নিয়ত বক্র করে, যে স্বভাববশতঃ মন বাক্য ও কর্মে নিয়ত বিকৃতি প্রাপ্ত হয়, সে লোক মামলা করিবার বা সাক্ষ্য দিবার উপযুক্ত হয় না ।

Eng. The person who goes or wanders from one country to another ( i. e, is always on the go ), licks the corners of lips by his tongue-tip, whose forehead naturally perspires, face attains paleness, who talks much incoherently with faltering words, does not pay heed to others words or eyes, curves his lips, and by nature shows unnaturalness of mind, speech or action, is regarded as bad or unfit for filing complaint or for witness,

Mita—"मनोवाक्कायकर्मभिः" यः स्वभावादेवं न भयादिनिमित्तात "विकृतिं विकारं याति" गच्छति असौ "अभियोगे साक्ष्ये वा दुष्टः परिकीर्त्तितः बुधैः । तां विकृतिं विभज्यदर्शयति—"देशाद्देशान्तरं याति" न क्वचिदवतिष्ठते "सृक्किणी" औष्ठप्रान्तौ "परिलेढ़ि" जिह्वाग्रेण स्पर्शयति ( ? स्पृशति ) घट्टयति इति कर्मविकृतिः । अस्य "ललाटं स्विद्यते" स्वेदबिन्दुङ्कितं भवति, "मुखञ्च वैवर्ण्यं" विवर्णत्वम् पाण्डुत्वं कृष्णत्वं वा "एति" गच्छतीति कार्यस्य विकृतिः । "परिशुष्यद्स्खलद्वाक्यः" परिशुष्यत् सगदगदं स्खलद् व्यत्यस्तं वाक्यं यस्य स तथोक्तः । "विरुद्ध" पूर्वापरविरुद्धं "बहु च भाषते" इति वाचोविकृतिः । परोक्तां वाचं प्रतिवचनदानेन "न पूजयति", चक्षुर्वा प्रतिवीक्षणेन "न पूजयति" इति मनसो विकृतिर्लिङ्गम् । तथा "ओष्ठौ निर्भूजति" वक्रयति इत्यपि कायस्य विकृतिः । [ एतच्चदोष—सम्भावनामात्रमुच्यते, न दोषनिश्चयाय । स्वाभाविक-नैमित्तिक विकारयोर्विवेकस्य दुर्विज्ञेयत्वात् । अथ कश्चित् निपुणमतिविवेकं प्रतिपद्येत तथापि न पराजयनिमित्तं कार्य्यं भवति । नहि मरिष्यतो लिङ्गदर्शनेन मृतकार्य्यं कुर्वन्ति । एवमस्य पराजयो भविष्यतीति लिङ्गादवगतेपि न पराजयनिमित्त—कार्य्यप्रसङ्गः (1) ] ॥

## NOTES ON MITA.

1. All this is said by way of probability of दोष in such a person and not for surety of दोष in him for these may be natural or due to some cause—and it is very difficult to divine real fact; even if a keen-witted discovers the real fact, still then there should be no procedure of defeat; none does funeral rites of a dying one; so though पराजय of such a person is determined by outward signs, still question of defeat-procedure cannot be adopted beforehand.

### CHARCHA

1. देशात्—अपादाने ५मी ॥ अन्यः देशः देशान्तरम्, मयूरव्यं सकादित्वात् समासः।

2. परिलेढ़ि—परि+लिह+लटति। Licks. सृक्कि is ओष्ठप्रान्त, is neuter and is declined—like वारि। dual here; obj. of परिलेढ़ि।

3. स्विद्यते—स्विद दिवादि+लटते कर्म कर्त्तरि। For स्विद is परस्मैपदी।

4. वाक्चक्षुः—वाक्सहितं चक्षुः, शाकपार्थिवादितत्। वा वाक् च चक्षुश्च, प्राण्यङ्गत्वं प्रकल्पयं, समाहारद्वन्द्व। obj. of पूजयति। वाक्पूजन is by giving reply; and चक्षुपूजन is to give honour when one's eye falls on another; not to do or observe such etiquette is a sign of मनोविकार।

5. निर्भूजति—निस्+भूज कौटिल्ये तुदादि+लट् ति।

6. मनोवाक् &c—द्वन्द्व। करणे ३या।





16. A bad judge and a bad defendant are to be punished.

सन्दिग्धार्थं स्वतन्त्रो यः साधयेत् यश्च निष्पतेत्।
न चाहूतो वदेत् किञ्चिद्धीनो दण्ड्यश्च स स्मृतः॥ १६॥

Prose—यः (सभ्यः विचारको वा) स्वतन्त्रः सन् (विचारं सम्यगकृत्वा) सन्दिग्धार्थं (अधमर्णेनास्वीकृतं वस्तु) साधयेत् (साध्यत्वेन गृह्णीयात्), यः (प्रत्यर्थी) निष्पतेत् (स्थिरीकृतमर्थं अदत्त्वा पलायेत), यश्च आहूतः (उपस्थितः अभियुक्तः) किञ्चित् न वदेत्—एष सर्वः हीनः (सत्यन्यायविषयात् हीयते इति हीनः, न्यायहीन इत्यर्थः) दण्ड्यश्च स्मृतः।

Beng.—যে সভা বা বিচারক বিচারব্যাপার অপেক্ষা না করিয়া বা সম্যক্ বিচার না করিয়া অধমর্ণকর্ত্তৃক অস্বীকৃত অর্থ বা বিষয় সত্য বলিয়া স্থাপন করেন, তিনি হীন (ন্যায়হীন), যে প্রত্যর্থী প্রমাণিত অর্থাদি না দিয়া পলায়ন করে সেও হীন (ন্যায় হীন), আর যে অভিযুক্ত আদালতে আহূত হইয়া কিছুই না বলে সেও হীন (ন্যায়হীন)। এরা দণ্ডযোগ্য বলিয়া কথিত হয়।

Eng.—That councillor or Judge who establishes a debatable (doubtful) conclusion without rightly considering it, is a bad one; a defendant that does not pay the proved sum etc. but flies off is also a bad one; and a summoned (accused) one who does not say anything by way of a reply in the court is also a bad one; these are regarded as punishable too.

Mita—किञ्च "सन्दिग्धमर्थम्" अधमर्णेन अनङ्गीकृतमेव "यःस्वतन्त्रः" साधननिरपेक्षः "साधयेत्" आसेधादिना "स हीनोदण्ड्यश्च" भवति। "यश्च स्वयं प्रतिपन्न" साधनेन वा साधितं याच्यमानो निष्पतेत् "पलायेत,"

यश्चाभियुक्तो, राज्ञा आहूतः" सदसि न किञ्चिद्वदति "सोपिहीनो दण्ड्यश्चस्मृत" इति सम्वध्यते। "अभियोगे साक्षेर वा दुष्टः स परिकोर्त्तितः,' इति प्रस्तुतत्वात् हीनपरिज्ञानमात्रमेव माभूत्, इति "दण्ड्य"—ग्रहणम्। दण्ड्यस्य चापि "शास्योऽप्यर्थाद्धीयते" इत्यर्थादहीनत्वदर्शनादत्र तन्मामूदिति हीनग्रहणम्।

CHARCHA

1. साधयेत्—साधि i. e, साध + णिच् लिङ्यात्। should establish or say as right ; or सिध दिवादि + णिच् लिङ्यात्=साधयेत् (सिध becomes साध by आत्व added in णिच् by the rule" सिध्यतेरपारलौकिके" for here there is no reference to पारलौकिक matter). Nom. यः i. e. यः सभ्यः वा विचारकः।

2. स्वतन्त्र :— It means without regard to proper विचार। Pred. to यः।

3. सन्धिग्धार्थम्—a doubtful matter. obj. of साधयेत्।

4. निष्पतेत्—निस्+पत + लिङ्यात्। Nom. यः। Should fly off or abscond.

5. आहूतः—आ+ह्वे +क्त कर्मणि। A summoned accused. These are हीन i. e.. न्यायहीन। And these are दण्ड्यः too. These are both हीन and दण्ड्य।

17. Mode of Examination of witnesses in case of simaltaneous claim for a land or property.

साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः
पूर्व्वपक्षेधरीभूते भवन्त्युत्तरवादिनः ।। १७।

Prose – (एकस्मिन् विषये) उभयतः वादिनोः साक्षिषु सत्सु, पूर्ववादिनः (पूर्वं मयाभुक्तमितिवादिनः) प्रष्टव्याः। तस्मिन् पूर्वपक्षे अधरीभूते (दुर्व्वलीभूते) उत्तरवादिनः (उत्तरकाले मयाभुक्तमितिवादिनः) साक्षिणः (प्रष्टव्याः) भवन्ति।



Beng—একই সম্পত্তি বিষয়ে দুই পক্ষের যুগপৎ দাবী উপস্থিত হইলে, পূর্ব্ববাদীর (প্রথম আমার ছিল এই বাক্য বাদীর) সাক্ষীগণকে প্রথমে জিজ্ঞাসা করিবে। পূর্ব্বপক্ষের দাবী দুর্ব্বল হইলে, উত্তরপক্ষ (বা পরে আমার হইল এইরূপ বাদীর) সাক্ষিসমূহকে প্রশ্ন করিবে বা এবিষয়ে জিজ্ঞাসা ও জেরা করিবে।

Eng.—In case of simultaneous claim of two parties for a property, the witness of the first claimer should be examined ; his case being weak the witness of the second claimer (उत्तरवादिन्) should be examined.

Mita—अथ यत्रद्वावपि युगपद्धर्माधिकरणं प्राप्तौभापावादिनौतदयथा—कश्चित् प्रतिग्रहेण क्षेत्रंलब्धा कश्चित्कालमुपभुज्य कार्यवशात् सकुटुम्वो देशान्तरं गतः। अन्योपि तदेव क्षेत्रं प्रतिग्रहेण लब्ध्वा कश्चित्कालमुपभुज्य देशान्तरं गतः। ततो द्वावपि युगपदागत्य "मदीयमिदंक्षेत्रं मदीयमिदंक्षेत्रम्" इति परस्परं बिबदमानौ धर्माधिकरणं प्राप्तौ, तत्र कस्य क्रिया (साधनंस्यात्) इत्याकाङ्क्षायामाह—'उभयतः' उभयोरपि "वादिनोः' पक्षयोः "साक्षितुसत्सु, पूर्ववादिनः (—"पूर्वस्मिन् काले मया प्रतिगृहीतमुपभुक्तञ्च" इति योबदत्यसौ पूर्ववादी, न पुनर्यःपूर्वं निवेदयति तस्य) "साक्षिणः प्रष्टव्याः"। यदात्वन्य एवंवदति—"सत्यमनेन पूर्वं गृहीतमुपभुक्तञ्च किन्तु राज्ञा इदमेव क्षेत्रमस्मादेव क्रमेणलब्धा मह्यंदत्तम्" इति तत्र पूर्वपक्षः असाध्यतया अधरीभूतः। तस्मिन् "पूर्वपक्षे अधरीभूते" उत्तरकालं प्रतिगृहीतमुपभुक्तञ्च इति वादिनः कथयतः साक्षिणः प्रष्टव्याः भवन्ति।

इदमेव व्याख्यानं युक्ततरम्। मिथ्योत्तरे पूर्ववादिनः साक्षिणो भवन्ति॥ प्राक्न्यायकारणोक्तौ पूर्वपक्षे धरीभूते उत्तरवादिनः साक्षिणो भवन्तीति व्याख्यानमयुक्तम्। अस्यार्थस्य "ततोर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्" (sl. 7) इत्यनेनैवोक्तत्वात् पुनरुक्तिप्रसङ्गात्॥

पूर्वव्याख्यानमेव स्पष्टीकृतं नारदेन—"मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि। प्राङ्न्यायविधिसिद्धौ तु जयपत्रं क्रिया भवेत्।" इत्युक्त्वा "द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु। पूर्वपक्षो भवेद् यस्य भवेयुस्तस्य साक्षिणः" इति वदता। एतस्य च पूर्वव्यवहारविलक्षणत्वात् भेदेनोपन्यासः ॥

## CHARCHA

1. उभयतः—उभययोः इति उभय+तसि (आद्यादि)=उभयतः i. e, उभयपक्षयोः। Qual. वादिनोः understood। वादिनोः has शेषे षष्ठी ॥ साक्षिषु—भावे ७मी।

2. पूर्ववादिनः—पूर्ववादिन् is one who claims that he enjoyed the property first. See Mita. तस्य। शेषे ६ष्ठी, related to साक्षिणः ॥ पूर्वपक्षे has भावे ७मी ; पूर्वपक्षे अधरीभूते दुर्बलेसति।

3. उत्तरवादिनः – This refers to one who says lator—I got the property in a legal way. शेषे ६ष्ठी। construe—उत्तरवादिनः साक्षिणः भवन्ति i. e, प्रष्टव्या भवन्ति।

18. In a litigation with pledge of money, the defeated should pay a sum also as penalty.

सपणश्चेद् विवादःस्यात् तत्र हीनं तु दापयेत्।
दण्डं च स्वपणं चैव धनिने धनमेव च ॥ १८ ॥

Prose—चेत् (यदि) सपणः विवादः स्यात् तत्र हीनं (न्यायहीनं= पराजितं प्रतिवादिनं) च दण्डं स्वपणं दापयेत्। धनिने (अर्थिने) (केवलं) धनमेव च दापयेत्।

Beng আর যদি পণ করিয়া বিবাদ উপস্থিত হয়, তবে হারিলে হীন বা পরাজিত প্রতিবাদী স্বপণের মূল্যানুরূপ রাজাকে



(মিথ্যাকথনের জন্য) দণ্ড দিবে। অর্থীকে কেবল পণীকৃত ধনই দিতে হইবে।

Eng. If the suit be with some pledge of money, then the defeated defendant is to pay penalty equal to the pledged money—to the king and only money to the plaintiff (अर्थी) [ N. B.—penalty (for false statement) is to be given to the king. ]

Mita.—अपि च, यदि "विवादः व्यवहारः सपणः" (पणनं पणः। तेन सह वर्त्तते इति सपणः) स्यात्, तदा तत्र तस्मिन् सपणे व्यवहारे "हीनं" पराजितं पूर्वोक्तं दण्डं स्वकृतं पणं राज्ञे, अर्थिने च विवादास्पदीभूतं धनं दापयेत् राजा ॥

यत्र पुनरेकः कोपावेशवशात्—"यद्यहमत्र पराजितो भवामि तदा पणशतं दास्यामि" इति प्रतिजानीते, अन्यस्तुन किञ्चित् प्रतिजानीते तदापि व्यवहारः प्रवर्त्तते। तस्मिन् च प्रवृत्ते पणप्रतिज्ञावादी यदि हीयते तदा स एव सपणं दण्डं दाप्यः। अन्यस्तु पराजितो दण्डं दाप्यः न पणम्। "स्वपणं" इति विशेषोपादानात् यत्र त्वेकः शतम् अन्यस्तु पञ्चाशतं प्रतिजानीते, तत्रापि पराजये स्वकृतमेव पणं दाप्यौ। [ "सपणश्चेदविवादः स्यात्" इति वदता पणरहितोपि विवादो दर्शित इति ] ॥ १८ ॥

## CHARCHA

1. सपणः – पणः is pledge or pledge-money. पणेन सहवर्त्तमान =सपणः वा सहपणः। Qual. विवादः।

2. हीनम्—हीन is a पराजित person. obj. of दापयेत् ॥ दा+णिच्+ लिङ् यात्—shall cause to give. Nom. प्राड्विवाकः etc. understood, हीनः धनिने धनं ददाति=प्राड्विवाकः हीनं धनिने धनं दापयेत् (in णिच्) ॥ see sl. 20 also.

3. दण्डं स्वपणं—obj. of दापयेत् ॥ दण्ड is penalty here for मिथ्योक्ति। The defeated one is to pay दण्ड equal to स्वपणमूलधन to the king. And he is to pay पणीकृतधन to the धनिन् वा अर्थिन्। See Mita. construe—स्वपणं स्वपणस्वरूपं दण्डम्।

19. The king is to dispose of a suit in the line of truth (i.e stated fact.)

छलं निरस्य भूतेन व्यवहारान् नयेन्नृपः।
भूतमप्यनुपन्यस्तं हीयते व्यवहारतः ॥ १९ ॥

Prose—नृपः छलं निरस्य भूतेन (सत्यतत्त्वानुसारेण) व्यवहारान् (विवादान्) अन्तं नयेत्। भूतमपि (सत्यघटनमपि) अनुपन्यस्तं सत व्यवहारतः (व्यवहारेण) हीयते (हानियुक्तं भवति)।

Beng. রাজা মিথ্যা ছলনাদি বিদূরিত করিয়া প্রকৃত (সত্য) তথ্যানুসারে মামলার নিষ্পত্তি করিবেন। এবং কোন মামলায় যদি কোন সত্য ঘটনা উপস্থাপিত না করা হয় বা প্রমাণিত না হয়, তবে তাহা ব্যবহারে বা মামলার বিচারের বহির্ভূত থাকিবে।

Eng. The king should end a suit according to true facts by weeding out (or eradicating) all lies or fabrications; and a true fact if not placed or if not proved in a suit will be left out of consideration i. e, this shall not come within the compass of litigation and justice.

Mita.—किञ्च 'छलं' प्रमादाभिहितं (false statements) 'निरस्य' 'भूतेन' वस्तुतत्त्वानुसारेण 'व्यवहारान् नृपः अन्तं नयेत्'। "तस्मात् भूतमपि अनुपन्यस्तम्" अनभिहितं "हीयते" हानिं गच्छति "व्यवहारतो" व्यवहारेण साक्ष्यादिभिः। तस्माद्भूतानुसरणं कर्त्तव्यम् ॥ यथाअर्थिप्रत्यर्थिनौ सत्यमेव



वदतस्तथा ससम्येन सभापतिना यतितव्यं सामादिभिरुपायैः। तथा सति साक्ष्यादिनैरपेक्ष्येण निर्णयो भवति। अथ सर्वथापि भूतानुसरणं न शक्यते कर्त्तुम्, तथा सति साक्ष्यादिभिर्निर्णयः कार्य्य इत्यनुकल्पः। यथोक्तम—भूतच्छलानुसारित्वाद् द्विगतिः समुदाहृतः। "भूतं तत्त्वार्थसंयुक्तं, प्रमादाभिहितं छलम्" इति [ भूत is that which is stated with true facts, and छल is that said with lies वा प्रमाद ] ॥ तत्र भूतानुसारी व्यवहारो मुख्यः छलानुसारीत्वनुकल्पः (=a secondary course or substitute) साक्षिलेख्यादिभिर्व्यवहारनिर्णये कदाचिद् वस्त्वनुसरणं भवति, कदाचिन्न भवति, साक्ष्यादीनां व्यभिचारस्यापि (अयथार्थवादित्वस्य) सम्भवात् ॥ १९ ॥

## CHARCHA

1. छलम्—obj. of निरस्य। छल is here "lie". निर्+अस (क्षेपे दिवादि)+ल्यप्=निरस्य having set aside.

2. भूतेन—भूत is truth here. करणे ३या। For भूत meaning सत्य, cp—"भूतार्थव्याहृतिरेषा न स्तुतिः परमेष्ठिनः"—Raghu.

3. नयेत्—नी+लिङ्यात्। Nom. नृपः। नी is द्विकर्मक, here प्रधानकर्म is "अन्तम्" understood, and अप्रधानकर्म is व्यवहारान्। See "व्यवहारान् नयेदन्तं नृपः"—Mita.

4. अनुपन्यस्तम्—उप+नि+अस+क्त कर्मणि=उपन्यस्तम् placed or stated. न तथा=अनुपन्यस्तम्। Adj. qual. भूतम्। Secondarily it may mean अप्रमाणितम् with stretch of imagination. Prefer former meaning see sl. 20. "न ग्राह्यस्त्वनिवेदितः"।

5. हीयते—हा+लट ते कर्मकर्त्तरि। is left out of consideration. Nom. भूतम्। For a similar use and for details, see "यावन्मानात् न हीयते"—Kirat XI. sl. 61 and "स्वर्गाद् हीयते" in Sid-Kau. under the rule "अपादाने चाहीयरुहोः"।

6. व्यवहारतः---This is same as व्यवहारेण having करण ३या। Here तृतीयान्तात् तस् comes by the rule "हीयमान पापयोगाच्च" and here there is connection with someform of हा (हीयमान)।

20. If one item in a suit is proved, then the whole is to be taken as true.

निह्नुते लिखितं नैकमेकदेशेविभावितः।
दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः॥ २०॥

Prose---यदि प्रत्यर्थी लिखितं नैकम् (अर्थात् सर्वम्) निह्नुते (अपलपति, न स्वीकुरुते) किन्तु यदि एकदेशे विभावितः (साक्ष्यादिभिः प्रमाणितः) स्यात्, तदा नृपेण अर्थी सर्वमर्थं दाप्यः। (आवेदनकाले, भाषाकाले) अनिवेदितः विषयः नृपेण न ग्राह्यः।

Beng. প্রত্যর্থী যদি মাম্‌লায় লিখিত সবই অস্বীকার করে, কিন্তু লিখিত বিষয়ের একদেশ বা একটি বিষয়ে যদি সাক্ষ্যাদির দ্বারা প্রমাণিত হয়, তখন রাজা ঐ একাংশ সত্য ধরিয়া বাদীর অভিযুক্ত সমস্ত বিষয়ই প্রতিবাদী বা প্রত্যর্থীদ্বারা দেওয়াইবেন। কিন্তু ভাষাকালে যাহা নিবেদিত হয় নাই, তাহা পরে জানাইলেও নৃপতি তাহা গ্রাহ্য করিবেন না।

Eng.---If a defendant denies all the items complained of (in the plaint) but if one item is proved by witness etc, then the king will compel the defendant to pay to the plaintiff all the items complained of; but nothing else will be accepted to be genuine if not already stated during petition.



Mita---"भूतमप्यनुपन्यस्तं हीयते व्यवहारत" (sl. 19) इत्यत्रोदाहरणमाह---"नैकम्" अनेकं सुवर्णरजतवस्त्रादि लिखितम् अभियुक्तमर्थिना" प्रत्यर्थी यदि सर्वमेव निह्नुते अपजानीते तदार्थिना "एकदेशे" हिरण्ये साक्ष्यादिभिः प्रत्यर्थी "भावितः" अङ्गीकारितः, 'सर्वं रजताद्यर्थं" पूर्वलिखितं "दाप्योर्थिने नृपेण"। "न ग्राह्यस्तु अनिवेदितः"---पूर्वं भाषाकाले अनिवेदितः पश्चादर्थिना पूर्वं मया विस्मृतः इति निवेद्यमानोनग्राह्यः नादर्त्तव्यो नृपेण॥ एतत्तु न केवलं वाचनिकं युक्तिसिद्धमपि। एकदेशे प्रत्यर्थिनो मिथ्यावादित्वंनिश्चयात् एकदेशान्तरेपि मिथ्यावादित्वसम्भवात्। एवम् अर्थिनश्चैकदेशे सत्यवादित्वनिश्चयात् एकदेशान्तरेपि सत्यवादित्वसम्भवात्। एवं तर्कापरनाम-सम्भावनाप्रत्ययानुगृहीतादस्मादेव योगीश्वरवचनात् सर्वं दापनीयं नृपेण इति निर्णयः (one item being proved, there is probability of others being true, this is due to सम्भावनाप्रत्यय otherwise called तर्क (तर्कापरनामिका सम्भावना), so king is to make defendant pay everything complained of) एवञ्च तर्कवाक्यानुसारेण निर्णय क्रियमाणे वस्तुनोन्यथात्वेपि व्यवहारदर्शिनां न दोषः। तथा च गौतमः---"न्यायाधिगमे तर्कोभ्युपायस्तेनाभ्युह्य यथास्थानं गमयेत्" इत्युक्त्वा "तस्माद्राजाचार्यौ अनिन्द्यौ" इत्युपसंहरति। न चैकदेशभावितः अनुपादेयवचनः प्रत्यर्थी इत्येतावदिह गम्यते---"एकदेश विभावितः नृपेण सर्वं दाप्यः" इति वचनात्॥ [There is no विरोध of this with कात्यायन स्मृति; that is a general formula, it is a special one---see below]

यत्तु---कात्यायनेनोक्तम् "अनेकार्थाभियोगेपि यावत् संसाधयेद्धनी। साक्षिभिस्तावदेवासौ लभते साधितं धनम्" इति, तत् पुत्रादिदेयपित्राद्यृणविषयम्। तत्र हि बहूनर्थानभियुक्तः पुत्रादिः "न जानामीति" इति प्रतिवदन् अपह्नववादी न भवति इत्येकदेशविभावितोपि न कश्चिदसत्यवादीति। "निह्नुते लिखितं नैकम" इति शास्त्रं तत्र न प्रवर्त्तते। निह्नवाभावात् अपेक्षित तर्काभावाच्च (there is no निह्नव in कात्यायन। निह्नव is denial by

knowing it as true. )—"अनेकार्थाभियोगेपि" इति कात्यायनवचनं तु सामान्यविषयं, विशेषशास्त्रस्यविषयं निह्नवोत्तरं परिहृत्य अज्ञानोत्तरे प्रवर्त्तते। [ So कात्यायनशास्त्र is a general one and refers is अज्ञानोत्तर, but here is a special शास्त्र referring to निह्नवोत्तर denial by knowing as ture ]। ननु "ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम्। ऊने वाप्यधिके वार्थे प्रोक्तं साध्यं न सिध्यति" इति वदता कात्यायनेन अनेकार्थाभियोगे साक्षिभिः एकदेशे भाविते, अधिके वा भाविते साध्यं सर्वमेव न सिध्यति इत्युक्तम्। तथासति एकदेशे भाविते अभावितैकदेशसिद्धिः कुतस्त्या (? कुतः स्यात्)? उच्यते-लिखितसर्वार्थसाधनतया उपन्यस्तैः साक्षिभिः एकदेशाभिधाने अधिकाभिधाने कृत्स्नमेव साध्यं न सिध्यति इति तस्यार्थः। तत्रापि "निश्चितं न सिध्यति" इति वचनात् पूर्ववत्संशय एव प्रमाणान्तरस्य अवसरोस्ति एव। "छलं निरस्य" इति नियमात्। साहसादौ तु सकलसाध्यसाधनतया उद्दिष्टैः साक्षिभिरेकदेशेपि साधिते कृत्स्नसाध्यसिद्धिः भवत्येव। तावतैव साहसादेः सिद्धत्वात्। कात्यायनवचनात्—" साध्यार्थांशेपि गदिते साक्षिभिः सकलं भवेत्। स्त्रीसङ्गे साहसेचौर्य्ये यत् साध्यं परिकीर्त्तितम्" इति ॥ २० ॥

## CHARCHA

1. निह्नुते—ह्नु (अपलपने अदादि)+लटते। Denies. Nom. प्रत्यर्थी। ज्ञात्वापलापः ज्ञात्वा अपलापः एव निह्नवः। Its opp. is अज्ञानोत्तर, ज्ञानाभावेन अपलापोत्तर।

2. नैकम्— न एकम्, नैकम्, नञर्थक—नशब्देन सहसुपेति समासः। obj. of निह्नुते।

3. विभावितः—वि+भू+णिच+क्त कर्मणि made to prove. साक्षिभिः विभावितः (प्रमाणीकृतः) प्रत्यर्थी इत्यर्थः।

4. नृपेण सर्वं दाप्यम्=In अणिच् the sentence was प्रत्यर्थी सर्वं ददाति। In णिच् it is—राजा प्रत्यर्थिनं सर्वं दापयति।



In V. ch it becomes राज्ञा प्रत्यर्थी सर्वं दाप्यते also राज्ञा प्रत्यर्थी सर्वं दाप्यः (अर्थिने इत्यर्थः)। दा+णिच्+यत् कर्मणि=दाप्यः is to cause to give by order—देयत्वेन वोधयितव्य इत्यर्थः॥ And दाप्यः is in agreement with प्रत्यर्थी।

21. In case of स्मृतिविरोध the विशेष or special न्याय prevails and स्मृति always prevails over अर्थशास्त्र।

स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः।
अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ॥ २१ ॥

Prose—स्मृत्योः (स्मृतिशास्त्रद्वयस्य) विरोधे सति व्यवहारतः (वृद्धव्यवहारतः; वृद्धव्यवहारानुसारेण सामान्यविशेषलक्षणः) न्यायः (युक्तिः) बलवान् स्यात्; तु अर्थशास्त्रात् धर्मशास्त्रं बलवत् इति स्थितिः (इति नियम इत्यर्थः)।

Beng.—যদি দুইটি স্মৃতিশাস্ত্রের মধ্যে বিরোধ উপস্থিত হয়, তবে বৃদ্ধব্যবহারাদি ক্রমানুসারে সামান্যবিশেষবিধি ন্যায় বলবান্ জানিবে। কিন্তু অর্থশাস্ত্র ও ধর্মশাস্ত্রের বিরোধ হইলে ধর্ম শাস্ত্রকেই (অর্থাৎ ধর্মশাস্ত্রোক্তিই) বলবান হইবেক।

Eng.—In case of conflict of two Srmiti-shastras, follow the usage of the old by applying the principle of the formula of general and special injunction; but Dharmashastra will always prevail over Arthashastra (the science of Polity) in cases of conflict. [ N. B.—As in व्याकरण, so in स्मृतिशास्त्र, a general formula सामान्यनियम will be superseded by a विशेष नियम; so कात्यायनशास्त्र directing that in cases of several items of सुवर्ण वस्त्र धन etc. order

of payment will be with regard to what is proved, refers to suits in general, whereas here in sl. 20 the order to pay every item even if one item is proved, is with regard to cases where निह्नव and अपह्नव or deliberate denial of known facts are involved ; it is thus a special sutra and will apply in cases of निह्नव see sl. 20 also ; and will in such cases—prevail over कात्यायनशास्त्र and no conflict will arise—this is सामान्यविशेषन्याय and such न्याय is वलवान् in व्यवहार ] ।

Mita—ननु निह्नुते लिखितं नैकम् (sl 20)—इतीयं स्मृतिः तथा "अनेकार्थाभियोगेपि" इति कात्यायन स्मृतिः (च)—अनयोः स्मृत्योः परस्परविरोधे सति इतरेतरवाधनात् अप्रामाण्यं कस्मान्नभवति । विषयव्यवस्था का आश्रीयते इत्यत आह—"यत्र स्मृत्योः परस्परयोः विरोधस्तत्र" विरोधपरिहाराय, विषयव्यवस्थापनादौ उत्सर्गापवादलक्षणो न्यायो वलवान्" समर्थः स्यात् । स च न्यायः कुतः प्रत्येतव्य इत्यत आह—"व्यवहारात्" वृद्धव्यवहारात् अन्वयव्यतिरेकलक्षणात् अवगम्यते । अतः प्रकृतोदाहरणे पि विषयव्यवस्थैव युक्ता । एवमन्यत्रापि विषयव्यवस्थाविकल्पादि यथासम्भवं योज्यम् ॥

[ Here we have "निह्नते नैकम्" but in कात्यायनस्मृति as cited before we have "अनेकार्थाभियोगेपि" and thus there arises a conflict ; in such cases "अनेकार्थाभियोगेपि" etc is a general formula, where as "निह्नते" etc is a special one for it enjoins a formula in case of निह्नव or denial by knowning it as true, whereas कात्यायनस्मृति speaks of non-knowledge of facts ; and then follows वृद्धव्यवहार in such cases applying positive ( अन्वय ) and negative ( व्यतिरेक ) sides of both].



एवं सर्वत्र च प्रसङ्गे अपवादमाह—"धर्मशास्त्रानुसारेण" इत्यनेनैवौशनसाद्यर्थशास्त्रस्य निरस्तत्वात् धर्मशास्त्रान्तर्गतमेव राजनीतिलक्षणमर्थशास्त्रमिह विवक्षितम् । अर्थशास्त्र-धर्मशास्त्रस्मृत्योर्विरोधे "अर्थशास्त्रात् धर्मशास्त्रम्वलवत् इति स्थितिः" मर्यादा ( नियमः ) ॥

यद्यपि समानकर्तृकतया अर्थशास्त्रधर्मशास्त्रयोः स्वरूपगतो विशेषोनास्ति तथापि प्रमेयस्य धर्मस्य प्राधान्यात् अर्थस्य चाप्राधान्यात् धर्मशास्त्रं बलवत् इत्यभिप्रायः । धर्मस्य च प्राधान्यं शास्त्रादौदर्शितम् । तस्मात् धर्मशास्त्रार्थशास्त्रयोर्विरोधे अर्थशास्त्रस्य वाधएव न विषयव्यवस्था, नापि विकल्पः । [ Though being composed by the same ऋषि, both धर्मशास्त्र and अर्थशास्त्र ( Polity ) do not differ in reality, still प्रमेय ( provable ) धर्मशास्त्र is main and अर्थशास्त्र the instrument to धर्म is subordinate to धर्मसास्त्र, so धर्मशास्त्र is वलवान्, and प्राधान्य of धर्म is also shown in our shastras ; hence in case of बिरोध of धर्मशास्त्र avd अर्थशास्त्र, अर्थशास्त्र will he barred, and no विकल्प ( alternative व्यवस्था ) lies in this ] ।

किमत्रोदाहरणम् ? न तावत् ( उदाहरणं युक्तं )—"गुरुं वा वालवृद्धौ वा ब्राह्मणं वा वहुश्रुतम् । आततायिनमायान्तं हन्यादेवाविचारयन् ॥ नाततायिवधे-दोषो हन्तुर्भवतिकश्चन । प्रच्छनं वा प्रकाशं वा मन्युस्तं मन्युमृच्छति" इति धर्मशास्त्रम् ( Manu VIII 350-51 ), तथा—"आततायिनमायान्तमपि वेदान्तगं रणे जिघांसन्तं जिघांसीयान्न तेन ब्रह्महाभवेत्" इत्याद्यर्थशास्त्रम् । "इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् । कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते" ( मनु-११, ८९ ) इत्यादि धर्मशास्त्रम् । तयोर्विरोधे धर्मशास्त्रं बलवत् इति युक्तम् ॥ अनयोरेकविषयत्वासम्भवेन विरोधाभावान्न वलावलचिन्ता अवतरति (Acc. to Mitakshara no conflict arises in the above instances as he will show here )—तथा हि "शास्त्रं द्विजातिभिर्ग्राह्यं धर्मो-

यत्रोपलभ्यते ( मनु-८।३४८ ) इत्युपक्रम्य "आत्मनश्च परित्राणे दक्षिणानाञ्च संगरे। स्त्रीविप्राभ्युपपत्तौ च घ्नन् धर्मेण न दण्डभाक्॥" ( मनु ८। ४६ ) इत्यात्मरक्षणे दक्षिणादानां यज्ञोपकरणानां च रक्षणे युद्धे च स्त्रीब्राह्मणहिंसायाञ्च—" आततायिनमकूटशस्त्रेण घ्नन् न दण्डभाक् इत्युक्त्वा, तस्यार्थवादार्थमिदमुच्यते "गुरुं वा वालवृद्धौ वा" इत्यादि। गुर्वादीन् अत्यन्त्यावध्यान् अप्याततायिनो हन्यात् किमुतान्यान् इति॥ "वा"-शब्दश्रवणात् अपि 'वेदान्तपारगम्' इत्यत्र "अपि" शब्दश्रवणात् न गुर्वादीनां वध्यत्वप्रतीतिः ; 'नाततायिवधे दोषो अन्यत्रगोब्राह्मणवधात्" इति सुमन्तवचनाच्च।" आचार्य्यं च प्रवक्तारं मातरं पितरं गुरुम्। न हिंस्यात् ब्राह्मणान्गाश्च सर्वांश्चैव तपस्विनः" इति मनु वचनाच्च। आचार्य्यादीनामाततायिनां हिंसाप्रतिषेधेन इदं वचनमर्थवान् नान्यथा, हिंसामात्रप्रतिषेध्यस्य सामान्यशास्त्रणैव सिद्धत्वात्। 'नाततायिवधे दोषो हन्तुर्भवतिकश्चन' इत्येतदपि ब्राह्मणादिव्यतिरिक्तविषयमेव ( नातितायिवधे दोषः is to apply excluding ब्राह्मण ) । यतः "अग्निदोगरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारहरश्चैव षड़ेते ह्याततायिनः, यथा—उद्यतासिविषाग्निश्च शापोद्यतकरस्तथा आथर्वणेन हन्ता च पिशुनश्चापि राजनि। भार्य्यातिक्रमकारी च वस्त्रान्वेषणतत्परः। एवमाद्यान् विजाणीयात् सर्वनिवाततायिनः" इति सामान्ये-नाततायिनः दर्शिताः। अतश्च ब्राह्मणादय आततायिनश्च आत्मादित्राणार्थं हिंसानभिसन्धिना निवार्यमाणाः प्रमादात् यदि विपद्येरन् तत्र लघु प्रायश्चित्तं राजदण्डाभावश्चेति निश्चयः ( लघुप्रायश्चित्त and राजदण्डाभाव is in cases where there is no motive of homicide even if death occurs in such cases ) । तस्मादन्यदिहोदाहरणं वक्तव्यम्॥

तस्मादुच्यते—"हिरण्य भूमिलाभेभ्यो मित्रलब्धिर्वरा यतः। अतो यतेत तत् प्राप्तौ" इत्यर्थशास्त्रम्। "धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ( ग्रहणीयः )" इति धर्मशास्त्रम्। तयोः क्वचिद्विषये विरोधो भवति ( This is a case of विरोध of धर्मशास्त्र and अर्थशास्त्र acc. to विज्ञानेश्वर ) । यथा—"चतुष्पाद् व्यवहारे प्रवर्त्तमाने एकस्यजये अवधार्य्यमाणे मित्रलब्धिर्भवति, न धर्मशास्त्रमनुसृतं भवति। अन्यस्य जये अवधार्य्यमाणे धर्मशास्त्रमनुसृतंभवति, मित्रलब्धिर्विपरीता,



तत्रार्थशास्त्राद् धर्मशास्त्रं वलवत्। अतएव "धर्मार्थं सन्निपाते अर्थग्राहिणः एतदेव" इति प्रायश्चित्तस्य गुरुत्वं दर्शितमापस्तम्बेन। एतदेवेति=द्वादशवार्षिकं प्रायश्चित्तं परामृश्यते॥ २१॥ N. B.—व्यवहारतः has करणे ३या स्थाने तसिः॥ न्यायः—is युक्ति as is current from old usage. Nom. to स्यात्॥ अर्थशास्त्रात्—विभाग ५मी॥ इति स्थितिः=इति नियमः॥

22. Means (साधन) necessary to prove a case are stated..

प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्त्तितम्।
एषामन्यतमाभावे दिव्यान्यतममुच्यते॥

Prose—लिखितं भुक्तिः ( उपभोगः ) साक्षिणश्च इति त्रिविधं प्रमाणं कीर्त्तितम्। एषाम् अन्यतमाभावे दिव्यान्यतमम् उच्यते।

Beng. এখন মাম্‌লার সাধক, প্রমাণের কথা বলিতেছেন :—লিখিতপ্রমাণ, ভোগদ্বারা প্রমাণ এবং সাক্ষিদ্বারা প্রমাণ, এই ত্রিবিধ প্রমাণ শাস্ত্রে কথিত হইয়াছে। এই তিনটীর একটীরও যদি সম্ভব না হয়, তবে একমাত্র দিব্যই প্রমাণ বলিয়া কথিত হয়।

Eng. Means necessary to prove a case are—(1) written document (ii) enjoyment of the disputed object, and (iii) witness ; these three are called proofs (in a suit) ; and any one of these being unavailable, the only proof will be by depending on divine matter ( दिव्यप्रमाण ) । [ N. B.—if one party resigns on these human proofs and the other on divine one, then a judge is to avail himself of the human prcof ].

Mita—प्रमीयते परिच्छिद्यते अनेन इति "प्रमाणम्"। तच्च द्विविधं—मानुषं दैविकञ्चेति। तत्र मानुषं प्रमाणं त्रिविधं—लिखितं, भुक्तिः, साक्षिणश्चेति कीर्त्तितं महर्षिभिः। तत्र लिखितं द्विविधं—शासनं चीरकम्चेति।

शासनमुक्तलक्षणम्। चीरकन्तु वक्ष्यमाणलक्षणम् (see sl. 84-85 ahead) भुक्तिरुपभोगः। साक्षिणः वक्ष्यमाणस्वरूपप्रकाराः॥

[ननु लिखितस्य साक्षिणाञ्च शब्दाभिव्यक्तिद्वारेण शब्देन्तर्भावादुक्तं प्रामाण्यम्॥ भुक्तेस्तु कथं प्रामाण्यम्? उच्यते—भुक्तिरपि कैश्चिद् विशेषणैर्युक्ता सत्त्वहेतुभूतक्रयादिकम्अव्यभिचारात् अनुमापयन्ती अनुपपद्यमाना वा कल्पयन्ती इत्यनुमाने—अर्थापत्तौ चान्तर्भवतीति प्रमाणमेव]॥ "एषां लिखितादीनां त्रयाणाम् अन्यतमस्याभावे दिव्यानां" वक्ष्यमाणस्वरूपभेदानाम् "अन्यतमम्" जातिदेशकालद्रव्याद्यपेक्षया प्रमाणमुच्यते। मनुष्याभावे एव दिव्यस्य प्रामाण्यम् अस्मादेव वचनादवगम्यते। दिव्यस्य स्वरूपप्रामाण्ययोरागमगम्यत्वात्। अतश्च यत्र परस्परविवादेन युगपद् धर्माधिकरणं प्राप्तयोरेको मानुषीं क्रियाम् अपरन्तु दैवीमवलम्बते, तत्र मानुषमेव क्रियाग्राह्या। यथाह कात्यायनः—"यद्येको मानुषीं ब्रूयात् अन्यो ब्रूयात्तु दैविकीम्। मानुषं सम्भवति तत्रापि न दैवमाश्रयणीयम्। यथा—"रूपकशतमनया वृद्धया गृहीत्वा न प्रयच्छति इत्यभियोगापह्नवे— "ग्रहणे साक्षिणः सन्ति नो संख्यायां वृद्धिविषये वा, अतोदिव्येन भावयामि" इत्युक्ते तत्रैकदेशविभावितन्यायेनापि संख्यावृद्धिविशेषसिद्धेर्न दिव्यस्यावकाशः। उक्तं च कात्यायनेन—"यद्येकदेशव्याप्तापि क्रिया विद्यते मानुषी। साग्राह्या न तु पूर्णापि दैविकी वदतां नृणाम्"॥

यत्तु—गूढसाहसिकानां तु प्राप्तं दिव्यैः परीक्षणम् इति, तदपि मानुषासम्भव-कृतनियमार्थम्। यदपिनारदेनोक्तम्—"अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे। न्यासस्यापह्नवे चैव दिव्या सम्भवति क्रिया', तदपि मानुषासम्भवे एव। तस्मात् मानुषाभावे एव दिव्येन निर्णय इत्यौत्सर्गिकम्। अत्र चापवादो दृश्यते— "प्रक्रान्ते साहसे वादे पारुष्ये दण्डवाचिके। बलोद्भूतेषु कार्य्येषु साक्षिणो दिव्यमेव च॥" तथा लेख्यादीनामपि क्वचिन्नियमो दृश्यते तथा, "पूगश्रेणी-गणादीनां या स्थितिः परिकीर्त्तिता। तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः"। तथा—"द्वारमार्गक्रियाभोगजलवाहादिषु क्रिया। भुक्तिरेव तु गुर्वी स्यात् न दिव्यं न च साक्षिणः"। तथा—"दत्तादत्ते तु भृत्यानां स्वामिनां





निर्णये सति। विक्रयादानसम्बन्धे क्रीत्वा धनमनिच्छति। द्यूते समाह्वये चैव विवादे समुपस्थिते। साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यम्"॥ इति॥ २२।

## CHARCHA

1. कीर्त्तितम्—कॄत+क्त कर्मणि। Is declared. अनुक्तकर्त्ता is= ऋषिभिः &c. Agrees with उक्तकर्म—प्रमाणम्॥ लिखितं is document or written statement. भुक्ति is उपभोग। साक्षिणः witness. All these three have इति शब्दयोगे १मा॥

2. एषाम्—निर्द्धारणे वा शेषे षष्ठी। comp "अन्यतरान्यतमशब्दौ अव्युत्पन्नौ स्वभावात् द्विबहुविषये निर्द्धारणे वर्त्तेते" Kaumudi। construe—अन्यतमाभावे सति। See also "हला युवयोरन्यतरागच्छतु"—Sak III. before sl. 20 and our notes there. See also our "तयोरेकः" in Rag. v. sl. 60 for further details.

3. दिव्यान्यतमम्—दिर्विभवम् इति दिव्यम् with यत् प्रत्यय। divine. दिव्यं च (तत्) अन्यतमम् च इति कर्मधा। Agrees with उच्यते (ब्रू वा वच लटते कर्मणि)। Note अन्यतर is like सर्व being read in सर्वादिगण and not so is अन्यतम—it is like ordinary अकारान्त शब्द। comp "अन्यतमशब्दस्य गणे पाठाभावात् न संज्ञा"।

23. In all suits the later (साधन=प्रमाण) क्रिया is more powerful.

> सर्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया।
> आधौ प्रतिग्रहे क्रीते पूर्वातु बलवत्तरा॥ २३॥

Prose—सर्वेषु अर्थविवादेषु उत्तरा (परवर्त्ती) क्रिया (साधनप्रमाणक्रिया) बलवती स्यात्। (किन्तु) आधौ (बन्धकव्यापारे) प्रतिग्रहे (दानलब्धविषये) क्रीते (क्रयविषये) पूर्वा क्रिया (प्रमाणक्रिया) बलवत्तरा स्यात्।

Beng. সমস্ত অর্থাদি বিবাদবিষয়েই, উভয়পক্ষের প্রমাণাদি সত্ত্বে, পর প্রমাণক্রিয়া বলবান্ হইবে। তবে বন্ধক, দানপ্রতিগ্রহ এবং ক্রয় ব্যাপারে প্রথম প্রমাণক্রিয়াই বলবত্তর হইবে।

Eng. In all suits of money etc. the later "Pramana" (Proof) will prevail; but in mortgage, gifts and sales, the first documentary Proof will supersede later ones.

Mita—उभयत्र प्रमाणसद्भावे प्रमाणगतवलावलविवेके असति पूर्वापरयोः कार्य्ययोः कस्य वलीयस्त्वमित्यत्राह—"ऋणादिषु सर्वेषु अर्थविवादेषु उत्तरा क्रिया" क्रियते इति क्रिया (procedure) कार्य्यं वलवती। उत्तरकार्ये साधिते तद्वादी विजयीभवति, पूर्वकार्य्येसिद्धे पि तद्वादी पराजीयते। यद् यथा—कश्चिद् ग्रहणेन धारणं साधयति कश्चित् प्रतिदानेन धारणम् तत्र ग्रहणप्रतिदानयोः प्रमाणसिद्धयोः प्रतिदानं वलवत् इति प्रतिदानवादी जयी भवति। तथा-पूर्वं द्विकं शतं गृहीत्वा कालान्तरे त्रिकं शतम् अङ्गीकृतवान् तत्र उभयत्र प्रमाणसद्भावेपि त्रिकशतत्रहणं वलवत्। पश्चाद्-भावित्वाद् पूर्वावाधेन अनुत्पत्तेः। उक्तञ्च—"पूर्वावाधेन नोत्पत्तिरुत्तरस्य हि सेत्स्यति" इति॥ अस्यापवादमाह—"आध्यादिषु त्रिषु पूर्वमेव कार्य्यं वलवत्"। यथा—एकमेव क्षेत्रम् अन्यसमाधिं (वधकं) कृत्वा किमपि (अर्थादिकं) गृहीत्वा, पुनरन्यस्यापि आधाय किमपि गह्णाति, तत्र पूर्वस्यैव तद् भवति, नोत्तरस्य। एवं प्रतिग्रहे क्रये च भवति॥ नन्वाहितस्य तदानीम् अस्वत्वात् पुनराधानमेव न सम्भवति एवं दत्तस्य क्रीतस्य च दानक्रियौ नोपपद्यते. तस्मादिदं वचनमनर्थकम् इति चेत्? उच्यते—अस्वत्वेपि यदि मोहात् कश्चित् लोभाद्वा पुनराधानादिकं करोति तत्र पूर्वं वलवत् इति न्यायमूलमेवेदम् इत्यचोद्यम्" [It is said that in आधि (mortgage), प्रतिग्रह (gift-प्रतिदान), क्रय (sales), the first action will Prevail; now a question arises that mortgage



etc being afterwards another's स्वत्व (due to own अस्वत्व); how can its remortgage is possible, so this saying here is unreasonable; on this Mitakshara says that even if these are others due to असत्त्व, still due to avarice and vitiation of wits men adopt a second mortgage and in that case first mortgage (पूर्वा क्रिया etc) will be बलवत्तर—so this saying is reasonable here (न्यायमूलम्) and such above argument (पूर्वपक्ष or चोद्य) is not to be advanced; (चोद्य—is पूर्वपक्ष in mimansa shastra)].

CHARCHA

1. अर्थविवादेषु—अर्थ should be taken here as विषयवस्तु वा प्रयोजन। "अर्थोभिधेयरैवस्तु प्रयोजननिवृत्तिषु"। अधिं ७मी। But the reading "सर्वेष्वथ विवादेषु" is better here; for सर्वेषु विवादेषु will include all matters or subjects of suits.

2. क्रिया—It means कार्य्य i. e, प्रमाणकार्य्य।

3. आधौ—आधीयते इति आ+धा+कि कर्मणि=आधि is वन्धकद्रव्य pawn (mortgage), अधिं ७मी।

24. In case of उपभोग, twenty year's enjoyments gives right; but in case of liquid money etc. ten year's enjoyment gives right.

पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी।
परेण भूज्यमानाया धनस्य दशवार्षिकी॥ २४॥

Prose—परेण भुज्यमानायाः भूमेः (सम्वन्धे) विंशतिवार्षिकी हानिः (विंशतिवर्षोपभोगजन्या हानिः भवति); परेण भूज्यमानस्य धनस्य धनादेः दशवार्षिकीहानिर्भवति (दशवत्सरोपभोगजन्या हानिःभवति)।

Beng—একজনের ভূমি যদি অপরব্যক্তি বিংশতিবৎসর ভোগ করিতে থাকে, এবং ভূস্বামী ইহা দেখিয়া ও জানিয়া ও কিছু প্রতিবাদ না করেন, তবে এই ভূমি অপরেরই হইবে। সেইরূপ হস্তী অশ্ব ধনাদি ব্যাপারে অন্যে দশবৎসর ভোগ করিলে, এগুলি ভোগদখলকারীরই হইয়া যায়।

Eng.—If one's property is being enjoyed by another for twenty consecutive years, and the owner does not say anythiug against this though he has full knowledge thereof, then the property goes to the enjoyer; similarly in case of wealth ( including elephants, horses etc ) ten years's enjoyment by another gives him right of this ( i. e. this beeomes enjoyers own property ).

Mita—भुक्तेः कैश्चिद् विशेपणैर्युक्तायाः प्रामाण्यं दर्शयिष्यन् कस्याश्चिद भुक्तेः कार्य्यान्तरमाह।' "परेण असंवन्धेन भुज्यमानां भुवंधनं वा पश्यतः अब्रुवतः" "मदीयेयं भूः न त्वया भोक्तव्या" इत्यप्रतिषेधयतः, तस्य भूमिः "विंशतिवार्षिकी" अप्रतिरवं विंशतिवर्षोपभोगनिमित्ता" हानिर्भवति"। "धनस्यतु" हस्त्यश्वादेर्द्दादशवार्षिको हानिः स्यात्।

नन्वेतत् अनुपपन्नं नह्यप्रतिषेधात् स्वत्वमपगच्छति। अप्रतिषिद्धस्य दानविक्रयादिवत्स्वत्वनिवृत्तिहेतुत्वस्य लोकशास्त्रयोरप्रसिद्धत्वात्। नापि विंशतिवर्षोपभोगात् स्वत्वम्; ऊपभोगस्य स्वत्वे अप्रमाणत्वात्। प्रमाणस्य च प्रमेयप्रत्युनुत्पादकत्वात्, रिक्थक्रयादिषु स्वत्वकारणहेतुष्वपाठाच्च।

[ This is not proper; स्वत्व or right of ownership does not cease due to non-objection; for gift or sale is said of property not objected when enjoyed by others; and in such enjoyment of other's property, there is no



cessation of rightship-causes that are universally accepted by all or in shastras; so mere enjoyment for 20 years cant give one ownership-right; उपभोग is not accepted anywhere as cause for ownership; उपभोप is not producer of स्वत्व ( where is the प्रमेय here ), aud so in matter of purchase, in रिक्थ ( The inherited property ) स्वत्वकारक causes are enumerated; hence मिताक्षरा here by quoting shastras will show that due to such 20 years enjoyment, the owner will lose his right of "usufruct" only i. e. the productions, profits etc of the property so long, and not his absolute ownership; the owner will however have right to file case to reinstate his right. —to regain his absolute स्वत्व—see न वस्तुहानिर्नापि व्यवहारहानिः below. ]

तथाहि—स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकंलब्धं, क्षत्रियस्य बिजितं, निर्विष्टं बैश्यशूद्रयोः-इत्यष्टावेव स्वत्वकारकहेतून् गौतमः पठति न भोगम्। न चेदमेव वचनं बिंशतिवर्षोपभोगस्य स्वत्तापत्तिहेतुत्वं प्रतिपादयति इति युक्तम्। स्वत्वस्य स्वत्वहेतूनाञ्च लोकप्रसिद्धत्वेन शास्त्रैक-समधिगम्यत्वाभावात्। एतच्च विभाग-प्रकरणे निपुणतरमुपपादयिष्यते। गौतमवचनं च नियमार्थम्॥

अपिच "अनागमंतु योभुङ्क्ते वहून्यव्दशतान्यपि। चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः" इत्येतदनागमोपभोगस्य स्वत्वहेतुत्वे विरुध्यते। न च —अनागमंतु यो भुङ्क्ते—इत्येतत् परोक्षभोगविषयम्, "पश्यतोब्रुवतः" इति प्रत्यक्षभोगविषयमिति युक्तं वक्तुम्। "अनागमं तुयोभुङ्क्ते" इत्यविशेषाभिधानात्। "नोपभोगे बलंकार्यमाहर्त्रा तत्सुतेन वा। पशुस्त्रीपुरुषादीनामिति धर्मोव्यवस्थितः" —इति कात्यायनवचनाच्च। समक्षभोगेच हानिकारणाभावेन हानेरसम्भवात्।

नचैतन्मन्तव्यम्—"आधिप्रतिग्रहक्रयेषु पूर्वायाः क्रियायाः प्राबल्यादपवादेन भूविषये विंशतिवर्षोपभोगयुक्तायाः, धनविषये दशवर्षयुक्तायाः, उत्तरस्याः क्रियायाः प्राबल्यमनेनोच्यते इति। यतस्तेषु उत्तरैव क्रिया तत्त्वतो नोपपद्यते, स्वमेव ह्याधेयं देयं विक्रेयश्च भवति। न चाहितस्य दत्तस्य विक्रीतस्य वा स्वत्वमस्ति। अस्वत्वदाने प्रतिग्रहे च दण्डः स्मर्य्यते—" अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति। उभौतौ चौरवच्छास्यौदाप्यौ चोत्तमसाहसम्" तथा आध्यादीनां त्रयाणाम् अपवादत्वे अस्य श्लोकस्य आधिसीमादीनामुत्तर-श्लोके अपवादो नोपपद्यते। तस्माद्भूम्यादीनां हानिः अनुपपन्नैव, नापि व्यवहारहानिः। यतः — उपेक्षां कुर्वतस्तस्य तृष्णीम्भूतस्यतिष्ठतः काले विपन्ने पूर्वोक्तो व्यवहारो न सिध्यति "इति नारदेन उपेक्षालिङ्गाभावकृता व्यवहारहानिरुक्ता, न तु वस्त्वभावकृता हानिः। तथा मनुनापि—"अजडश्चेद-पौगण्डो विषयश्चास्य भुज्यते। भग्नं तद्व्यवहारेण भोक्ता तद्धनमर्हति" इति व्यवहारतो भङ्गो दर्शितः न वस्तुतः।

व्यवहारभङ्गश्चैव—भोक्ता किलवदति "अजडोयमपौगण्ड अबालोयमस्य सन्निधौ विंशतिवर्षाण्यप्रतिरवं मयाभुक्तं, तत्र वहवः साक्षिणः सन्ति, यद्यस्य स्वमन्यायेन मयाभुज्यते तदायं किमिति एतावन्तं कालमुदास्ते"। इति ; तत्रचायं निरुत्तरो भवति। एवं निरुत्तरस्यापि वास्तवो व्यवहारो भवत्येव। "छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः" इति नियमात्॥ अथ मतं (व्याख्यानान्तरं)—यद्यपिन वस्तुहानिर्नापि व्यवहारहानिस्तथापि पश्यतोप्रतिषेधतः व्यवहारहानिशङ्का भवति इति तन्निवृत्तये तूष्णीं न स्थातव्यमितुपदिश्यते इति ; तच्चन, स्मार्त्तकालाया (स्मरणयोग्यकालिकायाः) भुक्तेर्हानिशङ्काकारणत्वाभावात् ; तूष्णीं न स्थातव्यम् इत्येतावन्मात्रअभिधित्सायां विंशतिग्रहणमविवक्षितं स्यात्॥ अथोच्यते विंशतिग्रहणमूर्ध्वं पत्रदोषोद्भावननिराकरणार्थम्, यथाह कात्यायनः "शक्तस्य सन्निधौ अर्थो यस्य लेख्येन भुज्यते। विंशतिवर्षाण्यतिक्रान्तं तत्पत्रं दोषवर्जितम्" इति, तदपिन आध्यादिष्वपि विंशतेरूर्ध्वं पत्रदोषोद्भावन—निराकरणस्य समत्वेन 'आधिसीमा' इत्यपवादासम्भवात्। यथाह कात्यायनः



"अथ विंशतिवर्षाणि आधिर्भुक्तः सुनिश्चितः। तेन लेख्येन तत्सिद्धिर्लेख्य-दोषविवर्जिता॥ तथा "सीमाविवादे निर्णीते सीमापत्रं विधीयते तस्यदोषा प्रवक्तव्या यावद्वर्षाणि विंशतिः इति॥ एतेन "धनस्य दशवार्षिकी" इत्यपि प्रत्युक्तम्। (तस्मादस्य श्लोकस्य सत्योर्थोवक्तव्यः। उच्यते, "भूमेर्धनस्य च हानिरिह विवक्षिता, न वस्तुहानि नापि व्यवहारहानिः। तथाहि "निराक्रोशं विंशतिवर्षोपभोगात् ऊर्ध्वं यद्यपि स्वामी न्यायतः क्षेत्रं लभते, तथापि फलानुसरणं न लभते। अप्रतिषेधलक्षणात् स्वापराधात्, अस्माच्च वचनात्॥ परोक्षभोगे तु विंशतेरूर्ध्वमपि फलानुसरणं लभते एव, 'पश्यतः' इति वचनात्। प्रत्यक्षभोगे च साक्रोशे, "अब्रुवतः" इति वचनात्।) विंशतेः प्राक् प्रत्यक्षे निराक्रोशे चलभते, विंशतिग्रहणात्॥ ननु उत्पन्नस्यापि फलस्य सत्वात् हानिरनुपपन्नैव।) वाढम्, तस्य स्वरूपाविनाशेन तथैवावस्थाने, यथा तदुत्पन्नपूगपनसवृक्षादीनां यत्पुन-स्तदुत्पन्नमुपभोगान्नष्टं तत्र स्वरूपनाशादेव सत्वनाशः। "अनागमं तु योभुङ्क्ते बहून्यब्दशतान्यपि। चौरदण्डेन तं पापं दण्डयेन्नृपतिः" इत्यनेन वचनेन निष्क्रयरूपेण गणयित्वा चौरवत् तत्समं द्रव्यदानं प्राप्तम्, "हानिर्विंशतिवार्षिकी" इत्यनेन अपोद्यते (वाध्यते)। राजदण्डः पुनरस्त्येव विंशतेरूर्ध्वमपि, अनागमोपभोगात् अपवादाभावाच्च। तस्मात् स्वामुग्रपेक्षालक्षणस्वापराधात् अस्माच्च वचनात् विंशतेरूर्ध्वं फलं नष्टं, न लभते इति स्थितम्। एतेन "धनस्य दशवार्षिकी" इत्येतदपि व्याख्यातम्॥ २४॥

## CHARCHA

1. परेण भुज्यमानायाः—Refers to भूमेः। भूमेः is related to हानिः। सम्बन्धे षष्ठी।

2. विंशतिवार्षिकी—विंशतिवर्षाणि (व्याप्य) भवतीति विंशतिवर्ष+ठञ् =विंशतिवार्षिक with उत्तरपदवृद्धि by the rule" वर्षाभ्याभविष्यति", and here there is no reference to भविष्यत्काल। ततः स्त्रियाम् ङीप्। Qual. हानिः। Similarly derive and parse दशवार्षिकी with ref. to धनस्य।

25. Such स्वत्वहानि will not take place in case of mortgage, boundary suit, trust, and monies of minors etc.

आधिसीमोपनिक्षेप-जड़बालधनैर्विना ।
तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरपि ॥ २५ ॥

Prose आधिसीमोपनिक्षेपजड़बालधनैः विना ( एतानि वर्जयित्वा विंशतिवार्षिक्यादिः हानिर्भवति ), तथा उपनिधिराजस्त्रीश्रोत्रियाणां धनैः विना ( हानिर्भवति ) । [ N. B.—आधि is here mortgaged property ; उपनिक्षेप here is money trusted by naming and counting ; and उपनिधि here is good given as trust but kept closed in a sealed casket ( for further details also see under sl. 65) ]

Beng বন্ধক, সীমাবিবাদ, গচ্ছিতধনদ্রব্য, জড ( হাবাবোবা ) বা বালকের ধন, এবং পেটিকাবদ্ধ গচ্ছিতদ্রব্য, রাজকীয় ভূম্যাদি, স্ত্রীধন ও শ্রোত্রিয় ব্রাহ্মণের ধনসম্পত্তি ছাড়া বিংশতিবর্ষ বা দশবর্ষে স্বত্ব বা উপস্বত্বহানি হইবে। ( কারণ এ জাতীয় ব্যাপারে বা এরা স্বভাববশতঃ তদীয় স্বত্ব বিষয়ে উদাসীন হইতে পারে সুতরাং এ জাতীয় ধনাদিতে বিংশতিবর্ষভোগেও এদের স্বত্বাদি নষ্ট হয় না ) ।

Eng. Such loss of right by 20 years or 10 year's enjoyment as the case may be, will take place excepting mortgage—property, long-contracted boundary disputes, in trusted money, in dumb's or minor's properties or goods, also in trusted sealed caskets (with goods within), in kings goods, in women's goods or in goods of a learned (srotriya) Brahman.

Mita—आधिश्च सीमा च उपनिक्षेपश्च, आधिसीमोपनिक्षेपाः" जड़श्च बालश्च जड़बालौ, तयोर् धने जड़बालधने च – आधिसीमा-उपनिक्षेपाश्च जड़बालधने च "आधिसीमोपनिक्षेपजड़बालधनानि", 'तैर्विना' ।' उपनिक्षेपोनाम स्वरूपसंख्याप्रदर्शनेन रक्षणार्थं परस्य हस्ते निहितं द्रव्यम् । यथाह नारदः—



"स्वं द्रव्यं यत्र विस्रम्भान्निक्षिपत्यविशङ्कितः । निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः ॥ उपनिधानमुपनिधिः । आध्यादिषु पश्यतोऽब्रुवतोपि भूमेर्विंशतेरूर्ध्वं धनस्य च दशभ्यो वर्षेभ्य ऊर्ध्वमप्युपचयहानिर्नभवति ( फलहानिर्नस्यात् ), पुरुषापराधस्य तथाविधस्य अभावात्, उपेक्षाकारणस्य च तत्र तत्र ( आध्यादिषु ) सम्भवात् । तथाहि---"आधे राधित्वोपाधिक एव भोग इत्युपेक्षायामपि न पुरुषापराधः । सीम्नश्चि रक्ततुषाङ्गारादि चिह्नैः सुसाध्यत्वादुपेक्षा सम्भवति । उपनिक्षेपोपनिध्योर्भुक्तेः शास्त्रे प्रतिषिद्धत्वात् । प्रतिषेधातिक्रमे उपभोगे च सोदयफललाभात् उपेक्षोपपत्तिः । जड़बालयोर्जड़त्वात् बालत्वात् उपेक्षा युक्तैव । राज्ञो बहुकार्य्यव्याकुलत्वात्, स्त्रीणामज्ञानात् अप्रागल्भ्याच्च । श्रोत्रियस्याध्ययनाध्यापन---तदर्थविचारानुष्ठानव्याकुलत्वात् उपेक्षा युक्तैव । तस्मात् आध्यादिषु सर्वत्र उपेक्षाकारणसम्भवात् समक्षभोगे निराक्रोशे च न कदाचिदपि-फलहानिः ॥ २५ ॥ [ N. B---In आधि, उपेक्षा etc indifference to भोग arises due to its being an आधि and so another's property. So in the case of others---hence no फलहानि here ---See Mita ].

## CHARCHA

1. आधि etc---द्वन्द्व of आधि, सीमा, उपनिक्षेप, जड़, बाल । then तेषां धनानि । तैः । विनाशब्दयोगे ३या । स्वत्वहानि will not take place in the goods of these ; so in goods of उपनिधि, राज, स्त्री and श्रोत्रिय । for meaning of उपनिक्षेप ( trust of counted money) and उपनिधि ( trust of good within a sealed casket ) see above : श्रोत्रिय is a वेदज्ञ ब्राह्मण, it is irregularly formed ( निपातनसिद्ध ) directly for छन्दः अधीते or as a प्रत्ययान्त from the word छन्दस् । छन्दस्+घन्=श्रोत्र+घन्=श्रोत्रिय,—by the rule" "श्रोत्रियश्छन्दोधीते" । In this sense छान्दस is also correct. See also our sak VI. sl. 1. under "अनुकम्पामृदुरपि श्रोत्रियः" ।

26. punishment in usurping goods of आधि etc. for getting स्वत्व ।

आध्यादीनां विहर्त्तारं धनिने दापयेद्धनम् ।
दण्डं च तत्समं राज्ञे शक्त्यपेक्षमथापि वा ॥ २६ ॥

Prose—आध्यादीनां (श्रोत्रियपर्यन्तानां) विहर्त्तारम् (अपहर्त्तारं) धनिने (स्वामिने) धनम् (विवादास्पदीभूतं धनम्) दापयेत्। राज्ञे च तत्समं (विवादास्पदीभूतधनसमं) दापयेत। अथापि वा शक्त्यपेक्षं (वहु वा स्वल्पं वा धनं) दापयेत्।

Beng আধি, সীমা, উপক্ষেপাদি পূর্বোক্ত বিষয়ে ধনসম্পদাদিতে যে ব্যক্তি অযথা ভোগদখল স্থাপন করিতে চায়, বিচারক তাকে ঐ ধন ধনস্বামীকে দেওয়াইবেন, এবং অভিযুক্ত সম্পত্তির সমমূল্য দণ্ডরূপে রাজাকে পাওয়াইবেন। কিন্তু যদি বিচারক (প্রাডবিবাক) মনে করেন যে ঐ অন্যায়ভাবে দখলীকৃত সম্পত্তির তুল্যমূল্য দণ্ডে অপহারকের যথাযথ শাসন হইল না, তখন তিনি শক্তি বুঝিয়া অধিক বা উপযুক্ত দণ্ডও দেওয়াইতে পারেন [অথবা অপারগ ব্যক্তিকে নিন্দাদি ধিক্‌কার প্রভৃতি দণ্ড দেওয়াইবেন]॥

Eng —In case of usurpation of mortgaged property etc (as stated in the prior sloka) the judge will cause the usurper pay commensurate or equal money (of the goods under suit) to the real owner and such fine to the king; and if deemed this punishment as light, then the judge may order higher or adequate fine to the king (or punishment of calumniation to the pauper)

Mita—"य आध्यादीनां" श्रोत्रियपर्यन्तानां चिरकालोपभोगवलेन 'विहर्त्ता' अपहर्त्ता, "तं विवादास्मदीभूतं धनं स्वामिने दापयेत्" इत्यनुवादः। "दन्डं



च ततसम् विवादास्मदीभूतद्रव्यसमं राज्ञे दापयेत्" इति विधिः (प्राड्विवाकस्य विधिः—law for a judge)। यद्यपि गृहक्षेत्रादिषु तत्समो दन्डो न सम्भवति तथापि "मर्य्यादायाः प्रभेदेच सीमातिक्रमणे तथा" (sl. 155) इत्यादिर्वक्ष्यमाणो दन्डो द्रष्टव्यः। अथ (चेत्?) तत्समदन्डेन अपहर्त्तुः दमनं न भवति वहुधनत्वेन, तदा "शक्त्यपेक्षं धनं दापयेत्"। यावता तस्य दर्पोपशमः भवति तावत् दापयेत्। "दन्डो दमनात् इत्याहुस्तेन अदान्तान् दमयेत्" (गौतमः) इति दन्डग्रहणस्य दमनार्थत्वात्॥ यस्य तत्समं द्रव्यंनास्ति, सोपि यावता पीड्यते तावद्दाण्ड्यः। यस्य पुनः किमपि धनं नास्ति असो धिग्दन्डादिना ("धिक" इति कुत्सनस्वरूपदन्ड) दमनीयः। तथा च मनु—"धिग्दन्डं प्रथमं कुर्य्यात् वाग्दन्डं तदनन्तरम्। तृतीयं धनदन्डं तु वधदण्डमतः परम्" इति। यधदण्डोपि शारीरो ब्राह्मणव्यतिरिक्तानां दशधादर्शितः। तथाहमनुः—दशस्थानानि दन्डस्य मनुः! स्वायम्भुवोब्रवीत्। त्रिपुवर्णेपु यानिस्युरक्षतो ब्राह्मणोव्रजेत्। उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम्। चक्षुर्नासाच कर्णौ च धनं देहस्तथैव च "इति'। एतेषां यन्निमित्तापराधस्तत्रैव उपस्थादौ निग्रहः कार्य्य इति द्रष्टव्यम्। कारा वा कारयितव्यो वन्धनागारं वा प्रवेशयितव्यः। यथोक्तं कात्यायनेन—"धनदानासहं बुद्ध्वा स्वाधीनं कर्मकारयेत्। अशक्तोवन्धनागारं प्रवेश्यो ब्राह्मणादृते" इति॥ ब्राह्मणस्य पुनर्द्रव्याभावे कर्मवियोगादीनि (cossation of usual works) प्रयोज्यानि। यथाहगौतमः—कर्मवियोग-विख्यापननिर्वासनाङ्ककरणान्यप्रवृत्तौ" इति नारदेनापि—वधः सर्वस्वापहरणं पुरान्निर्वासनाङ्कने। तदङ्गच्छेद इत्युक्तोदण्ड-उत्तमसाहसः। अविशेषेण सर्वेषामपि दण्डविधिः स्मृतः" इत्युक्त्वा उक्तम्–"वधादृते ब्राह्मणस्य, न वधं ब्राह्मणोर्हति" इति "शिरसो मुण्डनं दण्डस्तस्य निर्वासनं पुरात्। ललाटे अभिसस्ताङ्क प्रयाण गर्दभेन च इति नारदः॥ अङ्केन च व्यवस्थादर्शिता "गुरुतल्पेभगः कार्य्यः सुरापाने सुराध्वजः। स्तेयेतुश्वपदं कार्य्यं ब्रह्महण्यशिराः पुमान्"—इति (such signs or अङ्क, are to be depicted on the

**body** of the अपराधी )॥ यत्तु—"चक्षुर्निरोधो ब्राह्मणस्य" इत्यापस्तस्व-वचनं ब्राह्मणस्य पुराग्निर्वासनसमये वस्त्रादिना चक्षुनिरोधः कर्त्तव्य इति तस्यार्थः—न तु चक्षुरुद्धरणम् (but not uprooting of eyes, this is the sense due to Manu or Narada वचन )। "अक्षतो ब्राह्मणोव्रजेत्" ( मनुः ), न शारीरो ब्राह्मणेदण्डः ( गौतम ) इत्यादिमनुगौतमादि-वचनविरोधात् इत्यलमनेन प्रसङ्गेन ॥ २६ ॥

CHARCHA

1. विहर्त्तारम्—वि + हृ+तृच। It means अपहर्त्ता stealer or usurper; we avoid तृन् here, for then कर्मषष्ठी will be barred in आध्यादीनाम् by the rule "न लोकाव्ययनिष्ठाखलर्थतृनाम्"।

2. दापयेत्—दा+णिच् तिङ्यात्। should cause to give; construe—विहर्त्ताधनिनेधनंददाति=प्राड्विवाकः विहर्त्तारं धनिने धनं दापयेत् ( in णिच् )=दापनत्वेन वोधयेत्।

3. तत्समम्—तेन समम्, ततत्। or we may also say तस्य समम्। Thus is in pursuance to the rule "तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्"।

4. शक्त्यपेक्षम्—शक्तिमपेक्षते इति शक्ति+अप+ईक्ष ण कर्त्तरि। Qual. धनम्। Here ण comes with कर्मोपपद after ईक्ष by the rule "ईक्षिक्षमिभ्याञ्च"।

27. Barring hereditary property Acquisition is greater in proving स्वत्व or right, than उपभोग of goods for विंशतिवर्ष etc.

> आगमोभ्यधिको भोगाद्विना पूर्वक्रमागतात्।
> आगमेपि वलं नैव भुक्तिः स्तोकापि यत्रनो ॥ २७ ॥



Prose—आगमः ( दानक्रयादिना प्राप्तिः ) भोगात् ( स्वत्वभोगात् ) अभ्यधिकः ( स्वत्वविषये वलीयान् ), पूर्वक्रमागतात् ( पूर्वपुरुषक्रमेण प्राप्तात् ) भोगात् विना ( तत्र भोगस्वत्वमेव प्रवलम् )। आगमेपि ( प्राप्तसम्पत्ति-विषयेपि ) वा यत्रस्तोकापि ( स्वल्पापि ) भुक्तिः नो ( न इत्यर्थः ) ( स्वत्वविषये ) तत् न वलं ( किन्तु दुर्वलमेव ) [ See also "Remark" below and Mita for another Interpretation here ].

Beng—যদি প্রতিগ্রহ ক্রয় প্রভৃতি দ্বারা আগম বা সম্পত্তি প্রাপ্তি ঘটে, তবে তাহা ভোগস্বত্ব ( অর্থাৎ ভোগদ্বারা লব্ধস্বত্ব ) হইতে বলবৎ হয়। ( অর্থাৎ আগমাধীন ভোগই স্বত্বে প্রবল প্রমাণ )। কিন্তু প্রপিতামহ পিতামহ পিত্রাদি পুরুষক্রমাগত সম্পত্তিতে নিরবচ্ছিন্ন ভোগই প্রবল। এক্ষেত্রে ভোগ আগমের অপেক্ষা রাখেনা। আবার আগম বা সম্পত্তি প্রাপ্তিতেও, ভোগরহিত হইলে স্বত্ব বলযুক্ত হয় না। আগমক্ষেত্রে ভোগদ্বারাই স্বত্বের প্রবলতা হয়। অর্থাৎ ভোগব্যতীত আগম ভোগসমন্বিত আগম হইতে দুর্ব্বল হইয়া থাকে।

Eng.—Right due to gift or purchase is more powerful than right due to long enjoyment ( as stated before ); but this is not so in the case of inherited property got one after another for three generations, for here स्वत्व is established merely by भोग (enjoyment) of the property; and in purchased or aquired property too, non-enjoyment makes the right weak; i. e. property got but not enjoyed makes the right and title weak.

Expl—सम्पत्तिवा goods can be got by gift, by purchase, by inheritance or by long enjoyment for 20 years or more as said before; now स्वत्व got by gift or purchase

is more powerful than स्वत्व due to long enjoyment only; in fact भोग due to विशुद्ध आगम is स्वत्वे प्रमाण; and स्वत्व, in inheritance is kept by long enjoyment only; again स्वत्व in acquired or purchased property or goods is appreciated and established by both possession and enjoyment. Title and right are weak if there be no possession or enjoyment of the property; for दान is स्वसत्ताध्वंस and परसत्ता-उत्पादन and that is accepted by all if gift or purchased property is enjoyed: उपस्वत्वभोग alone cane assure this; so it is said that भोगयुक्त title is more powerful than भोगहीन title (right). So आगमाधीनः भोगः स्वत्वे प्रमाणम्। –(see now also Mitakshara here).

Mita—स्वत्वाव्यभिचारत्वेन भोगस्य स्वत्वे प्रामाण्यमुक्तम्। भोगमात्रस्य स्वत्वव्यभिचारित्वात् कोदृशो भोगः प्रमाणमित्यत आह [As स्वत्व वा right goes invariably with भोग, our author has spoken of particular भोग (sl. 24) that conduces to स्वत्व, for every भोग does not invariably accompany स्वत्व। So here we get about स्वत्वकारक भोग]—स्वत्वहेतुः प्रतिग्रह-क्रयादिः "आगमः"। स भोगादप्यधिको वलीयान्, स्वत्वबोधने भोगस्य आगमसापेक्षात्वात। यथाह नारदः —आगमेन विशुद्धेन भोगो याति प्रमाणताम्। अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति"॥ न च भोगमात्रात् स्वत्त्वागमः, परकीयस्यापि अपहारादिनाभोगसम्भवात्। अतएव—"भोगं केवलतो यस्तु कीर्त्तयेन्नागमं क्वचित्। भोगच्छलापदेशेन विज्ञेयः स तु तस्करः "इति नारदेन स्मर्य्यते। अतश्च सागमो दीर्घकालः निरन्तरो निराक्रोशः प्रत्यर्थिप्रत्यक्षश्चेति पञ्चविशेषण-युक्तो भोगः प्रमाणमित्युक्तम्। तथा च स्मर्य्यते—"नागमो दीर्घकालश्चाविच्छेदो-अपरिवर्जितः प्रत्यर्थिसंनिधानश्च परिभोगोपि पञ्चधा"॥ क्वचिच्चागमनिरपेक्षस्यापि



भोगस्य प्रामाण्यमित्याह—"विना पूर्वक्रमागतात्" इति। पूर्वेषां पित्रादीनां त्रयाणां क्रमः, पूर्वक्रमः। तेनागतः योभोगस्तस्माद्विना", आगमोभ्यधिकः इति सम्बन्धः। स पुनरागमादभ्यधिकः आगमनिरपेक्षः प्रमाणमित्यर्थः। तत्राप्यागमोअज्ञातनिरपेक्षः न सत्तानिरपेक्ष। सत्ता तु तेनैवावगगम्यते इति वोध्यम्। "विना पूर्वक्रमागतात्" इत्येतच्च स्मार्त्तकालप्रदर्शनार्थम् (स्मार्त्तकाल= स्मरणयोग्यकाल)। "आगमोभ्यधिको भोगात्" इति च स्मार्त्तकालविषयम्। अतश्च स्मरणयोग्यकाले योग्यानुपलब्ध्या आगमाभावनिश्चयसम्भवात् आगमज्ञान सापेक्षस्यैव भोगस्य प्रामाण्यम् (भोग depending on known आगमज्ञान establishes स्वत्व)। अस्मार्त्ते तु काले योग्यानुपलब्ध्यभावेन आगमाभाव-निश्चयासम्भवात् आगमज्ञाननिरपेक्ष एव सन्ततो भोगः प्रमाणम् (as in inheritance from 3 generations)। एतदेव स्पष्टीकृतं कात्यायनेन —स्मार्त्तकाले क्रिया (प्रमाणं) भूमेः सागमाभुक्तिरिष्यते। अस्मार्त्तेऽनुगमाभावात् क्रमात्त्रिपुरुपागता" इति॥ स्मार्त्तश्चकालः वर्षशतपर्य्यन्तः 'शतायुर्वै पुरुषः' इति श्रुतेः। अनुगमाभावात् इति योग्यानुपलब्धि-अभावेन आगमाभावनिश्चया —सम्भवात् इत्यर्थः, अतश्चवर्षशताधिको भोगः सन्ततः अप्रतिरवः प्रत्यक्षश्चा-गमाभावे वानिश्चिते अव्यभिचारात् आक्षिप्तागमः स्वत्वं गमयति॥ अस्मार्त्तेऽपि काले अनागमस्मृतिपरम्परायां सत्यां न भोगः प्रमाणम्। अतएव "अनागमं तुयोभुङ्क्ते वहून्यदेशतान्यपि। चोरदन्डेन तं पापं दन्डयेत् पृथिवीपतिः॥ इत्युक्तम्॥ न च "अनागमं तुयोभुङ्क्ते" इत्येकवचननिर्देशात् "बहून्यब्दशतान्यपि" इति अपि-शब्दप्रयोगात् प्रथमस्यैव पुरुषस्य निरागमे चिरकालोपभोगोपि दण्डविधानमिति मन्तव्यम्। द्वितीये तृतीये वा पुरुषे निरागमस्य भोगस्य प्रामाण्यप्रसङ्गात्। न चैतदिष्यते—"आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा इति नारदस्मरणात्। तस्मात् सर्वत्र निरागमोपभोगे "अनागमं तुयोभुङ्क्ते" इत्येतत्द्रष्टव्यम्। यदपि 'अन्यायेनापियद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः। न तच्छक्यमपाहर्तुं क्रमात् त्रिपुरुषागतम्" इति, तत्रापि "क्रमात् त्रिपुरुषागतम्" इत्यस्मार्त्तकालभोगोपलक्षणम्।

त्रिपुरुषविवक्षायाम् एकवर्षाभ्यन्तरेपि पुरुषत्रयातिक्रमसम्भवात्, द्वितीये वर्षे निरागमस्य भोगस्य प्रामाण्यप्रसङ्गः स्यात्। तथासति "स्मार्त्तकाले क्रियाभूमेः सागमा भुक्तिरिष्यते" इति स्मृतिविरोधः। "अन्यायेनापियद्भुक्तम्" इत्येतच्च अन्यायेनापि भुक्तमपहर्त्तुं न शक्यं, किं पुनरन्यायानिश्चये इति व्याख्येयम्। अपि-शब्दश्रवणात्। यच्चोक्तं हारीतेन "यद्विनागमम् अत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत्। न तच्छक्यमपाहर्त्तुं क्रमात्त्रिपुरुषागतम्" इति, तत्राप्य-त्यन्तम् आगमं विना। अत्यन्तमुपलभ्यमानमागमम् विनेति व्याख्येयम्, न पुनरागमस्वरूपं विना इति। आगमस्वरूपाभावे भोगशतेनापि न स्वत्वं भवतीत्युक्तम्। "क्रमात्त्रिपुरुषागतम्" इत्येतदुक्तार्थम्॥ ननुस्मरणयोगेग्रकाले भोगस्यागमसापेक्षस्य प्रामाण्यमनुपपन्नम्। तथाहि—"यद्यागमः प्रमाणान्तरे-णावगतस्तदा तेनैव स्वत्वावगमात् न भोगस्य स्वत्वे आगमे वा प्रामाण्यम्। अथ प्रमाणान्तरेणागमोनावगतः कथं तद्विशिष्टो भोगः प्रमाणम्? उच्यते—प्रमाणान्तरेणावगतागमसहित एव निरन्तरोभोगः कालान्तरे स्वत्वं गमयति। अवगतोप्यागमः भोगरहितो न कालान्तरे स्वत्वं गमयितुमलम्। मध्येदानविक्रयादिना स्वत्वापगमसम्भवात् इति सर्वमनवद्यम्॥

आगमसापेक्षो भोगः प्रमाणमित्युक्तम्, आगमन्तर्हि भोगनिरपेक्ष एव प्रमाणमित्यत आह—"यस्मिन् आगमे स्वल्पापि भुक्तिर्भोगोनास्ति, तस्मिन् आगमे वलं सम्पूर्णं नैवास्ति"। अयमभिसन्धिः – स्वस्वत्वनिवृत्तिः परस्वत्वापादानां च दानम, परस्वत्वापादानं च परो यदि स्वीकरोति तदासम्पद्यते, नान्यथा। स्वीकारः त्रिविध :— मानसः, वाचिकः, कायिकश्चेति। तत्र 'मानसः' ममेदमिति संवन्धरूपः। 'वाचिकस्तु' ममेदमित्या-द्यभिव्याहारोल्लेखी सविकल्पक प्रत्ययः। 'कायिकः' पुनरुपादानाभिमर्शनादिरूपो-अनेकविधः ( taking, enjoying &c )। तत्र च नियमः स्मर्य्यते —"दद्यात् कृष्णाजिनं पृष्ठेगां-पुच्छे करिणं करे। केसरेषु तथैवाश्वं दासीं शिरसिदापयेत्॥ इति। आश्वलायनीपग्राह—" अनुमन्त्रयेत प्राण्यभिमृशेद्व वस्त्राणि कन्यां च"॥ इति। तत्र हिरण्यवस्त्रादौ उदकदानान्तरम् श्रव



आदानादि सम्भवात् त्रिविधोपि स्वीकारः सम्पद्यते। क्षेत्रादौ पुनः फलोपभोगव्यतिरेकेन कायिकस्वीकारासम्भवात् स्वल्पेनापि उपभोगेन भवितव्यम्। अन्यथा दानक्रियादेः सम्पूर्णता न भवति इति फलोप-भोगलक्षणकायिकस्वीकारविकल आगम दुर्वलो भवति, भोगसहितादागमात्। एतच्चद्वयोः पूर्वापरकालापरिज्ञाने। पूर्वापरकालपरिज्ञाने तु विगुणोपि पूर्वकालागम एव वलीयान्। अथवा—"लिखितं साक्षिनोभुक्तिः प्रमाणं त्रिविधम्" इत्युक्तं एतेषां समवाये कुत्रयस्य वा प्रावल्यमित्यत्रइदम् उपतिष्ठते—आगमोभ्यधिको भोगात् विना पूर्वक्रमागतात्। "आगमेपि वलंनैवभुक्तिः स्तोकापि यत्रनो" इति। अयमर्थः—आद्योपुरुषो साक्षिभिर्भावित आगमो भोगादप्यधिको वलवान्। पूर्वक्रमागतात् भोगाद्विना। सपुनः पूर्वक्रमागतः भोगश्चतुर्थेपुरुषे लिखितेन भाविताद् आगमात् वलवान्। मध्यमे तु भोगरहितात् आगमात् स्तोकभोगसंहितोप्यागमः बलवान् इति। एतदेव नारदेन स्पष्टीकृतम्—"आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा। कारणं भुक्तिरेवैका सन्तता या चिरन्तनी"॥ २७॥

## CHARCHA

1. भोगात् – In भोगात् अभ्यधिकः, भोगात् has अधिकार्थशब्दयोगे ५मी। Again भोगात् when is connected with पूर्वक्रमागतात्, it takes विनाशब्दयोगे ५मी।

2. नो—An अव्यय in the sense of 'न'। comp "शब्दविदेव नो भाति राजनीतिरपस्पशा' in Magha II,

3. Remark – Vijnaneshwara construes & interprets the last line thus also—barring पूर्वक्रमागत भोग, आगमभोग established by साक्षिन् is वलवत्। Again पूर्वक्रमागत भोग is more powerful than ordinary written proof of आगम (acquisition ) in the fourth generation in the line, but

भोगरहित आगम in the two intermediate generations, is superseded even by स्वल्पभोगयुक्त आगम। See also Mita for details.

28. In आगम of property, written document ( लिखित प्रमाण ) is to be shown by the original purchaser only to prove स्वत्त्व, and not his sons etc.

आगमस्तु कृतो येन सोभियुक्तस्तमुद्धरेत्।
न तत्सुतस्तत्सुतोवा भुक्तिस्तत्र गरीयसी ॥ २८ ॥

Prose—येन ( पुरुषेण ) आगमः ( भूम्यादेः प्राप्तिस्वीकारः ) कृतः, स अभियुक्तः सन् तम् ( आगमप्रमाणम् ) उद्धरेत् ( प्रतिप्रादयेत् )। किन्तु तत्सुतः पुनः तत्सुतः अपि तु तं ( प्रमाणम् ) न उद्धरेत्। तत्र ( पुत्रादिपक्षे ) भुक्तिः ( पितुः सम्पत्तिभोगः ) गरीयसी भवति ( अतश्चतदेव स्वत्त्वे प्रमाणम् ) ।

Beng. যে ব্যক্তি ভূম্যাদি-সম্পত্তি ক্রয়াদি দ্বারা গ্রহণ করিয়াছে, সে "কোথা হইতে সে সম্পত্তি পাইল"—এভাবে অভিযুক্ত হইলে, লিখিত দলিলাদি দ্বারা স্বত্ব প্রতিপন্ন করিবে ; কিন্তু এ বিষয়ে উক্ত ব্যাপারে তার পুত্রের বা পুত্রের পুত্রের কোন স্বত্ব প্রমাণ করিতে হইবে না। পুত্র-পৌত্রের অবিচ্ছিন্ন ভোগই এ বিষয়ে স্বত্ব প্রমাণ করিবে। [ N. B.—অর্থাৎ অবিশুদ্ধ আগম বিষয়ে মূল পুরুষই দায়ী ও দণ্ডনীয় ]।

Eng. If a purchaser or holder of a property is challenged as to whence he has got it, he is to prove his title by documents etc. ; but original purchaser's son or son's son is not to prove such title (if such occasion arise) ; their unobstructed enjoyment is proof enough as to their ownership.



Mita—"पश्यतोब्रुवत" इत्यत्र विंशतिवर्षोपभोगादूर्ध्वं भूमेर्धनस्यापि दशवर्षोपभोगादूर्ध्वं फलानुसरणं न भवतीत्युक्तम्, तत्र फलानुसरणवत् दण्डानुसरणमपि न भविष्यति—इत्याशङ्क्य पुरुषव्यबस्थया प्रामाण्यव्यवस्थया च दण्डव्यवस्थां दर्शयितुमाह—"येन पुरुषेण भूम्यादेरागमः" स्वीकारः "कृतः सपुरुषः"—'कुतस्ते क्षेत्रादिकम्' इत्यभियुक्तः ( सन् ) 'तमागम'' प्रतिग्रहादिकम् लिखितादिभिः 'उद्धरेत्' भावयेत् ( प्रतिपादयेत् )। अनेन चाद्यस्य पुरुपस्य आगमम् अनुद्धरतः दण्ड इत्युक्तं भवति। ( This points to दण्ड of आद्यपुरुष, if he is unable to provo आगम of सम्पत्ति etc). 'तत्सुतः' द्वितीयोभियुक्तः नागममुद्धरेत्, किन्तु अविच्छिन्नअप्रतिरवसमक्षभोगम् ( उद्धरेत् )। अनेन आगममनुद्धरतः द्वितीयस्य न दण्डः अपि तु विशिष्ठं भोगमनुद्धरतो दण्ड इति प्रतिपादितम्। तत्सुतः ( सुतस्यसुतः ) तृतीयः नागमं नापि विशिष्ठं भोगम् ( special enjoyment ) उद्धरेत्। अपि तु क्रमागतंभोगमात्रम्। अनेनापि तृतीयस्य क्रमायातभोगानुद्धरणे दण्डो न आगमानुद्धरणे न च विशिष्ट-भोगानुद्धरणे च इत्यभिहितम्॥ 'तत्र तयोः' द्वितीयतृतीययोः "भुक्तिरेव गरीयसी"। तत्रापि द्वितीये ( भुक्तिः ) गुरुः, तृतीये गरीयसी इति विवेकः। त्रिष्वप्यागमानुद्धरणे अर्थहानिः समानैव, दण्डे तु विशेष इति तात्पर्य्यार्थः। उक्तं च हारीतेन—"आगमस्तु कृतोयेन सदण्डग्रस्तमनुद्धरन्। न तत्सुतस्तत्सुतो वा भोग्यहानिस्तयोरपि" ॥ २८ ॥ [ N. B. – In case of अविशुद्ध आगम, son, grandsons are not दण्ड्य, but they may lose right of enjoyment ( भोग्यहानि ) ].

## CHARCHCA

1. उद्धरेत्—उद्+हृ or धृ+लिङ्यात्। shall prove. प्रतिपादयेत्। In case of अविशुद्धागम, original holder of property will be punished and not their sons or grandsons.

2. तत्सुतः—तस्य ( मूलग्रहीतुः ) सुतः॥ second तत्सुतः means,

तत्सुतस्य सुतः i. e, मूलग्रहीतृसुतस्य सुतः—third generation. construe —तत्सुतः वा तत्सुतः प्रमाणं न उद्धरेत्। तेषां भुक्तिः गरीयसी, अतश्च प्रमाणम्। In case of original अविशुद्धागम, पुत्र वा पौत्र may lose भोग्यसम्पत्ति।

29. In case of death of original holder of property, the enjoyer thereof is to prove Title.

योभियुक्तः परेतः स्यात्तस्य रिक्थी तमुद्धरेत्।
न तत्र कारणं भुक्तिरागमेन विना कृता ॥ २९ ॥

Prose—यः (भूम्यादिग्रहीता) अभियुक्तः (पश्चात्) परेतः (मृतः) स्यात् रिक्थी (सम्पत्तिभोगकारि-पुत्रादिः) तम् (स्वत्वप्रमाणम्) उद्धरेत् (प्रतिपादयेत्)। तत्र आगमेन (क्रयादिना) विना कृता भुक्तिः न कारणं (स्वत्वे न प्रमाणम्)।

Beng. সম্পত্তিদখলকারী ব্যক্তি রাজদ্বারে অভিযুক্ত হইয়া, মামলা নিষ্পত্তির পূর্বেই মরিয়া গেলে, তাহার উত্তরাধিকারী সম্পত্তিভোগী পুত্রগণ সম্পত্তির স্বত্ব প্রমাণ করিবেন। কারণ, বিশুদ্ধ আগমরহিত ভোগ (সাক্ষীদ্বারা সাধিত হইলেও) প্রমাণস্বরূপ হইবে না।

Eng. If original holder of a property is challenged as to the right of the property, dies before the suit is disposed, then his sons etc the enjoyers of his inheritance—is to prove right of Title; here mere enjoyment without proof of real ownership is no proof of Title.

'Mita—अस्मार्त्तकालोपभोगस्य आगमज्ञाननिरपेक्षस्य प्रामाण्यमुक्तम् "विना पूर्वक्रमागतात्" इत्यत्र, तस्यापवादमाह—यदापुनराहर्त्रादिः 'अभियुक्तः' अकृतव्यवहारनिर्णय एव 'परेतः स्यात्' परलोकं गतो भवेत् 'तदा तस्य रिक्थी' पुत्रादिः तमागमम् 'उद्धरेत्' प्रतिपादयेत्। यस्मात् तत्र व्यवहारे 'भुक्तिरागमरहिता' किन्तु साक्ष्यादिभिः साधितापि न प्रमाणम्। पूर्वाभियोगेन भोगस्य सापवादत्वात्। नारदेनाप्युक्तम्—"तथारूढविवादस्य प्रेतस्य व्यवहारिणः। पुत्रेण सोऽर्थः संशोध्यः न तं भोगो निवर्त्तयेत्" [ it is to be proved ( संशोध्य ), mere भोग will not prove and establish the Title ] ॥



## CHARCHA

1. रिक्थी—रिक्थम् is inherited property; bequest. तत् अस्ति अस्य इति रिक्थी i. e, holder of an inherited prorerty i. e,. sons etc. Also comp. ननु गर्भः पित्र्यं रिक्थम् इति" in Sak VI, Nom. to उद्धरेत्।

29 (A)—स्वत्व is proved not by mere भुक्ति but by भोग of विशुद्धागम (=rightly held property ).

आगमेन विशुद्धेन भोगो याति प्रमाणताम्।
अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति ॥ ३० ॥

Pbose – विशुद्धेन आगमेन भोगः प्रमाणतां याति। अविशुद्धागमः भोगः प्रामाण्यं न एव गच्छति।

Beng.—বিশুদ্ধভাবে প্রাপ্ত সম্পত্তির ভোগ প্রমাণগ্রাহ্য। কিন্তু অবিশুদ্ধ বা অন্যায়ভাবে প্রাপ্ত সম্পত্তির কেবল ভোগ সত্বে প্রমাণযোগ্য হইবে না।

Eng—Enjoyment of property rightly got attains proof of title; but enjoyment of unjustly got property is not to be taken as proof of title (न स्वत्वे प्रमाणम्)।

Mita—See under sl. 27.

## CHARCHA

1. **विशुद्धेन आगमेन—करणे ३या।** विशुद्ध आगम is property got legally, So अविशुद्धागम is property not justly and legally got. भोग only in such ( अविशुद्धागम ) property cannot give right & title. Title in property here is thus to be proved by लिखितप्रमाण साक्षिप्रमाण and भोगप्रमाण।

2. Remark—Nirnayasagara Press Edition does not read this sloka, but we accept this for it clearly states the cause, the प्रमाण of स्वत्त्व; And it is hinted by Mitakshara under sl. 27 "आगमसापेक्षो भोगः प्रमाणम् इत्युक्तम्" etc.

**30. Gradual strength in the panel of judges in disposal of suits.**

नृपेणाधिकृता पूगाः श्रेणयीथ कुलानि च।
पूर्व्वं पूर्व्वं गुरुज्ञेयं व्यवहारविधौ नृणाम्॥ ३०॥

Prose—नृणाम् व्यवहारविधौ नृपेण अधिकृताः ( व्यवहारदर्शने नियुक्ताः ) पूगाः ( एकस्थानवासिनां समूहाः ) श्रेणयः ( नानाजातीनाम् एककर्मोपजीविनां संघाताः ) कुलानि ( ज्ञातिसम्वन्धिवन्धूनां समूहाः ) च भवन्ति, ( एषाम् ) पूर्व्वं पूर्व्वं गुरु ज्ञेयम्।

Beng—লোকের বিচারব্যবস্থার জন্য, রাজা কর্ত্তৃক নিযুক্ত বিচারক পুরুষবর্গ ( অনেক সময় ) গ্রাম ও নগরবাসী লোক হয়, কখনো বা নানাজাতির একজাতীয় কর্মোজীবী হয়, অথবা জ্ঞাতি-সম্বন্ধবন্ধু ও হইয়া থাকে। অর্থাৎ উহারা রাজাকর্ত্তৃক নিযুক্ত হইয়া ব্যবহারবিষয়ে ব্যবহারনির্ণায়ক হইয়া থাকেন। এই তিনপ্রকার লোকের মধ্যে পরপরাপেক্ষায় পূর্ব পূর্ব ব্যবহারদর্শী বলবান্ হইয়া



থাকেন। [ অর্থাৎ রাজনিযুক্ত বিচারক যাহা রায় দিবেন, পরাজিত ব্যক্তি যদি অসন্তুষ্ট হইয়া তদ্বিরুদ্ধে পুনর্বিচার চায়, তবে জ্ঞাতি প্রভৃতির রায়ের চেয়ে, শ্রেণির রায় বলবান হইবে তদপেক্ষায় ও গ্রাম নগরবাসীদের রায় সমধিক বলবান্ হইবে এবং পূগনির্ণীত ব্যবহারের আর আপীল চলিবে না। সেক্ষেত্রে একমাত্র রাজার নিকট আপীল চলে ]।

Eng. In the matter of disposal of suits of subjects, the judges appointed by the king may be some citizens, or some persons carrying on same livelihood, or these may be some kindreds friends relations; in that case the judgment of each preceding one will be more weighty than the subsequent ones ( i. e., each preceding ones will be more binding, that the subseqnent ones judgments.).

Mita—अनिर्णीतव्यवहारे व्यवहर्त्तरि प्रेते व्यवहारो ( suit ) न निवर्त्तते इति स्थितम्। निर्णीतेपि व्यवहारे, स्थिते च व्यवहर्त्तरि, व्यबहारः क्वचित् प्रवर्त्तते, क्वचिन्न प्रवर्त्तते—इति व्यवस्थासिद्धये ( व्यवस्थानिष्पत्तये ) व्यवहारदर्शिनां ( बिचारकानां ) वलावलमाह—"नृपेण राज्ञा अधिकृताः" व्यवहारदर्शने नियुक्ताः ( "राज्ञः सभासदः कार्य्याः" इति पूर्व्वमुक्ताः ) 'पूगाः' समूहाः, भिन्नजातीनां भिन्नवृत्तीनामपि एकस्थाननिवासिनाम्—यथा ग्रामनगरादयः। "श्रेणयः'—नानाजातीनाम् एकजातीनामपि एकवृत्तीनां संघाताः—यथा हेडाबुकादीनाम् ( अश्वविक्रेतारो हेडाबुकाः ) ताम्बुलिक-कुविन्द ( तन्तुबाय ) चर्म्मकारादीनां च। "कुलानि" ज्ञातिसम्वन्धिवन्धूनां समूहाः। तेषां नृपाधिकृतादीनां चतुर्णां ( ? ) मध्ये पूर्व्वं पूर्व्वं" यद्यत् पूर्व्वं पठितं तत्तद्गुरु" बलवद्ज्ञेयम्। नृणां व्यवहर्त्तॄणां "व्यवहारविधौ" व्यबहारदर्शनकार्य्यें। एतदुक्तं भवति—नृपाधिकृतैः निर्णीते व्यबहारे पराजितस्य यद्यप्यसन्तोषः कुदृष्टिबुद्ध्या भवति, तथापिन पूगादिषु पुनर्व्यवहारी भवति। एवं

पूगनिर्मिते न श्रेण्यादिगमनम्; तथा श्रेनिनिर्णीते न कूलगमनम् स्यात्। किन्तु कुलनिर्णीते श्रेणिगमनंस्यात्। श्रेणिनिर्णीते पूगगमनस्यात्। पूगनिर्णीते नृपाधिगमनं भवति ( see Beng )। नारदेन पुनर्नृपाधिकृतैर्निर्णीतेपि व्यवहारे नृपागमनं भवतीत्युक्तम्—"कुलानि श्रेणयश्चैव गणाश्चधिकृता नृपाः। प्रतिष्ठाव्यवहाराणां गुर्वेषामुत्तरोत्तरम्। तत्र च नृपगमने सोत्तरसभेत्रन राज्ञा पूर्वैः सभ्यैः सपणव्यवहारे निर्णीयमाने यद्यसौ कुदृष्टवादी पराजितस्तदासौ दण्ड्यः। अथासौ जयति तदाधिकृताः सभ्या दण्ड्याः ॥ ३० ॥

CHARCHA

1, व्यवहारविधौ—व्यवहारस्य विधिः, in the matter of disposal of suit. तस्मिन्। अधि ७मी।

2. पूगाः, श्रेणयः, कुलानि—See prose, Beng. and मिताक्षरा for the meanings of these words or groups. Nom. to भवन्ति &c. understood.

3, पूर्वं पूर्वं गुरु ज्ञेयम्—Thus here judgment of each prior mentioned one, will prevail over the subsequently mentioned ones. So appeal from पूगविचार can be to the king only.

21. Admission of appeal or re-trial may be in following cases under all circumstances.

बलोपाधिविनिवृत्तान् व्यवहारान्निवर्त्तयेत्।
स्त्रीनक्तमन्तरागारवहिः शत्रुकृतांस्तथा ॥ ३१ ॥

Prose—बलोपाधिविनिवृत्तान् (बलप्रयोगेन भयप्रदर्शनेन च निष्पन्नान्) व्यवहारान् ( विवादान् ) निवर्त्तयेत् ( पुनरावर्त्तयेत् )। तथा स्त्री-नक्तम-अन्तरागार-बहिःशत्रु-कृतान् व्यवहारात् निवर्त्तयेत्—पुनः प्रवर्त्तयेत्।



Beng—বলপ্রয়োগ বা ভয়প্রদর্শন দ্বারা যে বিবাদের নিষ্পত্তি করা হইয়াছে, সে বিবাদের পুনর্বিচার করাইবে। সেইরূপ স্ত্রীলোক দ্বারা আনীত, রাত্রিকালে কৃত বা গৃহাভ্যন্তরে কৃত বা গ্রামের বাহিরে কৃত বা শত্রুদ্বারা কৃত বিবাদের ও পুনর্বিচার চলিবে।

Eng. A suit disposed by application of force (or persuasion) or by show of intimidation can be re-instated again; so a suit brought by a woman, a suit whose matters are executed at night, a suit in the interior of an apartment, or outside a village or instituted by an enemy should be tried again ( i.e, there should be a fresh trial in these cases).

Mita—दुर्बलैर्व्यवहारदर्शिभिर्दृष्टोव्यवहारः परावर्त्तते ( पुनः प्रवर्त्तते ) प्रबलदृष्टस्तु न निवर्त्तते इत्युक्तम्। इदानीं प्रबलदृष्टोपि व्यवहारः क्वचिन्निवर्त्तते इति आह—'बलेन' बलात्कारेण, "उपाधिना" भयादिना विनिवृत्तान् निष्पन्नान् 'व्यवहारान् निवर्त्तयेत्'। तथा स्त्रीभिः, नक्तं रात्रौअस्त्रीभिरपि कृतान्, अन्तरागारे गृहाभ्यन्तरे, वहिः ग्रामादिभ्यः, शत्रुभिश्चकृतान् व्यवहारान् निवर्त्तयेत्—इति सम्बन्धः ॥ ३१ ॥

CHARCHA

1. बलोपाधि—बल is force or application of force; उपाधि is भयप्रदर्शन here. बलञ्च उपाधिश्च; ताभ्यां विनिवृत्तान् ( निष्पन्नान् ) Qual. व्यवहारान्। व्यबहार is suit ( मामला ) here. The reading उपधि is also seen here, then उपधि is deceit; we prefer उपाधि here for usually भयप्रदर्शन in suits are seen even today.

2. निवर्त्तयेत्—नि+वृत+लिङ्यात्। Should reinstate, renew. Nom. राजा, विचारकः etc. understood.

3. स्त्री &c—नक्तम् is an अव्यय meaning night or at night. अन्तःस्थितम् आगारम्, शाकपार्थिवादि। or आगारे इति अन्तरागारम् वा अन्तरागारे, विभक्त्यर्थे अव्ययीभाव। or—आगारस्य अन्तः अन्तरागारम्, राजदन्तादि। बहिः is ग्रामाद्बहिः। शत्रुश्च। एभिःकृतान्। Qual. व्यवहारान्। obj. of निवर्त्तयेत्। In sueh cases retrial or appeal will take place.

32. Following suits however are unfit for trial.

मत्तोन्मत्तार्त्तव्यसनिबालभीतादियोजितः।
असंवद्धकृतश्चैव व्यवहारो न सिद्ध्यति ॥ ३२ ॥

Prose—मत्तोन्मत्तार्त्त-व्यसनिबालभीतादियोजितः व्यवहारः, असम्बद्धकृतः अपि व्यवहारः ( विवादः ) न सिध्यति ( न उपयुक्तो भवति )।

Beng. মত্ত ( বা মাতাল ), উন্মত্ত ( বা পাগল ), আর্ত্ত ( পীড়িত ) ব্যসনিন্ (চরিত্রহীন বা বিপদগ্রস্ত ), বালক, শত্রুবাদিভয়াতিভূত, পুর বা রাষ্ট্রবিরুদ্ধাচারী দ্বারা আয়োজিত বা প্রস্তাবিত বিবাদ, সম্পর্ক-রহিত কর্ত্তৃক আনীত বিচার বা বিবাদ অসিদ্ধ বা অগৃহীত হইবে।

Eng. A suit instituted by a drunkard, by an insane, by a diseased one ; by a dissipated or by one fallen inperil, or by an intimidated one, or by a revolutionist, or a suit brought by one unconnected with the matter should not be admitted for trial.

Mita—असिद्धव्यवहारिण आह—अपिच, 'मत्तो' मदनीयद्रव्वेण, 'उन्मत्त' उन्मादेन पञ्चविधेन वातपित्तश्लेष्मसंनिपात-ग्रहसम्भवेनोपसृष्टः, 'आर्त्तो' व्याध्यादिना, 'व्यसनम्' इष्टवियोगः अनिष्टप्राप्तिजनितं दुःखम्, तद्वान् "व्यसनी", 'बालो' व्यवहारायोग्यः, भीतोरातिभ्यः। आदिग्रहणात् पुरराष्ट्रादिविरुद्धः।



[ "पुरराष्ट्रविरुद्धश्चयश्च राज्ञा विसर्जितः। अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः" इति मनुस्मरणात् ] "एतैर्योजितः" व्यवहारो न सिध्यति। अनियुक्तासंवद्ध-कृतोपि व्यवहारः न सिध्यति इति सम्बन्धः ॥

यत्तु स्मरणं—"गुरोः शिष्ये, पितुः पुत्रे, दम्पत्योः स्वामिभृत्ययोः। विरोधे मिथस्तेषां व्यवहारो न सिध्यति" इति, तदपि गुरुशिष्यादीनाम् आत्यन्तिकव्यवहार-निषेधपरं न भवति। तेषामपि कथञ्चिद् व्यवहारस्य इष्टत्वात्। ( The Smriti that—quarrel between गुरुशिष्य, पितापुत्र, दम्पति and स्वामीभृत्य is to be settled mutually, and should not be admitted, is a general one and not a total prohibition of suits between these ; for suits between these sometimes are fit for trial ; following quotations of गौतम and मनु support this—) तथाहि "शिष्यादिशिष्टिः अवधेन शक्तौ रज्जुवेणुविदलाभ्यां तनुभ्याम्, अन्येन घ्नन् राज्ञाशास्यः" इति गौतमस्मरणात्। "नोत्तमाङ्गे कथञ्चन" इति मनुस्मरणात्। यदि गुरुः कोपावेशवशात् महतादण्डेन उत्तमाङ्गे ताड़यति, तदा स्मृतिव्यपेतेन मार्गेणाधर्षितः शिष्यो यदि राज्ञे निवेदयति, तदाभवत्येव व्यवहारपदम् ॥ तथा "भूर्यापितामहोपात्ता" ( sl 121 ) इत्यादि वचनात् पितामहोपात्ते भून्यादौ पितापुत्रयोः स्वाम्ये समाने, यदि पिता विक्रयादिना पितामहोपात्तं भूम्यादि नाशयति तदा पुत्रो यदि धर्माधिकरणं प्रवेशयति तदा पितापुत्रयोरपि भवत्येव व्यवहारः ॥ यथा—"दुर्भिक्षे धर्मकार्ये च व्याधौ संप्रतिरोधके [ N. B.=संप्रतिरोधकं नाम सर्वस्वहरणंकृत्वा दुर्गादौ परवलैर्निरोधकरणम् ], गृहीतं स्त्रीधनं भर्त्ता नाकामो दातुमर्हति" इति स्मरणात्। दुर्भिक्षादिव्यतिरेकेण यदि भर्त्ता स्त्रीधनं व्ययीकृत्य विद्यमानधनोपि याच्यमानो न ददाति, तदा दम्पत्योरपि इष्यते व्यवहारः ॥ तथा भक्तदासस्य स्वामिनासह-व्यवहारं वक्ष्यति। गर्भदासस्यापि ; गर्भदासादीनधिकृत्य—"यश्चैषां स्वामिनं कश्चिन्मोचयेत् प्राणसंशयात्। दासत्वात् स विमुच्येत् पुत्रभागं लभेत च" —इति नारदोक्तत्वात्, तदमोचने, पुत्रभागादाने च स्वामिना सह व्यवहारः केन

वार्य्यते ॥ तस्माद्दुष्टाद्दृष्टयः श्रेयस्करो न भवति गुर्वादिभिर्व्यवहार इति प्रथमं शिष्यादयः निवारणीयाः राज्ञा सभ्येन—इति "गुरोः शिष्य" इत्यादि श्लोकस्य तात्पर्य्यार्थः। अत्यन्तनिर्वन्धेतु शिष्यादीनामप्युक्तरीत्या प्रवर्त्तणीयो व्यवहारः ॥

यदपि—"एकस्य बहुभिःसार्धं स्त्रीणां प्रेष्यजनस्य च। अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः"इति नारदवचनम्। तत्र एकस्यापि—"गणद्रव्यं हरेद्यस्तु संविदं लंघयेच्च यः" ( sl. 187 ), तथा "एकंघ्नता बहूनाञ्च" ( sl. 221 ) इत्यादि स्मरणात् एकार्थैः बहुभिः सार्धं व्यवहार इष्यते एव, इति भिन्नार्थैर्बहुभिरेकस्य युगपद् व्यवहारो न भवतीति द्रष्टव्यम्। "स्त्रीणामित्यपि" गोप-शौण्डिकादि-स्त्रीणां स्वातन्त्र्याद् व्यवहारो भवत्येव इति। तदन्यासां कुलस्त्रीणां पतिषु जीवत्सु तत्पारतन्त्र्यादनादेयो व्यवहार इति व्याख्येयम्। "प्रेष्यजनस्य च" इत्येतदपि प्रेष्यजनस्य स्वामिपारतन्त्र्यात् स्वार्थव्यवहारोपि स्वाम्यनुज्ञयैव व्यवहारो नान्यथा इति व्याख्येयम् ॥ ३२ ॥

### CHARCHA

1. मत्तोन्मत्त &c—first, द्वन्द्व। for meanings, see Tran. & Mitak. तैः योजितः ( प्रयोजितः ), ततत्—1 Qual. व्यवहारः। Such **व्यवहार** i. e, instituted by such persons should not be admitted. सिध दिवादि+लट ति=सिध्यति is valid. न सिध्यति=is not valid. व्यसन is both विपद् and कामजक्रोधजदोष। "व्यसनं विपदिभ्रंशे दोषे कामजे कोपजे"। So व्यसनी is विपद् वा दुःखग्रस्त as **विज्ञानेश्वर** in मिताक्षरा says ; or it means कामाद्यभिभूत ; such persons lose wit usually, and suits of these are not to be admitted, comp. "अधोधः व्यसनी याति" Manu VII.

2. असंबद्धकृतः—असम्बद्ध is unconnected ; व्यवहारेण सह असंबद्ध is one not at all having any connection whatsoever in a suit. See Mita also तेन कृतः। Qual. व्यवहारः। The reading



असम्बन्धकृतः is not consistant here, for it may also give the idea of "one having no relation" ; whereas non-related persons too having interest in a suit may institute the same.

33. Ordainment or rule in case of lost money.

प्रनष्टाधिगतं देयं नृपेण धनिने धनम्।
विभावयेन्न चेल्लिङ्गैस्तत्समं दण्डमर्हति ॥ ३३ ॥

Prose—प्रनष्टाधिगतं ( पूर्वं प्रनष्टं पश्चात् अधिगतं ) धनं नृपेण धनिने ( धनस्वामिने ) देयम्। यदि च लिङ्गैः ( रूपसंख्यादिभिर्लिङ्गैः ) न विभावयेत ( न प्रमाणयति। अथच गृह्णाति ) तदा ग्रहीता तत्समं दण्डमर्हति।

Beng—পূর্ব্বে চোর বা দস্যু কর্ত্তৃক অপহৃত বা নষ্ট ধন যদি পরে শুল্কাধিকৃতরাজপুরুষ কর্ত্তৃক অধিগত বা প্রাপ্ত হয়, তবে রাজা (প্রমাণ লইয়া) উহা ধনস্বামীকে দেওয়াইবেন। কিন্তু যদি কেহ উহা সংখ্যা বা আকৃতি প্রভৃতিদ্বারা প্রমাণিত না করিয়া লয়, তবে তাকে পরে তৎপরিমাণ মূল্য দণ্ড দিতে হইবে।

Eng—If lost or stolen money is later got by custom or other revenue officers etc. then the king should give ( or order to give ) it over to the real owner ; but if one takes it by not proving the amount or nature of coins etc, then later on, he is to pay an equal amount thereof by way of punishment.

Mita—परावर्त्त्यं व्यवहारमुक्त्वाइदानीं परावर्त्त्यं' (returnable ) द्रव्यमाह। 'प्रनष्ट" हिरण्यादि, शौल्किकस्थानपालादिभिः ( by custom or revenue officers ) अधिगतं राज्ञे समर्पितं यत्तत् धनम् राज्ञा

धनिने देयम् (दाप्यम्)। यदि धनो रूपकसंख्यादिभिलिङ्गैः विभावयति। यदि "न विभावयति (लिङ्गैः) तदाततसमं दन्डभाः" असत्यवादित्वात्॥ अधिगमस्य स्वत्वनिमित्तत्वात् स्वत्वे प्राप्ते तत्परावृत्तिरनेनोक्ता। अत्रच कालावधिं वक्ष्यति (sl 173) शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम्। अर्वाक्संवत्सरात् स्वामी हरेतपरतोनृपः" इति। मनुना पुनः संवत्सरत्रय-मवधित्वेन निर्दिष्टम्—"प्रनष्टस्वामिकं रिकथं राजात्र्यव्दं निधापयेत्। अर्वाक्त्र्यव्दात् हरेत् स्वामी परतो नृपतिर्हरेत्" इति। तत्र वर्षत्रयपर्य्यन्तमवश्यं रक्षणोयम्। तत्र यदि संवत्सरादर्वाक् स्वाम्यागच्छेत्तदा कृत्स्नमेव दद्यात्। यदापुनः संवत्सरादूर्ध्वं आगच्छति तदा किञ्चिद्भागं रक्षणमूल्यं गृहीत्वा शेषं स्वामिने दद्यात्, यथाह—"आददीताथ षड्भागप्रनष्टाधिगतान्नृपः। दशमंद्वादशंवापि सतां धर्ममनुस्मरन्" (इतिमनुः)। तत्र प्रथमेवर्षे कृत्स्नमेव दद्यात्, द्वितीये द्वादशं भागं, तृतीये दशमम्, चतुर्थादिपु षष्ठं भागंगृहीत्वा शेषं दद्यात्। राजभागस्य चतुर्थोंशः अधिगन्त्रे दातव्यः। स्वाम्यनागमे तु कृत्स्नस्य धनस्य चतुर्थमंशम् अधिगन्त्रे दत्वा शेषं राजा गृह्णीयात्। तथाह गौतमः—"प्रनष्टस्वामिकमधिगम्य संवत्सरं राज्ञारक्ष्यम्। ऊर्ध्वमधिगन्तुश्चतुर्थोंशः राज्ञः शेषम् "इत्यत्र संवत्सरमित्येववचनमविवक्षितम्। "राजा त्र्यव्दं निधापयेत्"—इति स्मरणात्। "हरेत परतो नृप," इत्येदपि स्वामिन्यनागते त्र्यव्दादूर्ध्वं व्ययीकरणाभ्यनुज्ञानपरम्। ततः परमागते तु स्वामिनि व्ययीभूतेपिद्रव्ये राजा स्वांशमवताय्यं तत्समं दद्यात् एतच्च हिरण्यादिविषयम्। गवादिविषयेवक्ष्यति (sl 174) पणानेकशफे दद्यात्— इत्यादिना॥

## CHARCHA

1. प्रनष्ट etc—प्र+नश+क्त=प्रनष्ट lost or stolen; note that प्रणाश is with cerebral due to the rule "नशेः पान्तस्य" (नत्वं न स्यात्)। पूर्वं प्रनष्टं पश्चात् अधिगतं (राजपुरुषादिभिः) इति कर्मधा।



Qual. धनम्। Originally नृपः धनिने धनं ददाति=नृपेण धनिने धनं देयम्।

2. विभावयेत्—वि+भू+णिच्+लिङ्यात्। Should prove; if unproved धन is taken by not showing proof or लिङ्ग, punishment will be of equal amount. लिङ्गैः=रूपसंख्यादिभिर्लिङ्गैः,— करणे ३या

34 & 35—If treasure-trove is got by digging, the king should give half of this to Brahmana—he getting the sum will enjoy the whole; others getting it will get 1/6 part from the king.

राजालव्ध्वा निधिं दद्याद्द्विजेभ्योअर्द्धं द्विजः पुनः।
विद्वान् अशेषमादद्यात् स सर्वस्य प्रभुर्यतः॥ ३४॥
इतरेण निधौ लव्धे राजा षष्ठांशमाहरेत्।
अनिवेदितविज्ञातो दाप्यस्तं दण्डमेव च॥ ३५॥

Prose—राजा निधिं (निखातायांभूमौस्थापितं धनं) लव्ध्वा द्विजेभ्यः (ब्राह्मणेभ्यः) अर्द्धं दद्यात्—शेषं कोषे निवेशयेत्। द्विजः पुनः विद्वान् (सन्) लब्ध्वा निधिं अशेषम् आदद्यात् (गृह्णीयात्) यतः स (ब्राह्मणः) सर्वस्य प्रभुः। (किन्तु) इतरेण (अनेयन जनेन) निधौ लव्धे, राजा षष्ठांशमाहरेत् (तन्मात्रं दद्यात् अधिगन्त्रे) अनिवेदितविज्ञातः (जनः) (राज्ञा) तं निधिं दाप्यः दण्डमेव च (शक्त्यपेक्षया स दाप्यः)॥

Beng—রাজা যদি ভূমধ্যে নিখাত স্বর্ণাদিধন পান্ তবে তার অর্দ্ধাংশ ব্রাহ্মণদের দিবেন, (বাকিটা রাজকোষে রাখিবেন); আর যদি বিদ্বান ব্রাহ্মণ তাহা পান, তবে তিনি সবটাই নিবেন, কারণ ব্রাহ্মণ জগতের প্রভু (রক্ষক ও পরিচালক)। ইতর ব্যক্তি নিধি

পাইলে, রাজা ষষ্ঠাংশ পরিমাণ তাদের দিবেন ; আর যদি বা ইতর ব্যক্তি ইহা না জানায় এবং রাজা পরে জানিতে পারেন, তবে রাজা সবই নিবেন এবং একে দণ্ডদানের ব্যবস্থা করিবেন।

Eng.—If a king gets underground treasure-trove, then he will distribute half of this to Brahmans, if again a learned Brahman get this, then he will take the whole of it, for he ( Brahmana ) is the guarder and instructor of all ; If some one else get such underground treasure the king should give him one-sixth part of it and the rest the king will take himself ; if such treasure got is not narrated to the king and the king later knows this, then the king will take away the whole treasure and cause such getter or discoverer pay commensurate fine by way of punishment.

Mita—रथ्याशुल्कशालादिनिपतितस्य सुवर्णादेर्नष्टस्याधिगमे विधिमुक्त्वा अधुना भूमौ चिरनिखातस्य सुवर्णादेर्निधिशब्द-वाच्यस्य अधिगमे विधिमाह— उक्तलक्षणं "निधिं राजा लब्ध्वा अर्धं ब्राह्मणेभ्योदद्यात्", शेषं कोषे निधापयेत्। "ब्राह्मणस्तु विद्वान्" श्रुताध्ययनसम्पन्नः सदाचारो "यदिनिधिं लभेत तदा अशेषं= सर्वमेव आदद्यात्" गृह्णीयात्। "यस्मात् असौ सर्वस्य जगतः प्रभुः"। "इतरेण तु" राजविद्वद्ब्राह्मणव्यतिरिक्तेन, अविद्वद्ब्राह्मणक्षत्रियादिना "निधौलब्धे राजा षष्ठांशमधिगन्त्रे दत्त्वा शेषं निधिं स्वयमाहरेत्। यथाह वशिष्ठः— अप्रज्ञायमानं वित्तं योधिगच्छेद्राजा तद्धरेत्, अधिगन्त्रे षष्ठमंशं प्रदद्यात्" इति। गौतमोपि—"निध्याधिगमो राजधनं भवति, न ब्राह्मणस्याभिरूपस्य, अब्राह्मणोप्याख्याता षष्ठांशं लभेत इत्येके"। [ अनिवेदित इति कर्त्तरि निष्ठा ( ? ) ] अनिवेदितश्चासौ विज्ञातश्च राज्ञे, इति 'अनिवेदितविज्ञातः'। यः कश्चित् निधिं लब्ध्वा राज्ञेन निवेदितवान् विज्ञातश्च राज्ञा "स सर्वं तं निधिं दाप्यो दण्डं च"





शक्त्यपेक्षया॥ अथ निधेरपि स्वाम्यागत्य रूपकसंख्यादिभिः स्वत्वं भावयति ( प्रमाणयति ) तदा तस्मै राजा निधिं दत्त्वा षष्ठं द्वादशं वांशं स्वयमाहरेत्। यथाह मनुः—"ममायमिति योब्रूयान्निधिं सत्येन मानवः। तस्याददीत षड्भागं राजा द्वादशमेव वा" इति। अंशबिकल्पस्तु वर्षकालाद्यपेक्षयावेदितव्यः॥

## CHARCHA

1. आदद्यात्—आ+दा+लिङ्यात्। should take. No कर्त्तभिप्राय विवक्षा here, for such विद्वान् ब्राह्मण taking it will expend for the good of other, for "स सर्वस्य जगतः प्रभुः" ( पालकः चालकश्च धर्मानुसारेण )। compare Manu here "ब्राह्मणो जायमानो हि पृथिव्यामधिजायते। ईश्वरः सर्वभूतानां धर्मकोषस्य गुप्तये॥ सर्वंस्वं ब्राह्मणस्येदं यत्किञ्चित् जगतीगतम्"......सर्वं वै ब्राह्मणोर्हति"—I. 99-100. Here the rule "आङोदोनास्यविहरणे" should guide आत्मनेपद in आ+दा if there be no कर्त्तभिप्रायविवक्षा। So it is an आर्षप्रयोग here for आददीत। Also comp "आददीताथषड्भागम्—सतां धर्ममनुस्मरम्" in Manu VIII. 30 etc. Nom. द्विजः।

2, आहरेत्—Here आहरेत् means दद्यात्=place at his or discoverer's disposal Nom. राजा। or construe—षष्ठांशं दत्त्वा शेषम् आहरेत् गृह्णीयात्।

3, अनिवेदितविज्ञातः – अनिवेदितश्चासौ विज्ञातश्च कर्मधा। Qual. इतरः understood. If he becomes अनिवेदित and then he is विज्ञात, then the धन will be taken away by the king and he will be punished by fine. उक्तकर्म of दाप्यः ( दा+णिच् यत् कर्मणि )। See दाप्य in sl. 20 for gram. here. Vijnaneshwara here says कर्त्तरि निष्ठा वा क्त in अनिवेदित. But this is unsound ; for in case of क्त, it should not come

after सकर्मक roots in the कर्तृवाच्य by making these अकर्मक by अविवक्षित-कर्मक, for Bhattoji in his Manorama says that कर्त्तरि क्त is not available after roots that have become अकर्मक through अविवक्षा of the कर्म—cp. गत्यार्थाकर्मक—इति सूत्रे अपिन गृह्यन्ते। दत्तवान् पक्वान् इत्याद्यर्थे दत्त पक्व इत्यापत्तेः; and Bhashya under "आशितः कर्त्ता" says "अत्रैव निपातनात् कर्त्तरि क्तः" and such कर्त्तरि क्त is unwarranted in case of other सकर्मक roots. So we suggest this in such cases नि+विद्+णिच् नुपंसके भावेक्त=निवेदितम् meaning निवेदनम्। then निवेदितमस्ति अस्य इति निवेदित+अच् मत्वर्थे=निवेदितः। न तथा। one who has not given information; so we may get विज्ञातः (वि+ज्ञा नुपंसके भावेक्त+अच्) having knowledge of his निधिलाभः or here वि+ज्ञा+क्त 'कर्मणि=विज्ञातः i. e, राज्ञा पश्चात् विज्ञातः'। For further details here see our Kirata I. 1 under विदितः॥

36. The King should arrange payment of चौरहृतद्रव्य to its owner, otherwise sin accrues

देयं चौरहृतं द्रव्यं राज्ञा जानपदाय तु।
अददद्धि समाप्नोति किल्विषं यस्यतस्यतत्॥ ३६॥

Prose—राज्ञा चौरहृतं द्रव्यं जानपदाय यस्यतत (तस्मै) देयम्। हि (यस्मात्) यस्य तत् (तस्य सम्बन्धे) अददत (राजा) किल्विषं (पापम्) समाप्नोति।

Beng. রাজা চৌরহৃতদ্রব্য, (চোরকে ধরিয়া লইয়া) সেই দ্রব্য নগরবাসী ধনস্বামীকে ফিরাইয়া দেওয়াইবেন বা দিবেন। কারণ এই ধন ধনস্বামীকে না দিলে রাজা পাপভাক্ হন (ধনস্বামী ও চোরের পাপভাক্ এবং নিজেও পাপকর্মভাক্ হন)।



Eng. The king should arrange payment of thief-stolen goods to the owner who is his own city-resident; if he does not pay this to the real owner, then he attains sins (of the owner and of the thief as well as he himself incurs sin).

Mita. चौरहृतं प्रत्याह—"चौरैःहृतं द्रव्यं" चौरेभ्यः विजित्य "जानपदाय" स्वदेशनिवासिने यस्य तत् द्रव्यं तस्मै 'राज्ञा दातव्यम्"। 'हि' यस्मात् 'अददत्' अप्रयच्छन् 'यस्य तदपहृतं द्रव्यं तस्य किल्विषम् समाप्नोति'। तस्य चौरस्य च यथाह मनुः—"दातव्यं सर्ववर्णेभ्यो राज्ञा चौरैर्हृतं धनम। राजा तदुपभुञ्जानश्चौरस्याप्नोति किल्विषम्" इति॥ यदि चौरहस्तादादाय स्वयमुपभुङ्क्ते तदा चौरस्य किल्विषमाप्नोति। अथ चौरहृतमुपेक्षते तदा जानपदस्य किल्विषम्। अथ चौराहृतं यतमानोपि आहर्त्तुं न शक्नुयात् तदा तावद्धनं स्वकोशात् दद्यात्। यथाह गौतमः—"चौरहृतमवजित्य यथास्थानं गमयेत् कोशाद्वादद्यात्। कृष्णद्वैपायनोपि—"प्रत्याहर्त्तुं न शक्तस्तु धनं चौरैर्हृतं यदि। स्वकोशात्तद्धिदेयं स्यादशक्ते न महीक्षिता' इति। [Acc. to Manu, the king by not giving the चौरहृतधन to its owner gets the sin of चौर। If the king himself enjoys by getting the money from the thief, then he gets चौरपाप; if he connive payment then he gets owner's sin; if again the king cant deliver हृतद्रव्य even by best efforts, then he should order payment of the stolen sum from his राजकोश। Gautama also supports this by "चौरहृतम्वजित्य"। कृष्णद्वैपायन i. e, व्यास too supports this in "प्रत्याहर्त्तुं न शक्तः" etc] ॥ ३६॥

## CHARCHA

1. जानपदाय—जनपदस्य अयम् वा तत्रभव इति जानपद (with अण्)। सम्प्रदाने ४र्थी। should be given to the नगरवासी whose द्रव्य is चौरहृत।

2. अददत्—दा+शतृ=ददत्। न ददत्। Qual. राजा। construe—यस्यतत् (धनं) तस्य (सम्वस्थे) तत् अददत् or राज्ञा चौरहृतं द्रव्यं जानपदाय स्वमिने देयम्। यस्य तत् (द्रव्यम्) तस्य अददत् तस्य किल्विषम् समाप्नोति। Not only this, in this way the king will be पापभाक् due to this पापकर्म॥—"धर्मएव हतोहन्ति धर्मोरक्षति रक्षितः··· तस्माद्धर्मोन हन्तव्यः···वृषो हि भगवान्धर्मस्तस्य यः कुरुते ह्यलम्···वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत्।···एक एव सुहृद्धर्मो निधनेप्यनुयाति यः, शरीरेण समं नाशं सर्वमन्यद्धि गच्छति"—Manu VIII, 15-17.

अथ ऋणादानप्रकरणम्।—(Realisation and giving of debts). (of the eighteen items or points of विवाद as said before this is the first). [N. B.—"ऋणदानग्रहणधर्मश्च ऋणादानमुच्यते" इति नारदवचनसारः]।

37 $\frac{1}{80}$% Interest monthly on loans given on mortgage; otherwise 2% etc.

अशीतिभागो वृद्धिः स्यान्मासि मासि सवन्धके।
वर्णक्रमाच्छतं द्वित्रिचतुष्पञ्चकमन्यथा॥ ३७॥

Prose—सवन्धके (आधिसहिते) ऋणे मासि मासि अशीतिभागः (अशीतितमः भागः) वृद्धिः स्यात् (शतमधिकृतत्र अशीतितमभागः वृद्धिः स्यात्) अन्यथा (अर्थात् अवन्धके ऋणे) वर्णक्रमात् (ब्राह्मण-क्षत्रिय-वैश्य-शूद्रवर्णक्रमात्) द्वित्रिचतुष्पञ्चकम् शतं वृद्धिः स्यात्।

Beng. যদি কোন সম্পত্তি বা দ্রব্য বন্ধক রাখিয়া ঋণ গ্রহণ করা হয়, তবে অধমর্ণ ব্যক্তি উত্তমর্ণকে (অর্থাৎ যে ঋণ দেয় তাকে) শতকরা আশীভাগের একভাগ সুদ মাসে মাসে দিবে। আর অবন্ধক ঋণে ব্রাহ্মণাদি চারিবর্ণ যথাক্রমে শতকরা দুই, তিন, চারি ও পাঁচ টাকা সুদ দিবে।



Eng.—In case of loans against mortgage, the debtor is to pay $\frac{1}{80}$% Interest per month; but in case of unprotected loans interest with be respectively, 2, 3, 4 and 5% according as the debtor is a Brahman, Kshatriya, Vaishya or Sudra.

Mita.—साधारणासाधरणरूपां व्यवहारमातृकामभिधाय अधुना अष्टादशव्यवहारपदानाम् आद्यम् "ऋणादानपदं" दर्शयति—"अशीतिभागो वृद्धिः स्यात्" इत्यादिना, "मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणेधने" (sl. 64) इत्येवमन्तेन॥ तच्च ऋणादानम् सप्तविधम्—(1) ईद्दशं ऋणं देयम् (अवश्यदेयम्), (2) ईद्दशमदेयम् (अपरिशोध्यम्), (3) अनेनाधिकारिणादेयम् (4) अस्मिन् समये देयम् 5. अनेन प्रकारेण देयम्—इति अधमर्णे पञ्चविधम्।

उत्तमर्णे—दानविधिः, आदानविधिश्च इति द्विविधम्। एतच्च नारदेन स्पष्टीकृतम् "ऋणं देयमदेयं च येन यत्र यथा च यत्। दानग्रहणधर्माभ्याम् ऋणादानमिति स्मृतम्" इति॥ तत्र प्रथममुत्तमर्णस्य दानविधिमाह, तत्पूर्वकत्वादितरेषाम्—'मासि मासि' प्रतिमासम्। बन्धकं—विश्वासार्थं यदाधीयते आधिरितियावत्। बन्धकेन सह वर्त्तते इति सवन्धकः प्रयोगः। तस्मिन् "सवन्धके प्रयोगे" प्रयुक्तस्य द्रव्यस्य "अशीतितमः भागः वृद्धिः" धर्म्याभवति। 'अन्यथा' वन्धकरहिते 'वर्णानां' ब्राह्मणाचतुर्वर्णानां "क्रमेण द्वित्रिचतुष्पञ्चकं शतं" (?) धर्म्यं भवति। ब्राह्मणेधमर्णे द्विकं शतं, क्षत्रिये त्रिकं" वैश्येचतुष्कं, शूद्रे पञ्चकम्। 'मासिमासि' इत्येव। द्वौवा त्रयो वा चत्वारः पञ्च वा द्वित्रिचतुष्पञ्चाः (डच् बहुव्रीहौ)। यस्मिन् शते वृद्धिर्दीयते इति "द्वित्रिचतुष्पञ्चकं शतम्" [ "संख्याया अतिशदन्तायाः कन्" इत्यनुवृत्तौ "तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते," इति कन्]॥ (वृद्धेः वृद्धिश्चक्रवृद्धिः, प्रतिमासं तु कालिका। इच्छाकृताकारिता, स्यात् कायिका कायकर्मणा)॥ इयञ्चवृद्धिर्मासिमासि गृह्यते इति कालिका। इयमेव वृद्धिर्दिवसगणनया विभज्य प्रतिदिवसं गृह्यमाणा कायिका भवति। तथा च नारदेन——"कायिका कालिकाचैव कारिता च तथापरा। चक्रवृद्धिश्च शास्त्रेषु

तस्य वृद्धिश्चतुर्विधा" इत्युक्त्वाउक्तम्—"कायाविरोधिणी शश्वत् पणपादादि-कायिका। प्रतिमासं स्रवन्ती या वृद्धिः सा कालिका मता। वृद्धिः सा कारिता योधमर्णिकेन स्वयंकृता। वृद्धेरपि पुनर्वृद्धिश्च चक्रवृद्धिरुदाहृता" ॥

## CHARCHA

1. मासि मासि=वीप्सायां द्वित्वम्।

2. अशीति &c—अशीतितमः भागः=अशीतिभागः by the dictum "क्वचित् वृत्तिविषये संख्याशब्दस्य पूरणार्थत्वमिष्यते", अशीति here means अशीतितमः। This is in Apposition with वृद्धिः। Also note here "विधेयोद्देश्ययोः लिङ्गवचनेषु न तन्त्रता"।

3. वर्णक्रमात्—हेतौ ५मी।

4. द्वित्रि &c=द्वौ वा त्रयो वा चत्वारः वा पञ्च वा अस्मिन् इति द्वित्रिचतुःपञ्चाः (with ड प्रत्यय in बहुव्रीहि)—षत्व in…चतुःपञ्च because of the prohibition "अनुत्तरपदस्थस्य" in the rule "नित्यं समासे अनुत्तरपदस्थस्य"। So the reading द्वित्रिचतुष्पञ्चकम् here is sound.

Similarly द्विस्त्रिश्चतुः पञ्चकम is also not good; for द्विः,त्रिः चतुः with सुच् to denote frequency of action will not be consistent with पञ्च having no कृत्वसुच् प्रत्यय to denote क्रियाभ्यावृत्ति ॥

द्वित्रिचतुःपञ्चाः वृद्धिर्दीयते अस्मिन् शते इति कन्। द्वित्रिचतुःपञ्चकम्। Same case with or Q. शतम्। For कन् in the sense of वृद्धि &c in some matter, see the rule "तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते" (Mita), construe—पञ्चकं शतं वृद्धिः स्यात् ॥ शतम्=here a collection of शत so say शतं प्रति वृद्धिः स्यात्। In this sense of शत (meaning a collection of शत), compare the Panini rule "शताच्च ठन्यतौ अशते" where अशते means "not in a collection of शत"। शतम् is in App. to वृद्धिः।



38- Interest for forest-enterers, sea-traders etc.

कान्तारगास्तु दशकं सामुद्रा विंशकं शतम्।
दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ॥ ३८ ॥

Prose—कान्तारगास्तु दशकं शतं वृद्धिं दद्युः (उत्तमर्णाय), सामुद्राः (समुद्रव्यवहारिणः) विंशकं शतं वृद्धिं दद्युः। सर्वासु जातिषु सर्वे स्वकृतां (कारितां अर्थात् स्थिरीकृतामित्यर्थः वृद्धिं) वा दद्युः।

Beng. যে সকল বণিক্ ঋণগ্রহণ করিয়া সমধিক লাভের জন্য দুর্গম বনে (ব্যবসায় জন্য) যায়, তাঁরা শতকরা দশভাগ সুদ দিবে। তাদৃশ সমুদ্র ব্যবসায়ীরা শতকরা কুড়িভাগ সুদ দিবে। ব্রাহ্মণাদি সকল জাতির ঋণগ্রাহী (অধমর্ণ), স্থিরীকৃত সুদ দিবে। [এই স্থিরীকৃত বৃদ্ধির নাম কারিতা বৃদ্ধি]।

Eng. The traders treading in deep forests (after taking loan) should pay 10% loan interest to their creditors; so such sea-farers should give 20% loan Int. to their creditors (due to greater profit in this); and all people of all castes should pay the stipulated amount of interest on loans taken.

[Interests are of 4 kinds—(1) चक्रवृद्धि वा compound Interest, (2) monthly interest called कालिका (3) daily interest termed कायिका वा (4) stipulated amount of interest called करिता (स्थिरीकृता)].

Mita.—ग्रहीतृविशेषेण वृद्धेः प्रकारान्तरमाह—कान्तारम् अरण्यं गच्छन्तीति "कान्तारगाः"। ये वृद्ध्या धनं गृहीत्वा अधिकलाभार्थम् अतिगहनं प्राणधन-विनाशशङ्कास्थानं प्रविशन्ति "तेदशकं शतं दद्युः"। येच समुद्रगास्ते विंशकं शतं दद्युः। मासि मासि इत्येव। एतदुक्तं भवति—कान्तारगेभ्यो दशकं शतं सामुद्रेभ्यश्च विंशकं शतम् उत्तमर्ण आदद्यात्। मूलविनाशस्यापि

-शङ्कितत्वात् ॥ इदानीं कारितां वृद्धिमाह—"सर्वे ब्राह्मणादयोधमर्णाः अवन्धके सवन्धके वा स्वकृतां स्वाभ्युपगतां वृद्धिं सर्वासु जातिषु दद्युः ॥ [ क्वचिदकृतापि वृद्धिर्भवति, यथाह नारदः—"न वृद्धिः प्रीतिदत्तानां स्याद् अनाकारिता क्वचित् । अनकारितमप्यूर्ध्वं वत्सरार्धात् विवर्धते ।" । यस्तु याचितकं गृहीत्वा देशान्तरं गतस्तं प्रति कात्यायनेन उक्तम्—"यो याचितकमादाय तमदत्त्वा दिशं व्रजेत् । ऊर्ध्वं संवत्सरात् तस्य तद्धनं वृद्धिमाप्नुयात्" । यश्च याचितकमादाय याचितोप्यदत्त्वा देशान्तरं व्रजति तं प्रति तेनैवोक्तम्—"कृतोद्धारमदत्त्वा यो याचितस्तु दिशं व्रजेत् । ऊर्ध्वं मासात्त्रयात्तस्य तद्धनं वृद्धिमाप्नुयात्" ॥ यः पुनः स्वदेशे स्थित एव याचितो याचितक न ददाति तं याचितकालादारभ्य अकारितां वृद्धिं दापयेत् राजा । यथाह—'स्वदेशेपि स्थितोयस्तु न दद्याद् याचितः क्वचित् । तं ततोऽकारितां वृद्धिमनिच्छन्तं च दापयेत् ।'' अनाकारित वृद्धेरपवादो नारदेनोक्तः—' पण्यमूल्यंभृतिर्न्यासोदण्डो यश्च प्रकल्पितः । वृथादानाक्षिकपणा वर्धन्ते नाविवक्षिता (अनाकारिता) । इति ॥ ३८ ॥ [आक्षिकपणाः =अक्षक्रीड़ासन्वन्धिनः पणाः ] ॥ ( Pana usually are copper coins).

CHARCHA

1. कान्तारगाः &c—Nom. to दद्युः ॥

2. विंशकम्—विंशतिः अस्मिन् वृद्धिर्दीयते इति' विंशति+डवुन् असंज्ञायाम्= then विंश+अक=विंशकम् । 'See the rule' विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम्" । obj. of दद्युः ॥ Q. शतम् ।

39. Interest in case of cattle, cloth, paddy etc.

सन्ततिस्तु पशुस्त्रीणां रसस्याष्टगुणापरा ।
वस्त्रधान्यहिरण्यानां चतुस्त्रिर्द्विगुणापरा ॥ ३९ ॥

Prose—पशुस्त्रीणां सन्ततिस्तुवृद्धिः ( वृद्धिस्वरूपम्स्यात् ) ; रसस्य ( तैल-



घृतादिरसद्रव्यस्य ) [ वृद्ध्यावर्धमानस्य ] अष्टगुणावृद्धिः परा स्यात् ( नातः परं वर्धते ) ; वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा च वृद्धिः परा स्यात् ।

Beng—বন্ধকীভূত পশুস্ত্রীর সন্ততিই উত্তমর্ণের পক্ষে বৃদ্ধিস্বরূপ গণ্য হইবে। (অর্থাৎ উত্তমর্ণ সেই সন্ততি বা শাবক পাইবে)। কিন্তু রসাদি দ্রব্য ধার নিলে, মূল্যগণনায় বৃদ্ধি হইতে থাকিলে (এবং অধমর্ণ যদি কারিত কোন বৃদ্ধি না দেয়) তবে বৃদ্ধি অষ্টগুণ পর্য্যন্ত হইতে পারে ( এর বেশী নয় ) ; তদ্রূপ বস্ত্র ধান্য ও হিরণ্যের বৃদ্ধি যথাক্রমে চারিগুণ, তিনগুণ ও দুইগুণ অর্থাৎ মূল্যের চারি, তিন ও দুই পর্য্যন্ত বৃদ্ধি হইবে ( এর বেশী নয় ) ।

Eng.—In case of mortgaged female-cattle etc. their issues will be counted as Interest to the creditor, in case of liquid substances like oil, ghee etc the interest ( if not given ) may increase up to eight times of the value of the goods ; in case of cloth paddy and gold the accumulated interest may be respectively four times, thrice or and twice the original value of the goods.

Mita—अधुना द्रव्यविशेषेण वृद्धिविशेषमाह—पशुस्त्रीणां सन्ततिरेव वृद्धिः ( स्यात् ) पशूनां स्त्रीणां पोषणासमर्थस्य प्रयोगः सम्भवति [ one unable to keep cattle, desiring their maintenence and issues may keep these as mortgage to a creditor ] । ग्रहणश्च क्षीरपरिचर्य्यार्थिनः [ The debt given is to enjoy milk etc of cattle &c. ). अधुना प्रयुक्तस्य द्रव्यस्य वृद्धिग्रहणमन्तरेणापि चिरकालावस्थितस्य कस्य द्रव्यस्य कियती पराबृद्धिरित्यपेक्षित आह—[ The maximum amount of accumulated interest to be given at a time will be thus ] "रसस्य" तैलघृतादेर्वृद्धिग्रहणमन्तरेण चिरकालावस्थितस्य 'स्वकृतया वृद्ध्या वर्धमानस्य' अष्टगुणा वृद्धिः परा," नातःपरं वर्धते । तथा "वस्त्रधान्यहिरण्यानां यथासंख्यं चतुर्गुणा त्रिगुणा द्विगुणावृद्धिः

परा" ॥ [ वशिष्ठेन तु रसस्य त्रैगुण्यमुक्तम्—द्विगुणं हिरण्यं त्रिगुणं धान्यं। धान्येनैव रसा व्याख्याताः पुष्पमूलफलानि च। तुलाधृतमष्टगुणम्। मनुनातु धान्यस्य पुष्पमूलफलादीनाञ्च पञ्चगुणत्वमुक्तम् – धान्येशदेलवे वाह्ये नातिक्रामति पञ्चताम्"। शदः क्षेत्रफलं पुष्पमूलफलादि, लवो मेषोर्णाचमरीकेशादिः, वाह्यो वलीवर्दतुरगादिः। धान्यशदलववाह्यविषया वृद्धिः पञ्चगुणत्वं नातिक्रामति इति ॥ तत्र अधमर्णयोगग्रतावशेन दुर्भिक्षादिकालवशेन च व्यवस्थाद्रष्टव्या। एतच्च सकृत्प्रयोगे सकृदाहरणे च वेदितव्यम्। पुरुषान्तरसंक्रमणेन प्रयोगान्तर-करणे तस्मिन्नेव वा पुरुषे अनेकशः रेकसेकाभ्यां प्रयोगान्तकरणे-सुवर्णादिकं द्वैगुण्याद्यतिक्रम्य पूर्ववद्वर्धते। सकृत्प्रयोगेपि प्रतिदिनं प्रतिमासं प्रतिसंवत्सरं वा वृद्ध्याहरणे अधमर्णदेयस्य द्वैगुणासम्भवात् पूर्वाहृतवृद्ध्या सह-द्वैगुण्यमतिक्रम्य वर्धते एव। यथाहमनुः– 'कुसीदवृद्धिर्द्वैगुण्यं' नात्येति ("सकृदाहिता" इत्यपि पाठः) [ Manu says—Interest should not exceed twice at a time in case of loans taken. ] उपचर्य्यार्थं प्रयुक्तं द्रव्यंकुसीदं तस्य वृद्धिः कुसीदवृद्धिः, सा द्वैगुण्यं नात्येतिनातिक्रामति। यदि सकृदाहिता सकृत्प्रयुक्ता, पुरुषान्तरसंक्रमणादिना प्रयोगान्तरकरणे द्वैगुण्य-मत्येति ॥ "सकृदाहृता" इति पाठे तु शनैः शनैः प्रतिदिनं प्रतिमासं प्रति संवत्सरं वा अधमणादाहृता द्वैगुण्यं नात्येति व्याख्येयम्। तथा गौतमेनाप्युक्तम्—चिरस्थाने द्वैगुण्यं प्रयोगस्य इति। 'प्रयोगस्य' (The object or money kept) इत्येकवचननिर्देशात् प्रयोगान्तरकरणे द्वैगुण्या-तिक्रमोऽभिप्रेतः। 'चिरस्थान' इति निर्देशात् शनैः शनैर्वृद्धिग्रहणे द्वैगुण्याति-क्रमोदर्शितः ॥ ३९ ॥

## CHARCHA

1. अष्टगुणा—अष्टौगुणाः यस्यां वद्—। Qual वृद्धिः understood.

2. वस्त्र etc—वस्त्रञ्च, धान्यञ्च, हिरण्यम् च, द्वन्द्व। अत्र द्रव्यविवक्षायां "जातिरप्राणिनाम्" इति समाहारो न। तेषाम्। Related to वृद्धिः।



3. चतुस्त्रि etc.—चत्वारश्च त्रयश्च, द्वौच इति चतुस्त्रिद्वयः द्वन्द्व। (यथाक्रमं) एतेगुणा यस्याम् ॥ वह। Q. वृद्धिः। maximum accumulated interest on वस्त्र etc if given at a time should on no account exceed चतुर्गुण त्रिगुण वा द्विगुण of the face value of goods.

40. Creditor should not be interfered by the king when he is duly realising his due money.

> प्रपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेत्।
>
> साध्यमानो नृपं गच्छन् दन्ड्यो दापयश्च तद्धनम् ॥ ४० ॥

Prose—प्रपन्नं (स्वीकृतं) अर्थं साधयन् (प्रत्याहरन् उत्तमर्णः) नृपतेः (नृपतिना) न वाच्यः (निवारणीयः)। साध्यमानः (याच्यमानः अधमर्णः) नृपं गच्छन् दण्ड्यः स्यात्। (शक्त्यनुसारेण) धनिने (उत्तमर्णाय) तद्धनम् राज्ञा दाप्यः।

Beng. অধমর্ণ কর্তৃক স্বীকৃত অর্থ উত্তমর্ণ ধর্মতঃ আদায় করিতে চেষ্টা করিলে রাজা তাতে বাধা দিবেন না। এবং যাচ্যমান অধমর্ণ যদি এজন্য রাজার নিকট যায় তবে রাজা তার দণ্ড বিধান করিবেন এবং তাকে দিয়া ধনীর ধন দেওয়াইবেন।

Eng. If a creditor legally realises his due accepted by the debtor, then the king should not interfere in this; rather if the debtor approaches the king, he should be punished for (delay) and be ordered payment of dues to the creditor.

Mita—ऋणप्रयोगधर्मा उक्ताः, साम्प्रतं प्रयुक्तस्य धनस्य ग्रहणधर्माः उच्यन्ते—(the rules regarding advancing loans are enumerated, now the procedures regarding the realisation of money laid as loan

to a debtor are stated)—'प्रपन्नम'भ्युपगतम् सधमर्णेन 'धन'' साक्ष्यादि-भिर्भावित' वा साधयन्' प्रत्याहरन् धर्मादिभिरुपायैः उत्तमर्णो "नृपतेर्वाच्यः" निवारणीयः 'न भवति' ॥ धर्मादयश्चोपाया मनुना दर्शिता – "धर्मेण व्यवहारेण छलेनाचरितेन च । प्रयुक्त' साधयेत् अर्थ' पञ्चमेन वलेन च' इति ॥ धर्मेण प्रीतियुक्तेन सत्यवानेन, व्यवहारेण साक्षिलेख्यादुपायेन, छलेन उत्सवादिव्याजेन भूषणादि-ग्रहणेन, अचरितेन अभोजनेन, पञ्चमेन उपायेन वलेन निगड़वन्धनादिना ; उपचयार्थं प्रयुक्त' द्रव्यम् एतैरुपायैरात्मासात् कुर्य्यात् ॥ "प्रपन्न' साधयन्नर्थ' न वाच्य" इतिवदन्अप्रतिपन्न' साधयन् राज्ञा निवारणीय इति दर्शयति । एतदेव स्पष्टीकृत' कात्यायनेन—'पीड्येद् यो धनी कश्चिद्दणिक' न्यायवादिनम् । तस्मादर्थात् स हीयते तत्सम' चाप्नुयाद्दमम्'' इति ॥ यस्तु धर्मादिभिरुपायैः 'प्रपन्नमर्थ' साध्यमानः' याच्यमानः 'नृप' गच्छेत्' राजनमभिगम्य साधयन्तमभियुङ्क्ते सदण्ड्य, भवति', शक्त्यनुसारेण "धनिने तद्धन' दाप्यश्च'' ॥ [ राज्ञादापने च प्रकारा दर्शिताः – "राजातु स्वामिने विप्र' सान्त्वेनैव प्रदापयेत् । देशाचारेण चान्यांस्त्र दुष्टान् संपीड्यदापयेत् । रिक्थिन' सुहृद'वापि छलेनैवप्रदापयेत्'' इति ॥ "साध्यमानो नृप' गच्छन्" इत्येतत् 'स्मृत्याचारव्यपेतेन' इत्यस्य प्रत्युदाहरण' वोध्यव्यम् ॥ ४० ॥

## CHARCHA

1. साधयन्—साध+णिच्+लटः स्थाने शतृ । सिध+णिच् शतृ also gives साधयत् if the reference is to something अपारलौकिक । And the present one is अपारलौकिक, so the rule applies. The sutra on the point is "सिध्यतेरपारलौकिके" । ( see ante ) construe—अर्थ' साधयन् प्रत्याहरन् उत्तमर्णः ।

2. वाच्यः—वच+ण्यत्=वाच्यः is to be said. Agrees with उक्तकर्म—उत्तमर्णः understood. नृपतेः वा नृपतिना वाच्यः by the rule "कृत्यानां कर्त्तरि वा ।" By the rule "वचोऽशब्दसंज्ञायाम्" we get वाच्य otherwise वाक्य to mean शब्द ।



3. साध्ययानः—deriv. above. It means याच्यमानः । Q. अधमर्णः understood. दा+णिच्+यत् कर्मणि=दाप्यः is to be given. See sl. 20 for gram. here.

41. The procedure where there are many creditors.

गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः ।
दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम् ॥ ४१ ॥

Prose—अधमर्णिकः ( समानजातीयेषु धनिषु ), धनिनां ( धन' ) [ वा धनिनां सम्बन्धे ] गृहीतानुक्रमात् राज्ञा धन' दाप्यः । ( भिन्नजातीयेषु ) ब्राह्मणायैव च दत्त्वा तदनन्तरम् ( क्षत्रियादिकः ) (नृपतिना वा ) दाप्यः ।

Beng. অনেক উত্তমর্ণ স্থলে ধনিগণ যদি সমানজাতীয় হন, তবে রাজা অধমর্ণকে গৃহীতক্রমানুসারে ধন দেওয়াইবেন ( অর্থাৎ ধনগ্রহণক্রমে পূর্ব পূর্ব উত্তমর্ণের অর্থ ঋণশোধ করাইবেন ); ভিন্ন জাতীয় বহু উত্তমর্ণ অভিযোগ আনিলে রাজা ব্রাহ্মণ-ক্ষত্রিয়াদি বর্ণ ক্রমানুসারে অধমর্ণকে দিয়া ঋণ পরিশোধ করাইবেন ।

Eng. In case of many creditors of same caste, the king should cause the debtor to pay debts in order of precedence ( in procurement of debts) ; but if the creditors are of different castes, then the king should order payment of debts in the order of Brahmana, Kshatriya etc.

Mita—बहुषूत्तमर्णिकेषु ( धनिषु ) युगपत्प्राप्तेषु एकोधमर्णिकः केन क्रमेण दाप्यो राज्ञा इत्यपेक्षिते आह—समानजातीयेषु धनिषु "येनैवक्रमेण धन' गृहीत' तेनैव क्रमेणाधमर्णिकः राज्ञा दाप्यः'' । भिन्नजातीयेषु तु ब्राह्मणादिक्रमेण ॥

## CHARCHA

1. गृहीतानुक्रमात्—गृहीतः अनुक्रमः । कर्मधा । तस्मात् । ल्यपलोप कर्मणि ५मी । गृहीतक्रममाश्रित्य इत्यर्थः । or हेतौ ५मी ॥ धनिनाम्—सम्बन्ध विवक्षया षष्ठी ।

2. अधमर्णिकः—अधमम् ऋणम् by कर्मधा—gives अधमर्णम्। तत् अस्ति अस्य इति अस्त्यर्थे ठन् प्रत्ययः by the rule "अत इनिठनौ"। Similarly we get उत्तमर्णिक (as here in sl. 42 and in Mitakshara etc)॥ Also note उत्तमम् ऋणमस्य gives उत्तमर्णः and अधमम् ऋणमस्य gives अधमर्णः by वहुं। See our Karakaprakarana also under the rule "धारेरुत्तमर्णः"।

42. If the creditor is weak to realise his due, then the king will arrange payment and punishment by taking costs from the creditor.

राज्ञाधमर्णिकोदाप्यः साधिताद्दशकं शतम्।
पञ्चकंच शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः॥ ४२॥

Prose---अधमर्णिकः राज्ञा साधितात् (स्वीकृतात् अर्थात्) शतं (प्रति) दशकं दाप्यः (दण्डस्वरूपः दाप्यः)। प्राप्तार्थः उत्तमर्णिकः शतं (प्रति) पञ्चकं राज्ञा दाप्यः (भृतिस्वरूपः दाप्यः)।

Beng. উত্তমর্ণিক আদায়ে অসমর্থ হইলে রাজা অধমর্ণকে প্রমাণীকৃত অর্থ দেওয়াইবেন; শতকরা দশমাংশ দণ্ডস্বরূপও দিতে হইবে এবং এক্ষেত্রে উত্তমর্ণকেও শতকরা পঞ্চমাংশ দিতে হইবে বা রাজাকে তিনি দিবেন। (N. B—এটা মামলার খরচা স্বরূপ রাজপ্রাপ্য)।

Eng. If a creditor is weak (in power) and can't realise his duly proved sum, then the king will cause the debtor pay the proved money and also one-tenth percent of realisation will be his punishment; and one-fifth per cent will have to be given by the creditor to the 'ng as costs etc.



Mita—यदापुनः उत्तमर्णो दुर्बलः प्रतिपन्नमर्थं धर्मादिभिरुपायैः साधयितुम् (प्रत्याहर्त्तुम्) अशक्नुवन् राज्ञा साधितार्थोभवति, तदाधमर्णस्य दण्डमुत्तमर्णस्य च भृतिदानमाह—"अधमर्णिको राज्ञा प्रतिपन्नार्थात् साधितात् दशकशतंदाप्यः"। प्रतिपन्नस्य साधितार्थस्य दशममंशं राज्ञा अधमर्णिकात् दण्डरूपेण गृह्णीयात् इत्यर्थः। 'उत्तमर्णस्तु पञ्चकं शतं भृतिरूपेण दाप्यः साधितार्थस्य विंशतितमं भागमुत्तमर्णाद्राजा भृत्यर्थं (as cost or remuneration) गृह्णीयादित्यर्थः॥ अप्रतिपन्नार्थसाधने तु दण्डविभागो पूर्वं दर्शितः—"निह्नवे भावितो दद्यात्" इत्यादिना (see sl 11 ante).

## CHARCHA

1. दशकंशतम् and पञ्चकंशतम्—construe शतं दशकं (with कन्) दाप्यः (अधमर्णो दाप्यः)—see also sl. 37. for deriv of पञ्चकम् (as पञ्च अस्मिन् शते वृद्धिर्दीयते इति पञ्चकम् with कन्)। So we get दशकम्। See sl. 37-38 also.

43 Procedure of payment by an अधमर्ण when he is निर्धन।

हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत्।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम्॥ ४३॥

Prose—ब्राह्मणादिरुत्तमर्णः परीक्षीणं (धनहीनं) हीनजातिमृणार्थं (ऋणादायार्थं) कर्मकारयेत्। ब्राह्मणस्तु परीक्षीणः (अधमर्णःसन्) यथोदयम् (यथासम्भवं) शनैः दाप्यः।

Beng—অধমর্ণ যদি ধনহীন হয় এবং হীনজাতি হয়, তবে ব্রাহ্মণাদি উত্তমর্ণ ঋন আদায় জন্য তাকে দিয়া কর্ম করাইয়া লইবেন। আবার নির্ধন ব্রাহ্মণ যদি অধমর্ণ হন্, তবে তার নিকট হইতে যথাসম্ভব ধীরে ধীরে ঋণ আদায় করিবেন।

Eng — If some higher caste is a creditor, then he to realise his due from a lower caste poor debtor by making him work, but if the Brahmana is a debtor and is poor as well, then he is to be ordered to pay gradually by instalments.

Mita—सधनमधमर्णिकं प्रत्युक्तम् (in prior sloka), अधुना निर्धनमधमर्णिकं प्रत्याह—"ब्राह्मणादिजातिरुत्तमर्णः हीनजातिं परिक्षीणं निर्धनम् ऋणार्थं ऋणनिवृत्त्यर्थं 'कर्म' स्वजात्यनुरूपं 'कारयेत्' तत्कुटुम्बाविरोधेन ( by non-interference of his पोष्यवर्ग )। 'ब्राह्मणस्तु पुनः परिक्षीणः निर्धनः शनैः शनैः यथोदयं' यथासम्भवम् ऋणं दाप्यः॥ अत्रच "हीनजातिग्रहणं समानजातेरप्युपलक्षणम्। अतश्च समानजातिमपि परिक्षीणं यथोचितं कर्म कारयेत्। "ब्राह्मण"ग्रहणञ्च श्रेयोजातेरुपलक्षणम्। अतश्च क्षत्रियादिरपि परीक्षीणो वैश्यादेः शनैःशनैर्दाप्यः यथोदयम। एतदेव मनुना स्पष्टीकृतम्—कर्मणापिसमं कुर्यात् धनिकेनाधमर्णिकः। समोपकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैः"। उत्तमर्णेन समं निवृत्तोत्तणाधमर्णव्यपदेशमात्मानमधमर्णः कर्मणा कुर्यादित्यर्थः [ To equalise उत्तमर्ण-अधमर्ण relation or equal the अधमर्ण he is to do work ]॥

## CHARCHA

1. परिक्षीणम् ——परि+क्षि+क्त=परिक्षीणः one weak of money (here). क्षि becomes क्षी in कर्त्तरि क्त by "निष्ठायामण्यदर्थे", then निष्ठा क्त becomes न by the rule 'क्षियोदीर्घात्'। Qual. हीनजातिम्

2. ऋणार्थम्—ऋणाय इदम् इति ऋणार्थम्, a नित्यतत् of ४र्थी तत् class. Adv, qual. कारयेत् (कृ+णिच्+लिङ्यात्; should cause to do ).





3. यथोदयम्—उदय is प्राप्ति here. उदयमनतिक्रम्य, - यथोदयम्, अव्ययीभाव। Adv. qual दाप्यः॥ दा+णिच+यत् कर्मणि (see sl. 20).

44. Non-acceptance of ऋण will not conduce to further interest etc.

दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम्।
मध्यस्थस्थापितं चेत्स्याद्वर्धते न ततः परम्॥ ४४॥

Prose—यदा उत्तमर्णः दीयमानं प्रयुक्तं स्वकं धनं न गृह्णाति, तदा तत् ( धनं ) मध्यमस्थापितं चेत्, ततः परम् ( स्थापनात् परं ) न वर्धते।

Beng. অধমর্ণ ঋণশোধ করিতে চাহিলে যদি উত্তমর্ণ ( বৃদ্ধির লোভে ) সেই নিজস্ব ধন গ্রহণ না করে, তবে উহা মধ্যস্থ হস্তে দিবে, তখন ইহার আর সুদ বৃদ্ধি হইবে না।

Eng. If a debtor is desirous to pay off the debt, but if the creditor does not accept this due of his ( greed for further interest), then it should be placed in the hand of some arbitrator, and then no further Interest will accrue.

Mita.—मध्यस्थस्थापितं न वर्धते – किञ्च उपचयार्थं "प्रयुक्तं धनं अधमर्णेन दीयमानमुत्तमर्णो" वृद्धिलोभाद् "तदि न गृह्णाति" तदाधमर्णेन "मध्यस्थहस्तेस्थापितं यदि स्यात् तदा" ततः स्थापनादूर्ध्वं "न वर्धते"। अथ स्थापितमपि याच्यमानो न ददाति ततः पूर्ववत् वर्धते एव॥ ४४॥

## CHARCHA

1. दीयमानम्—दा+कर्मणि शानच्। Qual. धनम्। The प्रयुक्त धन that is now अधमर्णेन दीयमानम्॥ Then it should be placed with some arbitrator or mediator ( मध्यस्थ )। मध्यस्थस्थापितं न वर्धते।

**45.** The common debt for maintenance is अवश्यदेय ।

अविभक्तैः कुटुम्बार्थे यदृणं तु कृतं भवेत् ।
दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि ॥ ४५ ॥

Prose—अविभक्तैः ( बहुजनैः ) कुटुम्बार्थे ( कुटुम्बपोषणार्थं ) यद् ऋणं कृतं भवेत्, तत् कुटुम्बिनि प्रेते ( मृते ) प्रोषिते ( दूरप्रवासे गते वा ) रिक्थिनः ( रिक्थभोगिनः, धनग्राहिणः इत्यर्थः ) दद्युः । [ N. B.—रिक्थं=पितृधनम् क्रयं विना प्राप्तद्रव्यम् च ] ।

Beng. যদি একান্নপরিবারভুক্ত বহুজন পোষ্যপালনের জন্য কোন ঋণ করেন, তবে পরিবারস্বামী মৃত হইলে বা বহুকাল ধরিয়া বহুদূর গেলে, তৎসম্পত্তিভোগিগণই সেই ঋণ পরিশোধ করিবেন বা পরিশোধ করিতে বাধ্য থাকিবেন ।

Eng. If several persons of an undivided family incur debts for the maintenance of the family members, and if the head of the family subsequently dies or goes abroad for long then this is to be paid off by the enjoyers or heirs of the inheritance or inherited property.

Mita. इदानीं देयमृणं यदा येन च देयं तदाह—अविभक्तैर्बहुभिः कुटुम्बार्थम् एकैकेन वा यदृणं कृतं तदृणं कुटुम्बी दद्यात् । तस्मिन् प्रेते प्रोषिते वा तद् रिक्थिनः सर्वे दद्युः ॥ ४५ ॥

CHARCHA

1. कुटुम्बार्थे—कुटुम्बस्य अर्थः प्रयोजनं, ६तत् । तस्मिन् । विषयाधिकरणे ७मी । Debt for पोष्यपालन must be paid by कुटुम्बी or गृहस्वामी । If he is dead or gone off for long, then रिक्थभोगिनः ऋणं दद्युः ॥ रिक्थ here is here ancestral inheritance—पैतृकसम्पत्ति वा



it means क्रयं विना स्वकीयत्वेन प्राप्तं धनादिकम् any bequest or inheritance—Though रिक्थ means any धन, comp. "रिक्थं धनं वसु" in Amara and "गर्भस्थः पित्र्यं रिक्थमर्हति" Sak VI 21. in स्मृति it is पैतृकधनसम्पत्ति see sl. 29. रिक्थ+मत्वर्थे इनि=रिक्थिन् one owning bequest (here). रिक्थ and दाय (inheritance of ancestral property) are synonymous.

2. प्रोषिते—qual. कुटुम्बिनि । प्र+वस+क्त कर्त्तरि अपिकर्मकत्वात्= gone abroad (and for long here).

46. But husband's personal debts wont be paid by wife or viceversa, so son's debts will not be paid by parents.

न योषित् पतिपुत्राभ्यां न पुत्रेण कृतं पिता ।
दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतंतथा ॥ ४६ ॥

Prose – कुटुम्बार्थात् ऋते, योषित् पतिपुत्राभ्यां कृतम् ऋणं न दद्यात्, पिता पुत्रेण कृतम् ऋणं न दद्यात्; तथा पतिः स्त्रीकृतम् ऋणं न दद्यात् ।

Beng কুটুম্বপোষণের জন্য না হইলে যোষিৎস্ত্রী পতির ঋণ, বা যোষিৎ মাতা পুত্রের ঋণ, পিতা পুত্রকৃত ঋণ এবং পতি স্ত্রীকৃত ঋণ শোধ করিবেন না বা শোধ করিতে বাধ্য থাকিবেন না । [ কিন্তু পোষ্যপালনের জন্য · ণ অভিভাবক কুটুম্বী অবশ্যই পরিশোধ করিবেন । ]

Eng. Excepting for maintenance of family, the debt incurred by husband should not be paid by wife, nor son's debt will be paid by mother or father; similarly wife's debt is not necessarily to be paid by husband.

Mita—येन ऋणं देयम् इत्यत्र प्रत्युदाहरणमाह—"पत्याकृतमृणं योषिद्" भार्या न दद्यात् । पुत्रेणकृतं ऋणं योषित् माता नदद्यात् । तथा पुत्रेणकृतं

पिता न दद्यात्। तथा भार्य्याकृतं पतिर्न दद्यात्। "कुटुम्वार्थात् ऋते" इति सर्वशेषः। अतश्च कुटुम्वार्थं येन केनापि कृतं तत् कुटुम्विना देयम्। तदभावे तद्दायहरैर्देयम् इत्युक्तमेव ॥ ४६ ॥

## CHARCHA

1. योषित्---योषित् is a woman ; in connection with पति it refers to wife ; and in connection with पुत्र it refers to माता here। Nom. to दद्यात्।

2. कुटुम्वार्थात्---कुटुम्वस्य अर्थः प्रयोजनम्, ६तत्। तस्मात्। ऋते शब्दयोगे ५मी by the rule "अन्यारादितरर्त्ते---" etc. चान्द्रमते ऋतेशब्दयोगे द्वितीया च। comp. "पुरुषाराधानमृते"। See Manorama also.

47. son should not pay ancestral debt incurred due to drinking and dissipation etc.

सुराकामद्यूतकृतं दण्डशुल्कावशिष्ठकम्।
वृथादानं तथैवेह पुत्रो दद्यान्न पैतृकम् ॥ ४७ ॥

Prose---सुराकामद्यूतकृतं, दण्डशुल्कावशिष्टकम् तथा वृथादानं पैतृकं ऋणं ( पितुरागतम् ऋणम् ) पुत्रः इह ( संसारे ) न दद्यात्।

Beng. সুরাপানে, কামসম্ভোগে, পাশক্রীড়ায় পণজন্য কৃত পৈতৃকঋণ, রাজদণ্ডরূপে নির্দ্ধারিত অদত্ত পৈতৃক ঋণ, কন্যাদানাদি শুল্কের অবশিষ্ট ঋণ, ধূর্ত্তাদিকে অযথাদত্ত পৈতৃকঋণ, পুত্র দিতে বাধ্য থাকিবে না।

Eng. The ancestral debt incurred for drinking, dissipation and stakes in gambling, the remainder of debt levied as punishement by the king and remaining debt during



daughter's payment of dowry, also debt for unnecessary payment to knaves, cheats etc should not necessarily be paid by the son (though enjoying inheritance).

Mita---"पुत्रपौत्रैर्ऋणं देयम्" (sl. 50) इति वक्ष्यति तस्य पुरस्तादपवादमाह--- सुरापानेन यत्कृतम् ऋणं, कामकृतं स्त्रीव्यसननिमित्तं, द्युते पराजयनिमित्तं, दण्डशुल्कयोरवशिष्टं ( ऋणं ), "वृथादानं" धूर्त्तवन्दिमल्लादिभ्यो यत्प्रतिज्ञातं ( ऋणं )---"धूर्त्ते वन्दिनि मल्ले च कुवैद्ये कितवे शठे। चाटचारणचौरेषु दत्तंभवति निष्फलम्" इति स्मरणात्। "एतद्दणं पित्राकृतं सुतादिः" शौण्डिकादिभ्यो "न दद्यात्" ॥ अत्र "दन्डशुल्कावशिष्टम्" इत्यवशिष्टग्रहणात् सर्वं दातव्यमिति इति न मन्तव्यम्; "दण्डं वा दन्डशेषं वा शुल्कं तच्छेषं वा न दातव्यं तु पुत्रेण यच्चन व्यावहारिकम्---" इत्यौशनसस्मरणात्। गौतमेनाप्युक्तम्---" "मद्यशुल्कद्यूतदण्डा न पुत्रानधिभवेयुः" इति न पुत्रस्योपरि भवन्ति इत्यर्थः। अनेन अदेयम् ऋणमुक्तम्। ४७ ॥

## CHARCHA

8. सुरा etc---सुरा here is सुरापान; काम is कामसम्भोग। सुरापानेन; कामभोगेन (स्त्रीव्यसनेन इत्यर्थः), [ द्यूत (दिव्+क्त) in द्यूतक्रीड़ा, ] द्यूतेन पाशक्रीड़ाजन्येन कृतम्; first द्वन्द्व। Then ३तत्। Qual. पैतृकम् ऋणम् ॥ दन्ड is राजदन्डजन्य अर्थ---वा debt incurred to meet राजदन्ड, शुल्क is debt incurred to meet taxes वा daughter's विवाहशुल्क। दन्डशुल्काभ्याम् अवशिष्ठम्, the remnant of these सुप्सुपा ॥ वृथादान is debt un-necesserily incurred to pay knaves, panegyrics etc. Same case with पैतृकम् ऋणम्। पितुरागतम् gives both पित्र्यम् and पैतृकम् by the rule "पितुर्यच्च"।

48. Husband of गोप etc should pay wife's debts for their subsistance depends on wives.

गोपशौन्डिकशैलूष-रजकव्याधयोषिताम् ।
ऋणं दद्यात् पतिस्तेषां यस्माद्वृत्तिस्तदाश्रया ॥ ४८ ॥

Prose—गोप-शौण्डिक-शैलूष-रजक-व्याधयोषिताम् पतिःतासां (स्त्रीणां) ऋणं दद्यात्। यस्मात् तेषां वृत्तिः तदाश्रया (स्त्र्यधीना)।

Beng—গোপ, সুরাকারী, নাট্যজীবী, রজক ও ব্যাধের পত্নীরা যদি ঋণ করে, তবে তাহা তাহাদের স্বামী পরিশোধ করিবেন। কারণ ঐ গোপাদির বৃত্তি (বা জীবনজীবিকা) স্ত্রীর সাহায্যেই হয়। (স্ত্রীর সাহায্যে তাদের জীবিকা হয় বলিয়া, এ ক্ষেত্রে স্ত্রীর ঋণ পতিই দিবে)।

Eng.—The debts incurred by the wives of cowherds, wine-makers, actors. washermen or fowlers however, should necessarily be paid by their husbands ; for livelihood of these depends on their wives,

Mita—"न पतिः स्वीकृतं तथा" इत्यस्यापवादमाह—गोपो गोपालः, शौण्डिकः सुराकारः, शैलूषः नटः, रजको वस्त्राणां रञ्जकः, व्याधोमृगयुः, एतेषां योषिद्भिर्यदृणं कृतं तत्तत्पतिभिर्देयम्। "यस्मात्तेषां वृत्तिः" जीवनं "तदाश्रया" योषिदधीना॥ "यस्माद्वृत्तिस्तदाश्रया" इति हेतुव्यपदेशात् अन्येपि येयोषिद-धीनास्तेपि योषित्कृतमृणं दद्यरिति गम्यते [ So the implication is all such depending on wives for subsistance should pay wife's debts ] ॥

## CHARCHA

1. गोप &c—द्वन्द्व। तेषां योषितः। ६तत्—। तासाम्। शेषे ६ष्ठी, qual ऋणम्॥ शुण्डिकात् आगत इति शुण्डिक+अण=शौण्डिकः। See the rules "तत आगतः" "ठगायस्थानेभ्यः" and "शुण्डिकादिभ्योऽण्"॥



2. तदाश्रया—ता आश्रयाः यस्याः—बहु—। qual वृत्तिः।

49. Debt of husband accepted by wife or jointly incurred debt of husband should be paid by wife.

प्रतिपन्नं स्त्रियादेयं पत्या वा सह यत्कृतम्।
स्वयंकृतं वा यदृणं नान्यत्स्त्री दातुमर्हति ॥ ४९ ॥

Prose—स्त्रियाप्रतिपन्नं (स्वीकृतम्) स्वामिनः ऋणं स्त्रियादेयम्, पत्या सहकृतं वा ऋणं देयम्। स्वयंकृतं वा यत्ऋणं तत् स्त्रिया देयम्। स्त्री अन्यत् ऋणं दातुं न अर्हति।

Beug—স্বামী প্রবাসে যাইতে বা মৃত্যুকালে যে ঋণ করিয়াছেন, তাহা পরিশোধের জন্য স্ত্রী স্বীকার করিলে, স্ত্রীসেই ঋণ অবশ্যই দিবেন। অথবা স্বামী ও স্ত্রী একযোগে যে ঋণ করিয়াছিল, তাহা ও স্বামীর অবর্তমানে স্ত্রী দিবেন। স্ত্রী নিজে যে ঋণ করিয়াছেন তাও দিবেন। এছাড়া অন্য ঋণ স্ত্রী দিতে বাধ্য থাকিবেন না।

Eng.—Debt incurred by husband to go abroad or while dying and accepted by wife, should necessarily be paid by her ; so also she should pay debt jointly incurred with husband ( after his demise ), and should also pay self incurred debts ; wife shall not necessarily pay other debts.

Mita—"पतिकृतं भार्य्या न दद्यात्" इत्यस्यापवादमाह—मुमूर्षुणा प्रवत्स्यता वा 'पत्या नियुक्तया ऋणदाने यत्प्रतिपन्नं तत्पतिकृतमृणं स्त्रिया देयम्। यच्च पत्यासह भार्य्यया ऋणंकृतं तदपि भर्त्रभावे भार्य्यया अपुत्रया देयम्। यच्च "स्वयंकृतमृणं तदपिदेयम्"॥ ननु "प्रतिपन्नादित्रयं स्त्रिया देयम्" इति न वक्तव्यम्, सन्देहाभावात्। उच्यते—"भार्य्यापुत्रश्च दासश्च त्रय एवाधनाः स्मृताः। यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम्" इति वचनात् निर्धनत्वेन

प्रतिपन्नादिषु अदानाशङ्कायामिदमुच्यते—"प्रतिपन्नं स्त्रिया देयम्" इत्यादि [ It should not be said that "स्त्री is to give three debts as प्रतिपन्न ऋण etc, only ; for then there should not arise any doubt ; but as भार्य्या etc. are said as निर्धन, so in cases of प्रतिपन्न ऋण etc, ऋणस्य अदानशङ्का will not arise due to this वचन here )। न चानेन वचनेन स्त्र्यादीनां निर्धनत्वमुच्यते, पारतन्त्र्यमात्र-प्रतिपादनपरत्वात् ( it is to establish पारतन्त्र्य only of wives )। एतच्च विभागप्रकरणे स्पष्टीकरिष्यते ॥ "नान्यत्स्त्रीदातुमर्हति" इत्येतत्तर्हि न वक्तव्यम्। विधानेनैवान्यत्र प्रतिषेधसिद्धेः। उच्यते—'प्रतिपन्नं स्त्रियादेयं पत्या वा सह यत् कृतम्" एत्येतयोरपवादार्थमुच्यते। अन्यत् सुराकारादिवचनोपात्तं प्रतिपन्नमपि पत्यासह कृतमपि न देयम् इति ॥ ४६ ॥

## CHARCHA

1. प्रतिपन्नम्—प्रति पद+क्त कर्मणि। Accepted by wife. Q. ऋणम्।

2. स्वयंकृतम्---स्वयम् is an अव्यय meaning by self (आत्मना)। प्रकृत्यादित्वात् ३या : Either compounded or concompounded. The compound will be by the rule "स्वयं क्तेन"। Cp, our "स्वयंविशीर्ण" etc, in kumara V. this will be a case of ३तत् ---provided by the above rule.

**50.** अवश्यदेय ऋण of deceased or disabled father should be given by son or grandson if proved.

पितरि प्रोषितेप्रेते व्यसनाभिप्लुतेपि वा।
पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम् ॥ ५० ॥

Prose ( दातव्यमृणमदत्त्वा ) पितरि प्रेते, प्रोषिते ( दूरादशं गते ) वा व्यसनाभिप्लुते ( व्याध्याद्यभिभूते ) सति, पुत्रपौत्रैःऋणं देयम्। निह्नवे



( पुत्रैः पौत्रैर्वाअपलापे सति ) साक्षिभावितं ( साक्षिभिः प्रमाणीकृतं ) ऋणम् ( पुत्रादिभिः ) देयम्।

Beng—দাতব্য ঋণ না দিতে পারিয়া পিতা মৃত, দূরগত বা বিপদ্‌গ্রস্ত হইলে, পুত্র বা পৌত্র সেই ঋণ দিতে বাধ্য থাকিবে। পুত্রপৌত্র অস্বীকার করিলে সাক্ষী প্রভৃতিদ্বারা প্রমাণীকৃত ঋণ, পুত্রাদিগণ অবশ্যই দিবে।

Eng If father dies or goes afar for long or is disabled by disease etc, then son or grandson (as the case may be) should pay off his just debt- ; in case of denial by sons etc they should pay this debt if proved by witnesses ( documents ) etc.

Mita—पुनरपि यदृणं दातव्यं, येन च दातव्यं यत्रच काले दातव्यं तत्त्रितयमाह पितायदि दातव्यमृणमदत्त्वा प्रेतः, दूरदेशंगतः अचिकित्सनीयव्याध्याद्य-भिभूतो वा तदा तत्कृतमृणमाख्यापने अवश्यं देयम्। पुत्रेण पौत्रेण वा पितृधनाभावेपि पुत्रत्वेन पौत्रत्वेन च, तत्रक्रमः अप्ययमेव—पित्रभावे पुत्रः, पुत्राभावे पौत्रः इति। पुत्रेण वा 'निह्नवे' अपलापे कृते अर्थिना साक्ष्यादिभिर्भावितमृणं देयं पुत्रपौत्रैरित्यन्वयः॥ अत्र "पितरिप्रोषिते" इत्येतावदुक्तम्। कालविशेषस्तु ( time limit of ऋणदान ) नारदेनोक्तो द्रष्टव्यः—"नार्वाकसंवत्सराद् विंशात् पितरि प्रोषितेसुतः। ऋणं दद्यात् पितृव्ये वा ज्येष्ठ-भ्रातरि अथापि वा"। प्रेतेपि अप्राप्तव्यवहारकालो न दद्यात्, प्राप्तव्यवहारकालस्तु दद्यात् (when the son etc, attains व्यवहारयोग्य age ) स च कालस्तेनैव दर्शितः—गर्भस्थः सदृशो ज्ञेयः अष्टमात् वत्सरात्शिशुः। बाल आ षोड़शाद्वर्षात् पौगण्डश्चेति गद्यते। परतो व्यवहारज्ञः स्वतन्त्रः पितरिमृते॥" यद्यपि पितृमरणादूर्ध्वं बालोपि स्वतन्त्रो जातस्तथापि न ऋणभाग् भवति ; यथाह—" अप्राप्तव्यवहारश्चेत् स्वतन्त्रोपि हि न ऋणभाग् स्वातन्त्र्यं हि स्मृतं ज्येष्ठे, ज्यैष्ठं गुणवयःकृतम्" इति॥ तथासेधाज्ञान-

निषेधश्च श्रूयते—" "अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती। विषमस्थाश्च नासेध्या नचैतानाह्वयेन्नृपः"—(These are not to be restrained or summoned in suits)॥ तस्मात् "अतः पुत्रेणजातेन स्वार्थमुत्सृज्य यत्नतः। ऋणात् पिता मोचनीयो यथा न नरकं व्रजेत्" इति। पुत्रेणव्यवहारज्ञतया जातेन निष्पन्नेन इति व्याख्येयम्। श्राद्धे तु वालस्याप्यधिकारः—"न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनात्" इति गौतमस्मरणात्॥ [पुत्रपौत्रैः इति वहुवचननिर्देशात् वहवः पुत्रा यदि विभक्ताः स्वांशानुसारेण ऋणं दद्युः। अविभक्ताश्चेत् सम्भूयसमुत्थानेन गुणप्रधानभावेन वर्त्तमानानां प्रधानभूतएव दद्यात् इति गम्यते (in case of अविभकार्थं the head or chief should pay)। यथाह नारदः—" अतऊर्ध्वं पितुःपुत्रा ऋणं दद्युर्यथांशतः अविभक्ता विभक्ता वा यस्तावद् वहतेधुरम्" ॥ अत्रच यद्यपि "पुत्रपौत्रैऋणं देयं" इत्यविशेषेणोक्तम्, तथापि पुत्रेण यथा पिता सवृद्धिकं ददाति तथैव देयम्। पौत्रेण तुसमं दातव्यं न वृद्धिः इति विशेषोवगन्तव्यः। "ऋणमात्मीयवत् पित्र्यं पुत्रैर्विभावितम्। पैतामहं समंदेयमदेयंतुतत्सुतस्यतु" इति वृहस्पतिवचनात्। अत्रविभावितम् इत्यविशेषो-पादानात् "साक्षिविभावितम्" इत्यत्र साक्षिग्रहणं प्रमाणोपलक्षणम् (साक्षिन् is indicative of other प्रमाण also)। समं यावद् गृहीतं तावदेव देयम् न वृद्धिः। तत्सुतस्य प्रपौत्रस्य अदेयम् अगृहीतधनस्य। एतच्चोत्तरश्लोके स्पष्टीक्रियते॥ ५० ॥

## CHARCHA

1. प्रोषिते—प्र+वस+क्तकर्त्तरि। If gone for long. Pred to पितरि (wh. has भावे ७मी)॥ व्यसनेन विपदा अभिप्लुतः (आक्रान्तः) इति व्यसनाभिप्लुतः। तस्मिन्।

2. पुत्रपौत्रैः—पुत्राश्च पौत्राश्च द्वन्द्व। तैः। अनुक्ते कर्त्तरि ३या।

3. निह्नवे—निह्नव is denial. भावे वा विषयाधिकरणे ७मी।

4. साक्षिभावितम्—साक्षिभिः (साद्यादिभिः इत्यर्थः) भावितम् प्रमाणीकृतम्। ऋतत्। Qual. ऋणम् understood,



51. The enjoyer of रिकथं वा पितृधन is to pay his debt.

रिकथग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च।
पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः॥ ५१ ॥

Prose – रिक्थग्राहः (सम्पत्तिभोगी पुत्रादिः) ऋणंदाप्यः तथा योषिद्ग्राहः (तत्कृतम् ऋणं) दाप्यः। पुत्रहीनस्य रिक्थिनः (धनभोगिनः) ऋणं दाप्याः।

Beng—সম্পত্তিভোগী অর্থাৎ পুত্রাদি উত্তরাধিকারী, ঋণ পরিশোধ করিবে (ক্রয়াদিব্যতিরেকে দানাদি সূত্রেও যে সম্পত্তি গ্রহণ করিবে, সেই ঋণকারীর ঋণ দিতে বাধ্য থাকিবে); সেইরূপ স্ত্রীগ্রহণকারী অর্থাৎ পরের স্ত্রীকে যে দ্বিতীয় বার গ্রহণ করিয়াছে, সেই ব্যক্তি অধমর্ণ এই স্ত্রীর ঋণ শোধ করিবে। আবার মাতাপিতার সম্পর্কে যে পুত্র ধন পায় নাই অথচ সমর্থ, সেও পিতৃঋণ পরিশোধ করিতে বাধ্য থাকিবে। আবার যার পুত্র নাই, তার ঋণ তার সম্পত্তিভোগী পিতৃব্য বা তৎপুত্রাদি পরিশোধ করিবে।

Eng;—The enjoyer of property (i.e, son or heir orsuccessor) should pay father's or original owner's debt; similarly taker of wife of another one, should pay that woman's prior debts; even a son who has not got any ancestral property is to pay father's debt if able (out of moral obligation); and debt of a sonless one should be paid by those who will enjoy his property.

Mita—ऋणापाकरणे, ऋणी तत्पुत्रः पौत्र इति त्रयः कर्त्तारोदर्शितास्तेषां च समवाये क्रमोपि दर्शितः (see sl. 50)। इदानीं कर्त्रन्तरसमवाये च क्रममाह—अन्यदीयं द्रव्यमन्यस्य क्रयादिव्यतिरेकेण यत् स्वीयं भवति तद् रिक्थम्। विभागात् रिक्थं गृह्णातीति "रिक्थग्राहः"। "स ऋणं दाप्यः"।

एतदुक्तं भवति—"यो यदीयं द्रव्यं रिक्थरूपेण गृह्णाति स तत्कृतमृणं दाप्यः"। यो यदीयां योषितं गृह्णाति स तत्कृतमृणं दाप्यः। योषितोऽविभाज्यद्रव्यत्वेन रिक्थव्यपदेशानर्हत्वात् भेदेन निर्देशः [ योषित् वा woman is not a विभाज्य article like धन etc, so योषित् is separately mentioned here ]। "पुत्रश्च अनन्याश्रितद्रव्य ऋणं दाप्यः"—अन्यमाश्रितम् अन्याश्रितम, अन्याश्रितं मातृपितृ सम्बन्धि द्रव्यं यस्य असौ अन्याश्रितद्रव्यः। न अन्याश्रितद्रव्यः इति "अनन्याश्रितद्रव्यः"। "पुत्रहीनस्य रिक्थिनः ऋणं दाप्याः" इति सम्बन्धः। एतेषां समवाये क्रमश्चात्र पाठक्रमएव यथा—"रिक्थग्राह ऋणं दाप्यः, तदभावे योषिद्ग्राहः, तदभावे पुत्र इति"। [ समवाय is एककालावच्छेदेन प्राप्तिः= simultaneous attachment of all in a matter] ॥ [नन्वेतेषां समवाय एव नोपपद्यते, 'न भ्रातरो न पितरः, पुत्रा रिक्थहराः पितुः' इति पुत्रेसति अन्यस्य रिक्थग्रहणासम्भवात्। योषिद्ग्राहोपि नोपपद्यते – न द्वितीयश्च साध्वीनां क्वचिद् भर्त्तोपदिश्यते' इति मनुवचनात्। तथा तदृणं पुत्रो दाप्य इत्यप्ययुक्तम्, 'पुत्रपौत्रैऋणं देयम्' इत्युक्तत्वात्। "अनन्याश्रितद्रव्य" इति विशेषणमित्य-नर्थकम्, पुत्रे सति द्रव्यस्य अन्याश्रयणासम्भवात्, सम्भवे च रिक्थग्राह इत्यनेनैव गतार्थत्वात्। "पुत्रहीनस्य रिक्थिनः" इत्येतदपि न वक्तव्यम्। पुत्रे सत्यपि 'रिक्थग्राह एव ऋणं दाप्यः' इति स्थितम्। असति पुत्रे रिक्थग्राहः सुतरां दाप्य इति सिद्धमेव। अत्रोच्यते—पुत्रे सत्यप्यन्यो रिक्थग्राही सम्भवति क्लीवान्ध-वधिरादीनां पुत्रत्वेपि रिक्थहरत्वाभावात्। तथा च क्लीवादीननुक्रम्य "भर्त्तव्यास्युः निरंशकाः" इति वक्ष्यति ( sl. 140 ); तथा सवर्णापुत्रोप्यन्यायवृत्तिर्न लभेत एकेषाम्" इति गौतमस्मरणात्। अतश्च क्लीवादिषु पुत्रेषु सत्सु अन्यायवृत्ते च सवर्णापुत्रे सति रिक्थग्राहो पितृव्यतत्पुत्रादिः। योषिद्ग्राहोपि यद्यपि शास्त्रविरोधेन न सम्भवति तथाप्यतिक्रान्तनिषेधः पूर्वपतिकृत-ऋणापकरणाधिकारी भवत्येव।

[Objections here may be raised thus—that समवाय (conglomeration) of several रिक्थग्राहो is not possible, for the



son living brothers or others can't be रिक्थग्राही। similarly योषिद्ग्राह is not legitimate here, for a सती can't have a second husband; similarly to say—son is to pay debt is unreasonable for it is already said before in sl. 50 by "पुत्रपौत्रैः ऋणं देयम"। so also the adjective "अनन्याश्रितद्रव्य" is useless here, a son living, ancestral द्रव्य cant go to others, if it goes to others then "रिक्थग्राह ऋणं दाप्यः "will include this payment of debt; similarly "पुत्रहीनस्य रिक्थिन्" is also superfluous here; "रिक्थग्राह ऋणं दाप्य" will signify this: and it goes without saying that for a अपुत्र, "रिक्थग्राहः" will pay debt. But विज्ञानेश्वर says—this is not so; and the significance of these sayings are such, sometimes a son living, and he being disabled, blind or dumb, रिक्थ वा पितृधन will go to others (though he will be entitled to maintenance); so also रिक्थ goes to other males and cousins, if the son of a सवर्णा स्त्री is characterless; so "रिक्थग्राही ऋणं दाप्यः" and "पुत्रहीनस्य रिक्थिनः" are significant even after saying "पुत्रपौत्रै ऋणं देयम्" ( in sl. 50 ); the adj. अनन्याश्रितद्रव्य implies moral obligation of paying ancestral debt by a समर्थपुत्र not having रिक्थ। Though सती is not entitled to a second marriage, still one marrying another's married wife by transgressing this prohibition, should pay this wife's or womans debts, so it is said "योषिद्ग्राहस्तथैव च" here. And this second marriage of a woman of पुनर्भू and स्वैरिणी type is seen in शास्त्र and in लोकसमाज। So all the sayings are significant here and no objection of

superfluity canarise. ]. "योषिद्ग्राहः"—यश्चतसृणां स्वैरिणी-नामन्तिमां गृह्णाति, यश्च पुनर्भुवां तिसृणां प्रथमाम् गृह्णाति [ योषिद्ग्राह refers to last kind of 4 स्वैरिणी and first kind of three पुनर्भू as detailed below ; taker of these is to give debt of these ] । यथाह नारदः—परपूर्वास्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम् । पुनर्भूस्त्रिविधा तासां स्वैरिणीं तु चतुर्विधा । कन्यैवाक्षतयोनिर्यापाणिग्रहणदूषिता । पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्मणा ॥ देशधर्मानवेक्ष्य स्त्रीगुरुभिर्या दीयते । उत्पन्नसाहसा अन्यस्मै सा द्वितीया प्रकीर्त्तिता । उत्पन्नसाहसा=उत्पन्नव्याभिचारा ॥ असत्सुदेवरेषु स्त्रीवान्धवैर्या प्रदीयते सवर्णाय सपिण्डाय सा तृतीया प्रकीर्त्तिता ॥ स्त्रीप्रसूता वा प्रसूता वा पत्यावेव तु जीवति । कामात् समाश्रयेदन्यं प्रथमा स्वैरिणी तु सा ॥ कौमारं पतिमुत्सृज्य यात्वन्यं पुरुषं श्रिता । पुनः पत्युर्गृहमायात् सा द्वितीया परिकीर्त्तिता ॥ मृतेभर्त्तरि तु प्राप्तान् देवरादीनपास्य या । उपगच्छेत् परं कामात् सा तृतीया परिकीर्त्तिता ॥ प्राप्ता देशात् धनक्रीता क्षुत्पिपासातुरा च या । तवाहमित्युपगता सा चतुर्थी प्रकीर्त्तिता ॥ अन्तिमा स्वैरिणीनां या प्रथमा च पुनर्भुवाम् । ऋणं तयोः पतिकृतं दद्याद् यस्ताः उपाश्रितः ॥" इति ॥

तथान्योपि योषिद्ग्राहऋणापाकरणे अधिकारी तेनैव दर्शितः—"यातु सप्रधानैव स्त्री सापत्या वान्यमाश्रयेत् । सोऽस्या दद्यादृणं भर्त्तुरुत्सृजेद्वा तथैव ताम्" । प्रकृष्टेन धनेन सहवर्त्तते इति सप्रधना ; बहुधनेति यावत् । तथा 'अधनस्य ह्यपुत्रस्य मृतस्य उपैति यः स्त्रियम् । ऋणं वोढुः सभजते, सैव चास्य धनं स्मृतम्'—इति पुत्रस्य पुनर्वचनं क्रमार्थम् ॥ ["अनन्याश्रितद्रव्य" इति बहुषु पुत्रेषु रिक्थाभावेपि अंशग्रहणयोग्यस्य एव ऋणापाकरणे अधिकारो नायोग्यस्य अन्धादेरित्येवमर्थम् । "पुत्रहीनस्य रिक्थिनः" इत्येतदपि पुत्रपौत्रहीनस्य प्रपौत्रादयो यदि रिक्थं गृह्णाति तदा ऋणं दाप्याः, नान्यथा इत्येवमर्थम् । पुत्रपौत्रौ च रिक्थग्रहणाभावेपि दाप्यावित्युक्तम्, यथाह नारदः—'क्रमादव्याहतं प्राप्तं पुत्रैर्यन्न ऋणमुद्धृतम् । दद्युः पैतामहं पौत्रास्तच्चतुर्थान्निवर्त्तते' इति सर्वं



निरवद्यम् ॥ यद्वा योषिद्ग्राहाभावे पुत्रो दाप्य इत्युक्तम् । पुत्राभावे योषिद्ग्राहः दाप्य इत्युच्यते । "पुत्रहीनस्य रिक्थिनः" इति रिकथशब्देन योषिदेवोच्यते ।" "सैव चास्य धनं स्मृतम्" इति स्मरणात् । "यो यस्य हरते दारान् स तस्य हरते धनम्" इति च ॥ ननु योषिद्ग्राहाभावे "पुत्रो ऋणं दाप्यः" पुत्राभावे योषिद्ग्राह इति परस्परविरुद्धम् । उभयसद्भावे न कश्चिद् दाप्य इति । नैष दोषः । अन्तिमस्वैरिणीग्राहिणः प्रथमपुनर्भूग्राहिणः सप्रधनस्त्रीहारिणश्चाभावे पुत्रो दाप्यः पुत्राभावे तु निर्धननिरपत्य योषिद्ग्राही दाप्यः [ योषिद्ग्राह is to pay debt in such circumstances ; thus there is no fault here ] इति । एतदेवोक्तं नारदेन—"धनस्त्रीहारिपुत्राणामृणभाग् यो धनं हरेत् । पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारीधनिपुत्रयोः" । धनस्त्रीहारिपुत्राणां समवाये यो धनं हरेत् स ऋणभाक् पुत्रोऽसतोःस्त्रीधनिनोः, स्त्रीच धनं च स्त्रीधने, तेविद्येते ययोस्तौ स्त्रीधनिनौ । तयोः स्त्रीधनिनोरसतोः पुत्र एव ऋणभाग भवति । धनिपुत्रयो-रसतोः पुत्रएव ऋणभाक्, पुत्राभावे स्त्रीहारी इति विरोधाभासपरिहारः ॥ "पुत्रहीनस्य रिक्थिनः" इत्यस्यान्या व्याख्या – एते धनस्त्रीहारिपुत्रा ऋणं कस्य दाप्या इत्यपेक्षायाम् उत्तमर्णस्य दाप्याः, तदभावे तत्पुत्रादेः, पुत्राद्यभावे कस्य दाप्या इत्यपेक्षायामिदमुपतिष्ठते—"पुत्रहीनस्य रिक्थिनः" इति । पुत्राद्यन्यहीनस्य उत्तमर्णस्य यो रिक्थी रिक्थग्रहणयोग्यः सपिण्डादिस्तस्य रिक्थिनः दाप्याः । तथा च नारदेन---"ब्राह्मणस्य तु यद्देयं सान्वयस्य च नास्ति चेत् । निर्वपेत् तत् सकुल्येषु तदभावे अस्य वन्धुषु'---इत्यभिहितम् । "यदा तु न सकुल्याः स्युर्न च सम्बन्धि वान्धवाः । तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्सु अप्सु निक्षिपेत्"—इति नारदः ॥ ५१ ॥

## CHARCHA

1. रिकथग्राहः---रिक्थम् ( पितृधन or ancestral bequest here, ) गृह्णातीति रिक्थ+ग्रह+अण् ( by कर्मण्यण् )=रिक्थग्राहः a taker or enjoyer of ancestral bequest. उक्त प्रयोज्य कर्म of दाप्यः । Similarly derive & parse योषिद्ग्राहः ।

2 अनन्याश्रितद्रव्यः--- Qual पुत्रः। आ+श्रि+क्तकर्त्तरि=आश्रित gone to ; अन्य here refers to पितृमातृसम्बन्धिधन which is not one's own but got by inheritance. अन्यम् आश्रितम्--२तत्। अन्याश्रितं द्रव्यं यस्य, वहु---। न तथा। If a son, does not get any पितृमातृसम्पर्कित धन, then out of moral obligation, he is to pay father's debt पितृऋण is to be given by son ( पुत्र ), पुत्राभावे by a पौत्र ( cp पुत्रपौत्रैः ऋणं देयम् sl 50 ) ; if पितृसम्पत्ति somehow devolves on another, or it if is gifted to another, then रिक्थग्राहः ऋण दाप्यः ; if पिता dies penniless, समर्थ son should give his debt—अनन्याश्रितपुत्रः ऋणं पाप्यः ; if पिता is पुत्रहीन then the heirs to his property ( रिक्थिनः ) will pay debt Thus there is no inconsistency here. See Mitakshara also.

we may also explain अनन्याश्रितद्रव्यः thus---आ+श्रि+क्त कर्मणि =आश्रित possessed by anyother. अन्येन आश्रितम्, ३तत्। तादृशं द्रव्यं यस्य, वहु। न तथा। A पुत्र enjoying पितृधन is to pay पितृऋण, first of all before it is disposed of That is, पुत्र getting father's property, thould pay it off immediately and even before disposing of it or before धनविभाग or धनदान &c. "पुत्रपौत्रैः ऋणं देयम्" (sl. 50), and we have then here रिक्थग्राहः ऋणं दाप्यः if it is another's due to gift etc ; then it is said that when debt should be paid by पुत्र, he is to pay by not disposing of the ancestral inheritance---or before partition or distribution of the same ( if there be a will ). Thus also there is no पुनरुक्ति or repetition here of prior sayings.—Even when father dies penniless, समर्थ son is to strive to pay it first of all leaving other works—he is to be a पुत्र





in the right sense of the word ( पुन्नाम्नो नरकात् त्रायते पितरं सुतः ) ---he is to be a त्राता, this is to be his central 'motive' and work, this is to be his sole view ( लक्ष्य ), this is sole first object ( like द्रविण, अर्थ, विभव )—he is to be अनन्याश्रितद्रव्य, unengaged in or by anything, taking this ऋणशोध as his best asset or best variety of द्रव्य। compare---

"द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धन बसु।
हिरण्यं द्रविण्यं द्युम्नमर्थ-रै विभवा अपि॥"---Amara

रिच ( विरेचने )+थक्=रिकथ। ऋच ( शब्दे )+क्थन्=ऋकथ। Both mean धन, specially पितृधन (ancestral asset)

3 Remark---some hold both रिकथ and ऋकथmean पितृधन। So the reading ऋक्थिनः is also seen here For deriv of रिकथिनः ( रिक्थ+इनि मत्वर्थे ) see sl 45 ante

52. Taking of ऋण, guarantorshipand witnesssihp are improper by ho'ders of undivided properties.

भ्रातृणामथ दम्पत्योः पितुः पुत्रस्य चैव हि।
प्रतिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम्॥ ५२॥

Prose—अथ भ्रातृणाम दम्पत्योः पितुः पुत्रस्य च एवाविभक्ते द्रव्ये प्रतिभाव्यं ( विश्वासाङ्गीकर्त्तृत्वं प्रतिनिधित्वं ) ऋण ( तथा ) साक्ष्यं न स्मृतम् ( मन्वादिभिः )।

Beng ভাইদেব মধ্যে, স্বামীস্ত্রী মধ্যে, পিতা ও পুত্রেব মধ্যে সম্পত্তি অবিভক্ত থাকিলে, তখন তাদের সহিত কেহ প্রাতিভাব্য বা জামিন থাকা ব্যাপার, ঋণগ্রহণ ব্যাপাব কবিবেন না বা তাদেব সাক্ষ্যও গ্রহণ করিবেন না। [ কারণ জামিন ও সাক্ষী থাকিলে

অনেক সময অন্যের জন্য ধন দিতে হয, উহা অবশ্য দেয ঋণ উহা দিতে বাধ্য। অবিভক্ত সম্পত্তিতে এগুলি অসুবিধার সৃষ্টি করে। ]

Eng. When some object or property remain undivided among the brothers, husband and wife, also among father and son, then these men should not stand as bail or guarantor for others, nor these should not take loan from others, nor are their witness reliable or acceptable.

Mita. अधुना पुरुषविशेषे ऋणग्रहणं प्रतिषेधयन् प्रसङ्गादन्यदपि प्रतिषेधयति। प्रतिभुवोभावः प्रातिभाव्यम्। भ्रातृणां दम्पत्योः पितापुत्रयोश्च "अविभक्ते द्रव्ये"—द्रव्यविभागात् प्राक् "प्रातिभाव्यमृणं साक्ष्यं च न स्मृतं" मन्वादिभिः। अपि तु प्रतिषिद्धं, साधारणधनत्वात्; प्रातिभाव्यसाक्षित्वयोः पक्षे द्रव्यावसानत्वात्, ऋणस्य चावश्यदेयत्वात्। एतच्च परस्परानुमतिव्यतिरेकेण; परस्परानुमत्या त्वविभक्तानामपि प्रातिभाव्यादि भवत्येव। विभागादूर्ध्वं परस्परानुमतिव्यतिरेकेणापि भवति [प्रातिभाव्य etc are prohibited, for धन of these are common with others; and in case of suretyship or witnessing or debt, the partner-person's share may be expended away in the meantime; thus is said if प्रतिभाव्य, ऋण etc be without the permission of co-sharers; if there be avowed permission, then प्रतिभाव्य (suretyship) etc are possible of one having undivided property; so after विभाग of धनसम्पत्ति these can be be done even without mutual permission ] ॥

ननु दम्पत्योर्विभागात् प्राक् प्रातिभाव्यादि प्रतिषेधो न युज्यते, तयोर्विभागाभावेन विशेषणानर्थक्यात्। विभागाभावश्चापस्तम्बेन दर्शितः—"जायापत्योर्न विभागो विद्यते"। सत्यम्। श्रौतस्मार्त्ताग्निसाध्येषु कर्मसु तत्फलेषु च विभागाभावो न पुनः सर्वकर्मसु द्रव्येषु वा [ Now प्रातिभाव्यनिषेध before विभाग of husband and wife seems inconsistent, for their



विभाग being impossible, how can there be this restriction. Apastamba has said that there is no विभाग of husband and wife. Vijnanesherara says—this is true; but this विभागाभाव is with respect to rites and results of sruti and smriti matters, and not with respect to all other works or articles ]। तथा हि—"जायापत्योर्न विभागो विद्यते" इत्युक्त्वा, किमिति न विद्यते इत्यपेक्षायां हेतुमुक्तवान्—"पाणिग्रहणाद्धि सहत्वं कर्मसु, तथापुण्यफलेषु च" इति। हि यस्मात् पाणिग्रहणादारभ्य कर्मसु सहत्वं श्रूयते—"जायापती अग्निमादधीयाताम्" इति। तस्मादाधाने सहाधिकारात् आधानसिद्धाग्निसाध्यकर्मसु सहाधिकारः। तथा "कर्मस्मार्त्तं विवाहाग्नौ" इत्यादि स्मरणात् विवाहसिद्धाग्निसाध्येषु कर्मसु सहाधिकार एव। अतश्चोभयविधाग्निनिरपेक्षेषु कर्मसु पूर्त्तेषु जायापत्योः पृथगेवाधिकारः सम्पद्यते। तथा पुण्यानां फलेषु स्वर्गादिषु जायापत्योः सहत्वं श्रूयते—"दिवि ज्योतिरजरम् आरभेताम्" इति। येषु पुण्यकर्मसु सहाधिकार स्तेषां फलेषु सहत्वं इति बोद्धव्यम्। न पुनः पूर्त्तानां भर्त्रनुज्ञया अनुष्ठितानां फलेषु अपि॥ ननु द्रव्यस्वामित्वेपि सहत्वमुक्तम्, "द्रव्यपरिग्रहेषुच", "नहि भर्त्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्ति" इति। सत्यम्। द्रव्यस्वामित्वं पत्न्या दर्शितमनेन, न पुनर्विभागाभावः। यस्माद् 'द्रव्यपरिग्रहेषु च" इत्युक्त्वा तत्रकारणमुक्तम् भर्त्तुर्विप्रवासे नैमित्तिके अवश्यकर्त्तव्ये दानेतिथिभोजनभिक्षा-प्रदानादौ हि यस्मान्न स्तेयमुपदिशन्ति मन्वादयस्तस्मात् भार्य्याया अपि द्रव्यस्वामित्वमस्ति, अन्यथा स्तेयं ( theft ) स्यात्। तस्मात् भर्त्तुरिच्छया अपि द्रव्यविभागो भवत्येव, न स्वेच्छया। यथा वक्ष्यति—"यदि कुर्य्यात्-समानांशान् पत्न्यः कार्य्याः समांशिकाः" इति॥ ५२॥

## CHARCHA

1. प्रातिभाव्यम्—प्रति+भूक्विप्=प्रतिभू। प्रतिभू is विश्वासाङ्गीकर्त्ता प्रतिनिधि—a guarantor, a bailee for another. तस्य भाव इति-

प्रतिभू+ष्यञ्=प्रातिभाव्यम् suretyship or guarantorship—so we get- साक्ष्यम्। "गुणवचन-ब्राह्मणादिभ्यः ष्यञ्"। उक्तकर्म of स्मृतम्।

A प्रतिभू, a साक्षी is sometimes to give money, and this ऋण is अवश्यदेय ; so holders of undivided property are unfit for these ; for later on their property etc may be nullified, expended or moribund.

53. Thus now varieties of प्रतिभू are being stated here.

दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते।
आद्यौ तु वितथे दाप्यावितरस्य सुता अपि ॥ ५३ ॥

Prose—दर्शने (आनयनेन प्रदर्शनव्यापारे) प्रत्यये (विश्वासव्यापारे) दाने (धनदाने) प्रातिभाव्यं विधीयते। आद्यौ (दर्शनप्रत्ययप्रतिभुवौ) वितथे (असत्यव्यापारे सति) दाप्यौ (राज्ञा उत्तमर्णस्य सम्बन्धे धनं दाप्यौ)। इतरस्य (दानप्रतिभुवः) सुता अपि धनं राज्ञा दाप्याः।

Beng. অভিযুক্তকে বিচারালয়ে আনাইয়া দেখাইয়া দিবার জন্য, কোন বিষয়ে বিশ্বাস উৎপাদন জন্য, এবং ধনদান বিষয়ে অন্যের জন্য জামিন থাকার দরকার হয়। তন্মধ্যে আদ্য দুই বিষয়ে অর্থাৎ আনাইবার ও বিশ্বাসোৎপাদন জন্য জামিনের দর্শনাভাবও বিশ্বাসভঙ্গ-ঘটিলে, রাজা জামিনদারকে দিয়া উত্তমর্ণকে ধন দেওয়াইবেন। আর ধনদান বিষয়ে অধমর্ণ ঋণশোধ করিতে না পারিলে, জামিনদার বা প্রতিভূ এমন কি প্রয়োজনস্থলে প্রতিভূপুত্রও সেই ঋণ দিতে বাধ্য থাকিবে।

Eng. A guarantor is required in the matter of bail (i. e, in producing and showing the accused in the court ), in the matter of producing confidence in an act, and in the



matter of advancing debt ; in case of failure in the first two above cases, the guarantor is to pay penalty or money involved therein ; and in the case of giving debt, a guarantor and even a guarantor's son is liable for the sum to be given to the cteditor.

Mita—अधुना प्रातिभाव्यं निरूपयितुमाह—प्रातिभाव्यं नाम विश्वासार्थं पुरुषान्तरेणसह समयः ( प्रतिभू is a guarantor ; प्रातिभाव्य is understanding with a person to create confidence)। तच्च विषयभेदात् त्रिधाभिद्यते—यथा, "दर्शने"—दर्शनापेक्षायाम्, एनं दर्शयिष्यामि इति। "प्रत्यये"—विश्वासे, "मम प्रत्ययेनास्य धनंप्रयच्छ, नायं त्वां वञ्चयिष्यते, यतोमुकस्य पुत्रोयम् उर्वराप्रायाभूरस्य, ग्रामवरोस्यास्तीति। "दाने"—यद्ययं न ददाति तदानीमहमेवदास्यामीति। "प्रातिभाव्यं विधीयते" इति प्रत्येकं सम्बध्यते। "आद्यौ" तु दर्शनप्रत्ययप्रतिभुवौ। "वितथे" अन्यथाभावे अदर्शने विश्वासव्यभिचारे च राज्ञा दाप्यौ। प्रस्तुतं धनमुत्तमर्णस्य दाप्यौ। "इतरस्य" दानप्रतिभुवः "सुताअपि दाप्याः"॥ [ वितथे इत्येव शाठ्येन निर्धनत्वेन वा अधमर्णे अप्रतिकुर्वति "इतरस्य सुता अपि" इति वदता पूर्वयोः सुता न दाप्या इत्युक्तम्। 'सुता' इति वदता "न पौत्रा दाप्या" इति दर्शितम् ] ॥

CHARCHA

1. दर्शने—दृश+णिच् ल्युट् i.e. (here) in the matter of producing an accused person in court (as in a bail-case), विषयार्थे ७मी।

2. प्रत्यये—in creating confidence in some transaction ; दाने is the matter of giving loan of money. अर्थे ७मी as noted above.

3. वितथे—coustrue वितथेसति आद्यौ दर्शनप्रत्ययप्रतिभुवौ। construe—वितथेसति आद्यौ धनादिकं दाप्यौ। इतरस्य दानविषयस्य सुता अपि धनादिकं दाप्याः—see Mitak.

54. Procedure when these three are dead.

दर्शनप्रतिभूर्यत्रमृतः प्रात्ययिकोपि वा ।
नततपुत्रा ऋणं दद्युः दद्युर्दानाय ये स्थिताः ॥ ५४ ।

Prose---यत्र ( प्रातिभाव्ये ) दर्शनप्रतिभूः, प्रात्ययिकः ( प्रत्ययावस्थितः प्रतिभूः ) वा मृतः, तत्र तत्पुत्रा ऋणं ( तत्संश्लिष्टं ऋणधनं ) न दद्युः । किन्तु दानाय ( दानविषयमभिलक्ष्य ) ये प्रतिभुवःस्थिता ते ऋणं ( धनं ) दद्युः ।

Beng—যিনি দর্শব্যাপারে প্রতিভূ বা যিনি প্রত্যয় ব্যাপারে প্রতিভূ তারা মৃত হইলে, পুত্রগণ পিতার প্রতিভূত্বসংশ্লিষ্টধন দিতে বাধ্য থাকিবেন না। কিন্তু ধনদানব্যাপারে প্রতিভূর মৃত্যু হইলেও পুত্রেরা তৎসংক্রান্ত মূলধন দিবেন।

Eng. If a guarantor in the matter of producing an accused in the court dies, or the same in the matter of trust dies, his sons will not be liable for money involved therein; but if a guarantor in some monetary transaction ( of loan ) is dead, his son too will pay the original money involved in this.

Mita---एतदेवस्पष्टीकर्त्तुमाह---"यदातु दर्शनप्रतिभूः प्रात्ययिको वा प्रतिभूः दिवंगतः, तदा तयोः पुत्राः प्रातिभाव्यायातं पैतृकमृणं न दद्युः"। ये तु दानाय स्थिताःप्रतिभुवः दिवंगतास्तेषां पुत्रादद्युः" न पौत्राः। तेच मूलमेव दद्युः न च वृद्धिम्। "ऋणं पैतामहं पौत्रः प्रातिभाव्यागतंसुतः। समं दद्यात् तत्सुतौ तुन दाप्यौ इति निश्चयः" – इति व्यासवचनात् ॥ प्रातिभाव्यव्यतिरिक्तं पैतामहमृणं पौत्रः समं यावदगृहीतं तावदेव दद्यान्नवृद्धिम् ॥ तथा तत्सुतोपि प्रातिभाव्यागतं पितृमृणं सममेव दद्यात्। तयोः पौत्रपुत्रयोः सुतौ प्रपौत्रपौत्रौ अप्रातिभाव्यागतं प्रातिभाव्यागतं वा ऋणं यथाक्रमंगृहीतधनौन दाप्याविति। यदपिस्मरणम्---"खादकोवित्तहीनः स्यात्लग्नको वित्तवान् यदि। मूलंतस्य



भवेद्देयं न वृद्धिं दातुमर्हति"। लग्नको यदि वित्तवान् मृतस्तदा तस्य पुत्रेण मूलमेव दातव्यं न वृद्धिरिति व्याख्येयम् ॥ यत्र दर्शनप्रतिभूः प्रत्ययप्रतिभूर्वा वन्धकं पर्य्याप्तं गृहीत्वा प्रतिभूर्जातिस्तत्र तत्पुत्राअपि तस्मादेव वन्धकात् प्रातिभाव्यायातमृणं दद्युरेव। यथाह कात्यायनः---"गृहीत्वा वन्धकं यत्र दर्शनेस्यस्थितो भवेत्। विना पित्रा धनात्तस्माद् दाप्यः स्यात्तदृणं सुतः" दर्शनग्रहणं प्रत्ययस्योपलक्षणम्। विना पित्रा=पितरिप्रेते दूरदेशं गते सति वा इत्यर्थः ॥ ५४ ॥

CHARCHA

1. प्रात्ययिकः---प्रत्यये ( प्रत्ययव्यापारे ) भव इति अध्यात्मदित्वात् ठञ्= प्रात्ययिकः one concerned in प्रत्ययव्यापार। Nom to मृतः।

2. दानाय---कर्मणि ४र्थी by the rule "क्रियार्थोपपदस्य च कर्मणि स्थानिनः"। दानमभिलक्ष्यस्थित इति=दानायस्थितः। The reading दानाय यः स्थितः is also seen here but it does not agree with दद्युः।

55. Direction is case of many guarantors in a matter.

वहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम् ।
एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि ॥ ५५ ॥

Prose---यदि बहवः प्रतिभुवः स्युः तदा धनं ( देयमृणं धनं वा ) स्वांशैः दद्युः। एषु एकच्छायाश्रितेषु ( सत्सु, एकमेव अधमर्णाश्रितेषु सत्सु ) धनिकस्य उत्तमर्णस्य यथारुचि एकः दद्यात् ( तस्य रुच्यनुसारेण यमेव प्रतिभुवं प्राप्य धनं याचेत्, स एव दद्यात् इत्यर्थः )।

Beng—যদি এক ব্যাপারে বহু জামিন থাকে, তবে দেয় ধনাদি অংশানুসারে ভাগের হারে প্রত্যেকে দিবে। আবার একটী অধমর্ণকে আশ্রয় করিয়াই অনেক প্রতিভূ হইলে ধনিক ( উত্তমর্ণ ) যদি ইচ্ছা করেন 'আমি এই ব্যক্তির নিকট হইতেই প্রাপ্য ধন লইব' তবে সেই ব্যক্তিই সমস্ত দিবে, অংশানুসারে নহে।

Eng. If there be many guarantors in a self same transaction, then each one will pay as per his own respective share (got by division); or if each one of these guarantors stand under the same causal shade of one debtor, the creditor may realise his due from anyone of them if he so desires.

Mita—यस्मिन् अनेकप्रतिभूसम्भवस्तत्रकथं दाप्यस्तत्राह—'यद्येकस्मिन् प्रयोगे द्वौ बहवो वा प्रतिभुवः स्युः तदा तदृणं संविभज्य स्वांशेन दद्युः। 'एकच्छायाश्रितेषु' एकस्याधमर्णस्य छाया साद्दश्यं, तत्राश्रिता "एकच्छायाश्रिताः"। अधमर्णो यथा कृत्स्नद्रव्यदानाय स्थितस्तथा दानप्रतिभुवोपि प्रत्येकं कृत्स्नद्रव्य-दानाय स्थिताः। एवं दर्शने प्रत्यये च। "तेष्वेकच्छायाश्रितेषु प्रतिभूषु सत्सु धनिकस्य" उत्तमर्णस्य 'यथारुचि' यथाकामम। अतश्च धनिको वित्ताद्यपेक्षायां स्वार्थं यं प्रार्थयते स एव कृत्स्नं दाप्यः, नांशतः। एकच्छायाश्रितेषु यदि कश्चिद्देशान्तरं गतस्तत् पुत्रश्च सन्निहितस्तदा धनिकेच्छया स सर्वं दाप्यः। मृते तु कस्मिंश्चित् तत्सुतः स्वपित्रंशम् अवृद्धिकं दाप्यः। यथाह कात्यायनः—"एकच्छायाप्रविष्ठानां दाप्या यस्तत्र दृश्यते। प्रोषिते तत्सुतः सर्वं पित्रंशं मृते समम्॥ ५॥

## CHARCHA

1. स्वांशैः—स्वस्य अंशवः, ६तत्। तैः। करणे ३या।

2. एकच्छाया &c—एकस्य (अधमर्णस्य) छाया (साद्दश्यम्, स्वरूपम्)। एकच्छायाम् आश्रिताः, २तत्। तेषु। qual. एषु (wh. has भावे ७मी)। यथारुचि=अव्ययीभाव—Adverb।

56. A debtor will pay twice as much as is openly paid by a प्रतिभू।

प्रतिभूर्दापितो यत्तु प्रकाशं धनिनो धनम्।
द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद् भवेत्॥ ५६॥



Prose—(यत्र) धनिनः (उत्तमर्णस्य सम्बन्धे), प्रतिभूर्यत् धनम् प्रकाशं (लोकसमक्षं) राज्ञा दापितः स्यात्। तत्र ऋणिकैः (अधमर्णैः) तस्य (प्रतिभुवः सम्बन्धे) तत् धनं द्विगुणं प्रतिदातव्यं भवेत्।

Beng. যেখানে দানপ্রতিভূকে দিয়া লোকসমক্ষে উত্তমর্ণকে রাজা ধন দেওয়াইবেন, সেখানে ঋণিক অধমর্ণ সেই ধনের দ্বিগুণ ধন প্রতিভূকে দিতে বাধ্য থাকিবে।

Eng. If in a matter a guarantor is to give money openly before many persons as per order of the king, then the debtor is to pay him twice as much.

Mita—प्रातिभाव्ये ऋणदानविधिमुक्त्वा प्रतिभूदत्तस्य प्रतिक्रियाविधिमाह—"यद्द्रव्यं प्रतिभूस्तत्पुत्रो वा" धनिकेनोपपीड़ितः 'प्रकाशं सर्वजनसमक्षं' राज्ञा "धनिनो दापितो", न पुनर्द्वैगुण्यलोभेन स्वयमुपेत्य दत्तम्। यथाह नारदः—"यं चार्थं प्रतिभूर्दद्यात् धनिकेनोपपीड़ितः। ऋणिकस्तं प्रतिभुवे द्विगुणं प्रतिदापयेत्" इति॥ "ऋणिकैरधमर्णैस्तस्य प्रतिभुवस्तद्द्रव्यं द्विगुणं प्रतिदातव्यं स्यात्"। तच्च कालविशेषमनपेक्ष्य सद्य एव द्विगुणं दातव्यम्; वचनारम्भ-सामर्थ्यात्। एतच्च हिरण्यविषयम्। [This द्विगुण दान has no reference to time limit, it is to be given forthwith or without delay; for the very statement here indicates this; the वचन is with regard to हिरण्य or wealth---see next]॥

ननु इदं प्रतिभूरिति वचनं द्वैगुण्यमात्रं प्रतिपादयति; तच्च पूर्वोक्तकालकलाक्रमा-बाधेनाप्युपपद्यते। यथा जातेष्टिविधानं शुचित्वाबाधेन अपि, च सद्यः सवृद्धिक-दानपक्षे पशुस्त्रीणां सद्यः सन्तत्यभावात् मूलदानमेव प्राप्नोति इति—तदसत्; "वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा" (sl. 39 ante) इत्यनेनैव कालकलाक्रमेण द्वैगुण्यादिसिद्धेः द्वैगुण्यमात्रविधाने चेदं वचनमनर्थकं स्यात्। पशुस्त्रीणाञ्च कालक्रमपक्षेपि सन्तत्यभावे स्वरूपदानमेव [If it is argued—that प्रतिभूर्दापितः etc only enjoins द्वैगुण्यदान and that is

possible without reference to time-limit as well, just as doing of जातेष्टि ( जात rites etc ) can be done without any clash with शुचित्व i e, can be done in अशुचिकाल even । moreover if सद्यःसवृद्धिकदान is held here, then पशुस्त्री having impossibility of सद्यः सन्तति, only मूलधनदान comes in, then we say this is not so---it is a bad reasoning. In the sl. 39 "वस्त्रधान्यहिरण्यानाम्' द्वैगुण्य etc is established by कालक्रम, so again द्वैगुण्यविधान becomes superfluous if सद्यःदान is not adopted ; and in case of कालक्रमपक्ष even of पशुस्त्री, स्वरूप वा मूलदान is to be adopted if पशुस्त्री gets no issue ; so Mitakhara says that द्विगुणदान is to be adopted without ref. to कालक्रम । वचनारम्भ सामर्थ्यात्—see below also ].

यदा प्रतिभूरपि द्रव्यदानानन्तरं कियतापि कालेनाधमर्णेन संघटते तदा सन्ततिरपि सम्भवत्येव । यद्वा पूर्वसिद्धसन्तत्या सह पशुस्त्रियो दास्यन्तीति न किञ्चिदेतत् ॥ अथ प्रातिभाव्यं प्रीतिकृतं ( suretyship is due to affection ), अतश्च प्रतिभूवादत्तं प्रीतिदानमेव । न च प्रीतिदत्तस्य याचनात् प्रागवृद्धिरस्ति, यथाह नारदः—"प्रीतिदत्तं च यत्किञ्चित् वर्धतेन त्वयाचितम् । याच्यमानमदत्तं चेत् वर्धते पञ्चकं शतम्" इति । अतश्चास्य प्रीतिदत्तस्य अयाचितस्यापि दानदिवसादारभ्य यावद्‌द्विगुणं कालक्रमेणवृद्धिः इत्येनेन वचनेनोच्यते इति । तदप्यसत् । अस्यार्थस्य अस्माद्वचनादप्रतीतेः । द्विगुणं प्रतिदातव्यमित्येतावदिह प्रतीयते । तस्मात् कालक्रममनपेक्ष्यैव द्विगुणं प्रतिदातव्यम् वचनारम्भसामर्थ्यादिति सुष्ठूक्तमस्माभिः ॥ ५६ ॥

## CHARCHA

1, दापितः—दा+णिच्+क्त कर्मणि । उक्त प्रयोज्यकर्म is प्रतिभूः । At first प्रतिभूः ( धनिनः सम्बन्धे ) धनं ददाति, becomes in णिच्---राजा



प्रतिभुवं धनं दापयति । In voicech, it is राज्ञा प्रतिभूः धनं दाप्यते वा दापितः etc as here.

2. ऋणिकैः—ऋणमस्ति अस्य इति ऋणिक with मत्वर्थीय ठन् by "अत इनिठनौ", उक्तकर्म of प्रतिदातव्यम् ॥ धन+ठन्=धनिक like ऋणिक here ; also as in अधमर्णिक उत्तमर्णिक before.

57. Exception of this द्विगुणदान in following cases.

> सन्ततिः स्त्रीपशुष्वेव धान्यं त्रिगुणमेव च ।
> वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणस्तथा ॥ ५७ ॥

Prose—स्त्रीपशुसन्ततिरेव दाप्यः ; धान्यं त्रिगुणमेव दाप्यः, वस्त्रं चतुर्गुणं दाप्यः तथा रसः ( तैलादयः ) अष्टगुणः ( दाप्यः ) इति प्रोक्तम् ।

Beng—গাভী প্রভৃতি স্ত্রীপশুর অধমর্ণ, ঐ স্ত্রীপশুদাতার প্রতিভূকে সবৎসস্ত্রীপশুমাত্র দিবে। ধান্যের অধমর্ণ প্রতিভূকে তিনগুণ ধান্য দিবে। বস্ত্রের অধমর্ণ চতুর্গুণ এবং ঘৃততৈলাদি রসদ্রব্যের অধমর্ণ ঘৃততৈলাদি আটগুণ ( যাহা চরম বৃদ্ধিরূপে বলা আছে—) তাহাই দিবে।

Eng—In case of female cattle, the debtor is to pay female cattle along with the calf to the guarantor ; thrice as much in case of paddy, four times in case of cloth and eight times in case of liquid substances like oil, ghee etc, (to the guarantor ).

Mita—प्रतिभूदत्तस्य सर्वत्र द्वैगुण्ये प्राप्ते अपवादमाह (exceptions of द्वैगुण्य is being enumerated here)—हिरण्यद्वैगुण्यवत् कलानादरेणैव स्त्रीपश्वादयः प्रतिपादितवृद्ध्या दाप्याः । श्लोकस्तु व्याख्यात एव ॥ यस्यद्रव्यस्य यावतीवृद्धिः पराकाष्ठोक्ता तद्द्रव्यं प्रतिभूदत्तं खादकेन तयावृद्ध्या सह कालविशेषमनपेक्ष्यैव सद्यो दातव्यमिति तात्पर्यार्थः [The debtor (खादक)

**is to pay** without delay, given by प्रतिभू on his behalf, **at the** respective stated maximum rate of interest without **reference** to time limit. This is the purport here ] ॥

यदातु दर्शनप्रतिभूः संप्रतिपन्ने काले अधमर्णं दर्शयितुमसमर्थस्तदा **तदन्वेषणाय** तस्य पक्षत्रयं दातव्यम्। तत्रयदि तं दर्शयति तदामोक्तव्यः, **अन्यथा** प्रस्तुतं धनं दाप्यः। "नष्टस्यान्वेषणार्थं तु दाप्यं पक्षत्रयं परम्। **यद्यसौ**दर्शयेत् तत्र मोक्तव्यः प्रतिभूर्भवेत्। काले व्यतीते प्रतिभूर्यदितं **नैवदर्शयेत**। निबन्धं दापयेत्तं तु प्रेतेचैष विधिःस्मृतः' —इति **कात्यायनवचनात्** ॥ **लग्नके** विशेषनिषेधश्च तेनैवोक्तः—"न स्वामी न च वैशत्रुः स्वामिनाधिकृतस्तथा ; **निरुद्धःदण्डितश्चैव** संदिग्धश्चैवनक्वचित् ॥ नैव रिक्थी न मित्रं च न **चैवात्यन्तवासिनः**। राजकार्य्यनियुक्ताश्च येच प्रव्रजिता नराः। न शक्तो **धनिने** दातुं दण्डं राज्ञे न ततसमम। जीवन्नपि पिता यस्य तथैवेच्छाप्रवर्त्तकः ॥ **नाविज्ञाय प्रहीतव्यः** प्रतिभूः स्वक्रियां प्रति" इति। सन्दिग्धः **अभिशस्तः। अत्यन्तवासिनः** नैष्ठिकब्रह्मचारिणः---इति प्रतिभूविधिः ॥ ५७ ॥

**धनप्रयोगे** द्वौविश्वासहेतू--प्रतिभूः आधिश्च। यथाहनारदः—"**विश्रम्भहेतू द्वावत्र** प्रतिभूराधिरेव च"। तत्र प्रतिभूर्निरूपितः। **इदानीम्** आधिर्निरूप्यते। [ **In** matters of धनदान वा धनप्रयोग वा ऋणदान two things **can create** confidence of an उत्तमर्ण—namely first प्रतिभू (guarantor), **secondly** some आधि वा mortgaged matter or property **or article**, प्रतिभू is before stated, now आधि ( आ+धा+कि कर्मणि ) **is being** stated—] आधिर्नाम गृहीतस्य द्रव्यस्योपरि **विश्वासार्थमधमर्णेन उत्तमर्णेधिक्रियते**। आधीयते इति आधिः। य च द्विविधः—**कृतकालः, अकृतकालश्च**। पुनश्चैकैकशो द्विविधः—गोप्यः भोग्यश्च। **यथाह नारदः— "अधिक्रियते इत्याधिः स विज्ञेयो द्विलक्षणः। कृतकालोपनेयश्च यावद्देयोद्यतस्तथा। स पुनर्द्विविधः प्रोक्तो** गोप्यो भोग्यस्तथैव च"**—इति ॥ कृते काले आधानकाले एवामुस्मिन्काले दीपोत्सवादौ "मयायमधमर्णिकोमोक्तव्यः अन्यथा**



**तवैवाधिर्भविष्यति"** इत्येवं निश्चिते काले उपनेय आत्मसमीप **नेतव्यः मोचनीय इत्यर्थः**। देयं दानम्। देयमनतिक्रम्य यावद्देयम्। उद्यतःनियतः **स्थापित इत्यर्थः**। यावद्देयमुद्यतः यावद्देयोद्यतः। गृहीतधनप्रत्यर्पणविधिः **अनिरूपित काल इत्यर्थः**। गोप्यः=**रक्षणीयः** ॥ ५७ ॥

[ आधि is plawcing of some द्रव्य as pledge or **pawn or mortgage** to a उत्तमर्ण (creditor) by a debtor ( **अधमर्ण**), **in** exchange of money taken. In short, that whi**ch is** pledged is आधि। It is of two types—(I) that for a limit**ed time** (2) that without any time—limit ; each of these **two again** are subdivided into (I) what is गोप्य वा **रक्षणीय (to** be protected), (2) what is भोग्य (to be enjoyed)*; in **total** then we have 4 types of आधि ].

58 Details of आधि—Its transference etc.

> आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते।
> काले कालकृतो नश्येत् फलभोग्यो न नश्यति ॥ ५८ ॥

Prose—**धने** द्विगुणे सति आधिः प्रणश्येत् यदि न मोच्यते ( अधमर्णेन ) ; काले ( निर्दिष्टकाले व्यतीते सति ) कालकृतः आधिःनश्येत्। **फलभोग्यः** आधिः ( क्षेत्रारामादिः ) न नश्यति।

Beng—যে ধন আধি রাখিয়া অধমর্ণকে ধার দেওয়া **হইয়াছে, তাহা** যদি সুদসহ দ্বিগুণ হইয়া যায়, এবং ইত্যবসরে **অধমর্ণ তাহা ছাড়াইতে** না পারে, তাহা হইলে, এই আধিতে অধমর্ণের **স্বত্ব নষ্ট হইবে**। তখন ইহা উত্তমর্ণের স্বত্বে আসিবে। কৃতকাল ( নির্দিষ্ট **সময় দ্বারা** কৃত ) আধি, কাল উত্তীর্ণ হইলে, উহার **স্বত্ব** নষ্ট হইবে ( **উহা উত্তমর্ণের** হইবে ) ; কিন্তু ফলভোগোপ**যুক্ত** ভূমি, বাটী উদ্যান প্রভৃতি যে আধি, তাহার নির্দিষ্টকাল উত্তীর্ণ হইলে ও **স্বত্ব নষ্ট হইবে না**।

Eng.—If the pledge-money on some द्रव्य reaches twice as much (with interest) and the debtor is not able to clear it, then the pawned article will by right go to the creditor; similarly pawn for a fixed period will be lost and by right will go to the creditor when the period expires and it is not cleared; but enjoyable immovable mortgaged (property as gardens etc) will not usually be lost even if the fixed period is over (for the creditor in this case enjoys the products thereof) [Comp.—"भोग्यस्याधेश्चिरकालावस्थानेपि आधीकरणविक्रयनिषेधेन धनिनः स्वत्वं नास्तीति"]

Mita—एवं चतुर्विधस्याधेर्विशेषमाह—प्रयुक्ते धने "स्वकृतयावृद्ध्या कालक्रमेण" द्विगुणीभूते यदि आधिरधमर्णेन द्रव्यदानेननमोक्ष्यते, तदा नश्यति"। अधमर्णस्य धनं प्रयोक्तुरेव स्वंभवति। कालकृत=कृतकालः ("आहिताग्न्यादिषु पाठात्" कालशब्दस्य पूर्वनिपातः) "स काले निरुपिते प्राप्ते नश्येत्" द्वैगुण्यात प्राग् उर्ध्वं वा। "फलभोग्यः" फलंभोग्यं यस्यासौ 'फलभोग्यः' क्षेत्रारामादिः। स कदाचिदपिह न नश्यति। कृतकालस्य गोप्यस्य च तत्कालातिक्रमे नाश उक्तः—"काले कालकृतो नश्येत" इति। अकृतकालस्य भोग्यस्य नाशाभाव उक्त'—'फलभोग्योन नश्यतीति इति। पारिशेष्यात् "आधिः प्रणश्येत्" इत्येतत अकृतकाल-गोप्याधिविषयमवतिष्ठते। द्वैगुण्याति-क्रमेण निरुपितकालातिक्रमेण च विनाशे, चतुर्दशदिवसप्रतीक्षणं कर्त्तव्यम्, बृहस्पतिवचनात्—"हिरण्ये द्विगुणीभूते पूर्णे काले कृतावधेः। बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्ष्य च। तदन्तरा धनं दत्वा ऋणी बन्धकमाप्नुयात्" इति॥

नन्वाधिः प्रणश्येत्' इत्यनुपपन्नम्। अधमर्णस्य स्वत्वनिवृत्तिहेतो दान-विक्रयादेः अभावात्, धनिनश्च स्वत्वहेतोः प्रतिग्रहक्रयादेरभावात्, मनुवचन-विरोधाच्च—"न चाधेः कालसंरोधात् निसर्गोस्ति न विक्रयः" इति। कालेन



संरोधः कालसंरोधः चिरकालमवस्थानं, तस्मात् कालसंरोधात् चिरकालावस्थानात् आधेर्न निसर्गः अस्ति, नान्यत्राधीकरणमस्ति, न च विक्रयः। एवमाधीकरण-बिक्रयप्रतिषेधात् धनिनः स्वत्वाभावो गम्यते। उच्यते [The answer to the above antiargument will be this]—आधीकरणमेव लोके सोपाधिकस्वत्वनिवृत्तिहेतुः। आधिस्वीकारश्च सोपाधिकस्वत्वापत्तिहतुः प्रसिद्धः। तत्र धनद्वैगुण्ये निरुपितकालप्राप्तौ च द्रव्यदानस्यात्यन्तनिवृत्तिरनेन वचनेनाधमर्ण-स्यात्यन्तिकी स्वत्वनिवृत्तिः, उत्तमर्णस्य चात्यन्तिकं सत्वं भवति [आधीकरण itself is a kind of स्वत्वनिवृत्ति with some reservation; but the saying "आधिःप्रणश्येत्" declares complete स्वत्वविवृत्ति of अधमर्ण & स्वत्वाप्ति of उत्तमर्ण]। न च मनुवचनविरोधः (and "आधिःप्रणश्येत्" does not go against मनुवचन too); यतः मनुः "न त्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात्" इति। भोग्याधिं प्रस्तुत्य इदमुच्यते—"न चाधेः कालसंरोधात् निसर्गोस्तिन विक्रयः" इति। भोग्यस्याधेः चिरकालावस्थानेपि आधीकरणविक्रयनिषेधेन धनिनः स्वत्वं नास्तीति। इहाप्युक्तं "फलभोग्यो 'न नश्यती'ति"। गोप्याधौ पृथगारब्धंमनुना—"न भोक्तव्योबलाद आधिभुंञ्जानो वृद्धिमुत्सृजेत्"। इहापिवक्ष्यते "गोप्याधिभोगे नो वृद्धिरिति"। "आधिः प्रणश्येत् द्विगुणे" इति गोप्याधिं प्रत्युच्यते—इति सर्वमविरुद्धम्॥ ५८॥

## CHARCHA

1. प्रणश्येत्—प्र+नश+लिङयात्। Here cerebral ण comes by the rule "नशेःषान्तस्य" for here we have no ष। See also प्रनष्ट ante. Nom. आधिः॥ द्वौगुणौ अस्य, बहु। And धने (with भावे ७मी) refers to गोप्य (रक्षणीय) अकृतकाल आधि॥

2. मोक्ष्यते—मुच+लृटस्यते कर्मणि। Agrees with उक्तकर्म—आधिः।

3. कालकृतः—कालः कृतः यस्मिन्, बहु। Qual. आधिः। Both कृतकालः and कालकृतः are correct by the rule 'आहिताग्न्यादिषु'।

Bhattoji here says "आकृतिगणोयम्" so usages like कालकृत, प्रभुपुरस्कृत etc are defended though not in the list. So the reading here strictly ( in Mitaskhara ) should not be "आहिताग्न्यादिषु पाठात कालशब्दस्य पूर्वनिपातः "but" आहिताग्न्यादेराकृतिगणत्वात् कालशब्दस्य पूर्वनिपातः"। कालं (कालं व्याप्य) कृतः also correct by the rules "कालाः" and "अत्यन्तसंयोगेच"। This refers to both कालकृत गोप्य and भोग्य आधिः। अकृतकालफलभोग्यस्य आधेः नाशाभावः।

4. फलभोग्यः—भुज+ण्यत्=भोग्यम् to be enjoyed. See the rule "भोज्यं भक्ष्ये" here ; and Bhattoji under this rule says "भोग्यमन्यत्"। फलं भोग्यं यस्य, बहु—। Qual आधिः।

59, No interest in गोप्यआधिभोग etc, but it should be kept in tact.

गोप्याधिभोगे नो वृद्धिः सोपकारेथ हापिते।
नष्टो देयो विनष्टश्च दैवराजकृतादृते ॥ ५९ ॥

Prose—गोप्याधिभोगे वृद्धिः नो ( न स्यात ) तथा सोपकारे ( उपकारकारिणि वलीवर्द्धादौ ) अपि हापिते ( हानिं व्यवहाराक्षमत्वं गमिते आधौ ) न वृद्धिः स्यात्। नष्टः (आधिः) देयः ( पूर्ववत् कृत्वा देयः ), विनष्टः ( अत्यन्तमेव नाशंप्राप्तः ) आधिः देयः ( मूल्यादिद्वारेण देयः ), दैवराजकृतात् ( ताद्दश-विनाशात् ) ऋते आधिः देयः।

Eeng—গোপ্য অর্থাৎ রক্ষণীয় আধি ( বন্ধকীদ্রব্য, যেমন তামারকড়া প্রভৃতি ) উত্তমর্ণ ভোগ করিতে থাকিলে সুদ দিতে হইবে না, তেমনি উপকারযুক্ত ভোগ্য বলীবর্দাদি আধিতেও সুদ দিতে হইবে না। ব্যবহারকালে আধি বিকৃত বা নষ্ট হইলে তার মূল্য





দিতে হইবে। একেবারে নষ্ট হইলেও মূল্যাদি দ্বারা ক্ষতিপূরণ দিতে হইবে। কিন্তু দৈব ( অগ্ন্যাদি জন্য ) বা রাষ্ট্রবিপ্লব জন্য আধি নষ্ট হইলে মূল্যাদি দিতে হইবে না।

Eng.—No Interest with run on protectable pawn as copper cauldron etc, if used ; so also there will be no interest on benefactory enjoyable pawn like cattle even if used and made weak ; but if it is broken, then it should be mended ; if completely destroyed then its price is to be given as compensation ; but this should not hold good if the loss be due to divine dispensation or due to revolution.

Mita—किञ्च 'गोप्याधेः' ताम्रकटाहादेः 'उपभोगे' न वृद्धिः भवति। अल्पेप्युपभोगे महत्यपि वृद्धिर्हातव्या, समयातिक्रमात्। तथा 'सोपकारे' उपकारकारिणि-बलीबर्दताम्रकटाहादौ भोग्याधौ सवृद्धिके 'हापिते' हानिं व्यवहाराक्षमत्वं गमिते "नोवृद्धिः" इति सम्बन्धः। 'नष्टो विकृति गतः ताम्रकटाहादिश्छिद्रभेदनादिना, पूर्ववनत्कृत्वादेयः। तत्र गोप्याधिर्नष्टश्चेत्, पूर्ववत्कृत्वादेयः। उपभुक्तोपिचेद् वृद्धिरपि हातव्या। भोग्याधिर्यदिनष्टस्तदा पूर्ववत्कृत्वादेयः। वृद्धिसद्भावे वृद्धिरपि हातव्या : 'विनष्टः' आत्यन्तिकं नाशं प्राप्तः। सोपि देयो मूल्यादिद्वारेण। तदाने सवृद्धिकं मूल्यं लभते धनी। यदा न ददाति तदा मूलनाशः। 'विनष्टे मूलनाशः स्याद् दैवराजकृताद्दते' इति नारदवचनात्। "दैवराजकृताद्दते"—दैवम् अग्न्युदकदेशोपप्लवादि। दैवकृताद् विनाशाद् विना, तथा स्वापराधरहितात् राजकृतात्॥ दैवराजकृतेतु विनाशे सवृद्धिकं मूल्यं दातव्यमधमर्णेन, आध्यन्तरं वा ( In दैवकृत वा राजकृत आधिनाश, the debtor is to pay both 'Interest and मूल वा capital ; or a new आधि is to be kept )। यथाह—"स्रोतसापहृते क्षेत्रे राज्ञा

चैवापहारिते। आधिरन्योत्र कर्त्तव्यो देयं वा धनिने धनम्" इति। तत्र "स्रोतसापहृत" इति दैवकृतोपलक्षणम्॥ ५९॥

## CHARCHA

1. गोप्याधि etc—गुपरक्षणे+ण्यत्=गोप्यम् protectable. आधिं वा भावे ७मी।

2. सोपकारे – उपकारेण सह वर्त्तमाने। Q. आधौ understood.

3. हापिते—हात्यागे+णिच+क्त कर्मणि। If rendered व्यवहारायोग्य। Even in सवृद्धिक भोग्याधि, there will be no interest if rendered व्यवहारायोग्य by use.

4. दैव etc —अनेशब्दयोगे ५मी। दैवं च राजा च। ताभ्यां कृतात्। See also Mitakshara and note therein on दैवकृते वा राजकृते आधिनाश etc.

60 आधिs consummation is by उपभोग।

> आधेः स्वीकरणात् सिद्धी रक्ष्यमाणोप्यसारताम्।
> यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत्॥ ६०॥

Prose—आधेः (गोप्यस्य भोग्यस्य आधेः) स्वीकरणात् (उपभोगात्) सिद्धिः (आधिग्रहणसिद्धिः) भवति। आधिः (यत्नेन) रक्ष्यमाणोपि यदि असारतां (अविकृत एव असारतां) यातः, तदा अन्य आधिः आधेयः कर्त्तव्यः (स्थापितव्योवा), वा धनी धनभाग् भवेत (धनिने धनं देयमित्यर्थः)।

Beng—গোপ্য এবং ভোগ্য আধি উপভোগ দ্বারা সঠিক প্রতিপন্ন বা প্রমাণিত হয়। আধি সযত্নে রক্ষিত হইলেও যদি বিকৃত না হইয়াই কালে অসার হইয়া যায়, তবে অধমর্ণ অন্য আধি স্থাপন করিবে অথবা ধনীকে (উত্তমর্ণকে) সুদসহ প্রাপ্য ধন দিবে।



Eng—A pawn is consummated and proved by its enjoyment or use; if a pawn becomes useless in time even if well cared or protected, then the debtor is to place another pawn instead; or he is to pay the debt (with interest) to the creditor.

Mita—अपि च 'आधेः' भोग्यस्य गोप्यस्य च "स्वीकरणात्" उपभोगात् आधिग्रहण"सिद्धिर्भवति"। न साक्षिलेख्यादिमात्रेण नाप्युद्देशमात्रेण। यथाह नारदः—आधिस्तु द्विविधः प्रोक्तो जङ्गमः स्थावरस्तथा। सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथा"। अस्य च फलम्—"आधौ प्रतिग्रहे क्रीते पूर्वातु बलवत्तरा" इति। या स्वीकारान्ता क्रिया सापूर्वा बलवती, स्वीकाररहिता तु पूर्वापि न बलवती॥ स आधिः प्रयत्नेन 'रक्ष्यमाणोपि कालवशेन "यद्यसारताम्" अविकृत एव सवृद्धिकमूलद्रव्यापर्य्याप्ततां "गतः तदा अन्य आधिः कर्त्तव्यः धनिने वा धनं देयम्"॥ "रक्ष्यमाणोप्यसारताम्" इति वदता आधिः प्रयत्नेन रक्षणीयो धनिना इति (अत्र) ज्ञापितम्॥

## CHARCHA

1. स्वीकरणात्—उपभोगात। हेतौ ५मी॥ सिद्धिः रक्ष्यमाण by सन्धि becomes सिद्धी रक्ष्यमाणः॥ आ+धा+यत् कर्मणि=आधेयः Is to be placed. Construe---अन्य आधिः आधेयः।

2. धनभाग्—धनंभजते इति धन+भज+ण्वि=धनभाग् receiver of धन, by the rule "भजोण्विः"। Pred. to धनी।

61. Even twice interest is allowed when there is mutual promise, and आधि will not be lost.

चरित्रवन्धककृतं स वृद्ध्या दापयेद्धनम् ।
सत्यंकारकृतं द्रव्यं द्विगुणं प्रतिदापयेत् ॥ ६१ ॥

Prose—चरित्रवन्धककृतं (सदाशयरूपचरित्रेण कृतं सबन्धकं ऋणं) वृद्ध्यासह, स (नृपः अधमर्णं) धनं दापयेत् (द्विगुणमपि दापयेत्)। सत्यङ्कारकृतं द्रव्यं (धनं) द्विगुणमपि प्रतिदापयेत (न च आधिनाशः स्यात)।

Beng—উত্তমর্ণ বা অধমর্ণের সদাশয়তা হেতু সবন্ধক গৃহীত ঋণ বা ধন, বৃদ্ধির সহিত দ্বিগুণ হইলে, রাজা অধমর্ণকে দিয়া (উত্তমর্ণকে) দেওয়াইবেন; বন্ধক রাখিয়া ঋণ ধন লইবার সময় যদি কোন সত্যাঙ্গীকার থাকে, তবে ধন সুদসহ দ্বিগুণ হইলেও রাজা সমুদয় এই ধন দেওযাইবেন (এতে আধিনাশ হইবে না)।

Eng—A debt taken on pawn dependent on the magnanimity of either of debtor, or creditor is to be paid along with adequate interest; and if there be some promise involved in such transaction, then it with interest rising twice as much is also to be given (and there will be no loss of pawn in such cases as said in 'आधिः प्रणश्येत् द्विगुणेधने" – in sl. 58).

Mita—"आधिः प्रणश्येत् द्विगुणे" इत्यस्यापवादमाह—चरित्रं शोभनाचरितम् (good behaviour), चरित्रेण बन्धकं "चरित्रबन्धकं", तेन यद्द्रव्यमात्मसात्कृतं (अधमर्णेन), पराधीनं वा कृतम् (उत्तमर्णेन)। एतदुक्तं भवति—धनिनः स्वच्छाशयत्वेन बहुमूल्यमपि द्रव्यमाधीकृत्य अधमर्णेन अल्पमेव धनमात्मसात्कृतम्, यदि वाधमर्णस्य स्वच्छाशयत्वेन अल्पमूल्यमपि आधिं गृहीत्वा बहुद्रव्यमेव धनिना अधमर्णाधीनं कृतमिति। तद्धनं स नृपो वृद्ध्या सह



दापयेत्। अयमाशयः—एवं च बन्धकं द्विगुणीभूतेपि द्रव्ये न नश्यति, किन्तु द्रव्यमेव द्विगुणं दातव्यम्। तथा सत्यंकारकृतम्"—करणं कारः। भावे घञ्। सत्यस्यकारः—["कारे सत्यागदस्य" इतिसूत्रेण मुमागमः]। सत्यंकारेण कृतं सत्यंकारकृतम्। अयमभिसन्धिः—यदा बन्धकार्पणसमये एवेत्थं परिभाषितं "द्विगुणीभूतेपि द्रव्ये (धने) मया द्विगुणमेव द्रव्यं दातव्यं नाधिनाशः" इति तदा "तद्द्विगुणं दापयेत्"॥ अत्र अन्योर्थः—चरित्रमेव बन्धकं चरित्रबन्धकम्। चरित्रशब्देन गङ्गास्नानादि-अग्निहोत्रादिजनितपुण्यमुच्यते। यत्र तदेवाधिकृत्य यद्द्रव्यमात्मसात्कृतं तत्र तदेव द्विगुणीभूतं दातव्यम्, नाधिनाशः। आधिप्रसङ्गात् अन्यदुच्यते—सत्यंकारकृतमिति—क्रयविक्रयादिव्यवस्थानिर्वाहाय यदङ्गुलीयकादिपरहस्तेकृतं तद्व्यवस्थातिक्रमे "द्विगुणं दातव्यम्"। तत्रापि येनाङ्गुलीयकाद्यर्पितं स एव चेद्व्यवस्थातिवर्त्ती तेन तदेव दातव्यम्। इतरश्चेद्व्यवस्थातिवर्त्ती तदा तदेवाङ्गुलीयकादि द्विगुणं प्रतिपादयेत् [Another significance here on आधि item – In case of pawn of some gold ring etc with another in exchange for money to carry on business, then the transgressor of this, will have to pay twice money (if he is money-taker) or two goldning etc (if he is keeper of ring etc)]॥

CHARCHA

1. चरित्रबन्धककृतम्—चरित्रेण (सदाशयेन हेतुना) बन्धकम्। सुप्सुपा (वा ३र्तत् acc. to some). तेन कृतम्। A pawn transaction carried on but dependent on good conduct or behaviour of अधमर्ण or उत्तमर्ण as the case may be. See Mitakshara. Qual. धनम्। दापयेत्—दा+णिच् लिङ्यात्॥ shall cause to give, even if it reaches twice the original amount with interest. And आधि in such case will not be lost. construe – वृद्धासह स राजा दापयेत्।

2. सत्यंकारकृतम्—सत्यस्य कारः ( करणं ) इति सत्यङ्कारः with मुमागम by the rule "कारे सत्यागदस्य"। See also "सत्यङ्कार-मिवान्तकः"—Kirata XI. sl. 50. Qual. द्रव्यम् (=धनद्रव्यम्)। Here also no आधिनाश, even if द्विगुण of मूलधन is to be given. See Mitrakshara.

62. If a debtor comes with money, the आधि is to be released then.

उपस्थितस्य मोक्तव्य आधिः स्तेनोऽन्यथा भवेत् ।
प्रयोजकेऽसति धनं कुले न्यस्याधिमाप्नुयात् ॥ ६२ ॥

Prose—उपस्थितस्य ( अधमर्णस्य ) आधिः मोक्तव्यः ( धनिना उत्तमर्णेन इत्यर्थः ) अन्यथा स स्तेनः ( चौरः ) भवेत् ( चौरवद्दण्ड्यश्च )। प्रयोजके ( प्रयोक्तरि उत्तमर्णे ) असति ( असन्निहिते ) कुले ( आप्तहस्ते ) न्यस्य आधिमाप्नुयात् ( बन्धकं गृह्णीयात् )।

Beng—ধন লইয়া অধমর্ণ আসিলে তার আধি মোচন করিয়া দিতে হইবে। নচেৎ সে ধনদাতা চোর হইবে ( অর্থাৎ চৌরবদ্ দণ্ডনীয়ও হইবে )। আর ধনদাতা সেখানে উপস্থিত না থাকিলে কুলে আপ্তজনের নিকট সবৃদ্ধিক ধন দিয়া আধি ফিরাইয়া লইবে।

Eng. If a debtor comes with money, then his pawn is to be released ; otherwise a non-releasor ( उत्तमर्ण ) will be regarded as a thief ; if the giver of money ( उत्तमर्ण ) is not present there, then the money with interest is to be given to some reliable person of the family and the pawn is to be taken back.

Mita—किञ्च धनदानेन आधिमोक्षणाय उपस्थितस्य "आधिर्मोक्तव्यः धनिना"। न वृद्धिलोभेन स्थापयितव्यः। अन्यथा अमोक्षणे स्तेनः भवेत्



चौरवत्दण्ड्योपि भवेत्। असन्निहिते पुनः प्रयोक्तरि "कुले" तदाप्तहस्ते सवृद्धिकं धनं विधाय अधमर्णिकः स्वं बन्धकं गृह्णीयात् ॥

## CHARCHA

1. मोक्तव्यः—मुच+तव्य कर्मणि। Agrees with आधिः।

2. न्यस्य—नि+अस ( क्षेपे दिवादि )+ल्यप्। Having placed

63 When debtor is desirous to pay off no interest will run etc.

तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः ।
विना धारणकाद्वापि विक्रीणीत ससाक्षिकम् ॥ ६३ ॥

Prose—वा ( प्रयोजने सति ) तत्कालकृतमूल्यः आधिः तत्र ( प्रयोजके ) अवृद्धिकः तिष्ठेत्। धारणकात् ( अधमर्णात् ) विना ( अधमर्णे असन्निहिते सति ) ( धनिनः प्रयोजने च सति ) आधिं ससाक्षिकम् विक्रीणीत।

Beng. ধনী অনুপস্থিত, তদীয় কুলস্থ লোকও ধনগ্রহণে অসম্মত হয়, তখন রক্ষিত আধির তৎকালোচিত মূল্য স্থির করিয়া ধনীর নিকটই আধি থাকিবে, তবে আর সুদ চলিবে না। যদি অধমর্ণ অনুপস্থিত থাকে এবং ধন দ্বিগুণ হইয়া যায় ( অথচ আধির অনাশের চুক্তি আছে ) তখন ধনী সাক্ষী রাখিয়া আধি ( বন্ধকদ্রব্য ) বিক্রয় করিয়া ধন লইবে।

Eng. In case family members do not agree to take money in the absence of the creditor ( but the debtor wants this), then the mortgaged article should be determined by the current price and will remain with the creditor, but no interest with run on thenceforth ; again if debtor is absent, and the amount becomes twice with interest (and there is

some agreement), then the creditor is eligible to take money by selling the pawned or mortgaged article in the presence of witnesses. (See Mitakshara).

Mita—अथ प्रयोक्ताप्यसन्निहितः तदाप्ताश्च धनस्य ग्रहीतारो न भवन्ति, यदि वा असंनिहिते प्रयोक्तरि आधिविक्रयेण धनदित्सा अधमर्णस्य तत्र किं कर्त्तव्यम् इत्यपेक्षिते आह—"तस्मिन्काले यत् तस्याधेर्मूल्यं तत्परिकल्प्य तत्रैव धनिनि तमाधिं वृद्धिरहितं स्थापयेत्"। तत ऊर्ध्वं न विवर्धते। यावद्धनी धनं गृहीत्वा तमाधिं मुञ्चति, यावद्वा तन्मूल्यद्रव्यमृणे प्रवेशयति॥ यदा तु द्विगुणीभूतोपि धने द्विगुणं धनमेव ग्रहीतव्यं, न त्वाधिनाश इति विचारितमृणग्रहणकाले एव, तदा द्विगुणीभूते द्रव्ये असन्निहिते चाधमर्णे धनिना किं कर्त्तव्यमित्यत आह—"धारणकात" अधमर्णात् विना, अधमर्णे असन्निते साक्षिभिस्तदाप्तैश्च सह तमाधि विक्रीय तद्धनं गृह्णीयात् धनी॥ वा-शब्दो व्यवस्थितविकल्पार्थः ("वा" denotes a fixed alternative between आधिनाश in द्विगुणीभूतधन or no आधिनाश due to contract even if धन is द्विगुणीभूत)। यत् ऋणग्रहणकाले द्विगुणीभूतेपि धने धनमेव ग्रहीतव्यं न तु आधिनाश इति न विचारितं, तदा "आधिः प्रणश्येद्द्विगुणे" इत्याधिनाशः स्यात्। विचारिते त्वयं पक्षः॥ ६३॥

CHARCHA

1. तत्काल कृतमूल्यः—सः कालः that current time, कर्मधा। तत्काले कृतम् (विहितं परिकल्पितं वा), सुप्सुपा। तत्कालकृतं मूल्यं यस्य, वहु। Refers to आधिः। आधि to be determined by the current price.

2. अवृद्धिकः—अविद्यमाना वृद्धिः यस्मिन्, वहु। Prod. to आधिः। आधि is nom. to तिष्ठेत्॥ धारणकात्=अधमर्णात्। विनाशब्दयोगे ५मी।



3. ससाक्षिकम्—साक्षिभिः सह वर्त्तमानम, वहु। समासान्त कप्। तत् यथा तथा। Adv. qual. विक्रीणीत (वि+क्री लिङ्ईत)॥

64. Special provisions in भोग्य आधि when it is kept after debt has reached twice with interest.

यदा तु द्विगुणीभूतमृणमाधौ तदा खलु।
मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने॥ ६४॥

Prose—यदा ऋणं (धनं) वृद्ध्या सह द्विगुणीभूतं, तदा (पुनः) आधौ कृते, तदुत्पन्ने (आध्युत्पन्ने) धने द्विगुणे प्रविष्टे धनिना आधिः मोच्यः (अवश्यमेव मोक्तव्यः)।

Beng. যখন ধন বা প্রদত্ত ঋণ সুদসমেত দ্বিগুণ হইবে, তখন যদি আবার সফল ক্ষেত্রাদি আধি স্থাপন করা হয়, তবে এই আধ্যুৎপন্ন ধন প্রাপ্য ধনের দ্বিগুণ হইয়া গেলে, ধনী অবশ্যই সেই আধি ছাড়িয়া বা ফিরাইয়া দিবে। (See Mitakshraa also)

Eng. When the debt given by a creditor becomes twice as much with interest, and a further mortgage of some productive land is then kept, then when the sum got therefrom reaches twice as much as the due then this mortgaged property is to be given back or released. (See Mita also).

Mita—भोग्याधौ विशेषमाह – "यदा प्रयुक्तं धनं स्वकृतया वृद्ध्या द्विगुणीभूतं तदाधौकृते, तदुत्पन्ने आध्युत्पन्ने द्रव्ये द्विगुणे धनिनः द्विगुणे प्रविष्टे आधिर्मोक्तव्यः"। यदि वा आदौ एव आधौ दत्ते "द्विगुणीभूते द्रव्ये त्वयाधिर्मोक्तव्य" इति, परिभाषया (understanding, contract) कारणान्तरेण वा भोगाभावेन यदा द्विगुणीभूतमृणं तदा, आधौ भोगार्थं धनिनि प्रविष्टे तदुत्पन्ने द्रव्ये द्विगुणे सति आधिर्मोक्तव्यः। अधिकोपभोगे तदपि देयम्। सर्वथासवृद्धिकमूलऋणापाकरणार्था-

व्युपभोगविषयमिदं वचनम्। तमेनं क्षयाधिमाचक्षते लौकिकाः। यत्तु वृद्ध्यर्थ एवादुपभोग इति परिभाषा तत्रद्वैगुण्यातिक्रमेपि यावन्मूलदानं तावदुपभुङ्क्ते एवाधिम्। एतदेवस्पष्टीकृतं वृहस्पतिना—' ऋणीवन्धकमवाप्नुयात्। फलभोग्यं पूर्णकालं दत्त्वा द्रव्यं तु सामकम्। यदि प्रकर्षितं तत्स्यात्तदा न धनभाग् धनी। ऋणी च न लभेद्वन्धं परस्परमतं विना॥ [अस्यार्थः—फलं भोग्यं यस्यासौ फलभोग्यः वन्धक आधिः। स च द्विविधः—सवृद्धिकमूलापकरणार्थः, वृद्धिमात्रापकरणार्थश्च। तत्र च सवृद्धिमूलापकरणार्थं वन्धं पूर्णकालं (पूर्णःकालः यस्यासौ पूर्णकालः) तम् अवाप्नुयादृणी। यदा सवृद्धिकं मूलं फलद्वारेण धनिनः प्रविष्टं तदा वन्धमाप्नुयात्। वृद्धिमात्रापकरणार्थं तु वन्धं सामकं दत्त्वाप्नुयादृणी। समं=मूलम्; सममव सामकम्॥ अस्यापवादम् आह—यदि प्रकर्षितं तत्स्यात्। तत् वन्धकं प्रकर्षितमतिशयितं वृद्धेरप्यधिकं फलं यदि स्यात् 'तदान धनभाग धनी' सामकं न लभेद्धनी। मूलमदत्वैव ऋणी वन्धकमवाप्नुयादिति। अथ त्वप्रकर्षितं तद्वन्धकं वृद्धयेपि अपर्य्याप्तं, तदा सामकं दत्त्वापि वन्धं न लभेत्। अधमर्ण वृद्धिशेषमपि दत्त्वैव लभेत इत्यर्थः। पुनरुभयत्रापवादमाह—"परस्परमतं विना" उत्तमर्णाधमर्णयोः परस्परानुमत्यभावे 'यदि प्रकर्षितम्' इत्याद्युक्तम्। परस्परानुमतौ तूत्कृष्टमपि वन्धकं यावन्मूलदानं तावदुपभुङ्क्ते धनी। निकृष्टमपि मूलमात्रदाने नैवाधमर्णो लभेत इति॥ इति ऋणादानप्रकरणम्॥

## CHARCHA

I. द्विगुणीभूतम्—द्वौगुणौ अस्य, वहु। अद्विगुणं द्विगुणं सम्पद्यमानंभूतुम्=द्विगुणीभूतम् (with अभूततद्भावे च्विप्रत्ययः)। Pred. to ऋणम्।

2. मोच्यः—मुच+ण्यत्। To be released. In मुच+ण्यत्, च does not become क by the rule "चजोः कु घिण्यति", for it is barred in case where आवश्यक is implied; the rule on the point is "ण्य आवश्यके"। See also our Sak. III under शोच्या॥

अथ उपनिधिप्रकरणम्— (Special Placing of pledge with



another; almost the same as निक्षेप—See Mitakshara and notes below).

65. उपनिधि is special placing of द्रव्य with another out of trust.

वासनस्थमनाख्याय हस्ते अन्यस्य यदर्प्यते।
द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत्॥ ६५॥

Prose—वासनस्थं (पात्राभ्यन्तरस्थं) द्रव्यमनाख्याय अन्यस्य हस्ते यदर्प्यते तत्द्रव्यम् औपनिधिकं (स्मृतम्)। तत् तथैव प्रतिदेयम्।

Beng. কোন বাসন বা পেটিকার ভিতর দ্রব্য বিশেষের পরিচয় না দিয়া, চিহ্নিত বা মুদ্রিত করিয়া যে দ্রব্য বিশ্বাস সহকারে অন্যের হাতে দেওয়া হয় তাহাকে ঔপনিধিক (উপনিধিবিষয়ক) দ্রব্য বলা হয়। উহা সেইভাবেই নিক্ষেপকের হাতে ফিরাইয়া দিতে হইবে।

Eug- The thing placed on another with trust after having kept within a sealed or marked casket, is called a "upanidhi" pledge-article; this is to be returned to the placer in tact (and in time),

Mita. उपनिधिं प्रत्याह—निक्षेपद्रव्यस्याधारभूतं द्रव्यान्तरं "वासनं" करम्भादि, तत्स्थं "वासनस्थं यद्द्रव्यं, रूपसंख्यादि विशेषमनाख्याय अकथयित्वा मुद्रितमन्यस्य हस्ते रक्षणार्थं विस्रम्भाद् अर्प्यते स्थाप्यते" तद्द्रव्यम् औपनिधिकम् उच्यते। (यथाह नारदः—"असंख्यातमविज्ञातं समुद्रं यन्निधीयते तज्जानीयादुपनिधिं निक्षेपं गणितं बिदुः")। "प्रतिदेयं तथैवतत्"—यस्मिन् स्थापितं तेन, यथैव पूर्वमुद्रादिचिह्नितमेव तथैव स्थापकाय प्रतिदेयं प्रत्यर्पणीयम्॥

## CHARCHA

1. औपनिधिकम्—उपनिधीयते इति। उप+नि+धा+कि कर्मणि=उपनिधिः placing of special pledge with another, as in निक्षेप which

**Kulluka** defines "स्वधनस्य अन्यस्मिन् अर्पणरूपो निक्षेपः" in a **general sense.** But strictly उपनिधि is उपनिक्षेप acc. to **Medhatithi** who defines उपनिक्षेप as" उपनिक्षेपो नाम रूपसंख्याप्रदर्शनेन रक्षणार्थं परस्य हस्ते निहितं द्रव्यम्"। Sometimes however as in **विज्ञानेश्वर's Mitakshara** उपनिक्षेप and निक्षेप are taken as counted money etc. placed with another (see sl. 25 ante), whereas उपनिधि here is placing of pledge with another within a sealed casket and uncounted. See also Narada quoted in the **मिताक्षरा** and compare "अन्यद्रव्यव्यवहितं द्रव्यमव्याकृतञ्च यत्। निक्षिप्यते परगृहे तदौपनिधिकम्स्मृतम्"।

उपनिधौभवम् इति ठञ् प्रत्ययेन औपनिधिकम्। अध्यात्मादेराकृतिगणत्वात् **सिद्धम्** ॥

66. उपनिधि is to be given in kind or invalue, except in case of royal requisition, divine dispensation or theft.

न दाप्योऽपहृतं तं तु राजदैविकतस्करैः।

भ्रेषश्चेन्मार्गिते अदत्ते दाप्यो दण्डं च तत्समम् ॥ ६६ ॥

Prose—तम् ( उपनिधिं ) राजदैविकतस्करैः अपहृतं तु **न दाप्यः। स्वामिना मार्गिते** (याचिते अपि ) अदत्ते सति चेत् भ्रेषः ( नाशः ) तदा उपनिधिः **दाप्यः तत्समम्** दण्डश्च राज्ञे दाप्यः।

Beng. যদি ঐ স্থাপিত উপনিধি ( দ্রব্য ) রাজা **গ্রহণ করেন, বা দৈববৃষ্ট্যাদিজন্য নষ্ট হয়,** বা অজানিতভাবে চোর কর্তৃক **অপহৃত হয়, তবে রক্ষক, স্থাপককে** ঐ দ্রব্য দিতে বাধ্য থাকিবেন না। কিন্তু স্থাপক **ঐ দ্রব্য** যাচনার পর যদি রাজাদি দ্বারা নষ্ট হয় তবে রক্ষক দ্রব্যস্বামীকে **উহার মূল্য** দিবে এবং রাজাকে তৎসমান মূল্য দণ্ডও দিবে।



**Eng.**—If the kept casket is lost due to royal **requisition,** divine dispensation or by theft, then the receiver or **keeper** of upanidhi will not be liable to return it back in **tact,** but if the same is lost in a similar way after **the owner** of upanidhi prays for it, then the receiver or **keeper is to pay** it back in current price and he is also to pay **an equal amount of fine to the king.**

Mita—"प्रतिदेयम्" इत्यस्यापवादमाह—तमुपनिधिं राज्ञा दैवेन **उदकादिना** ( **वृष्ट्यादिना** ) तस्करैर्वापहृतं नष्टं न दाप्योऽसौ यस्मिन्नुपनिहितम्। **धनिन एव** तद्द्रव्यं नष्टं यदि जिह्मकारितं न भवति। यथाह नारदः—"**ग्रहीतुः सह-योर्थेन नष्टो** नष्ट स दायिनः। दैवराजकृते तद्वच्चेत्तज्जिह्मकारितम्" ॥ **अस्य** ( पुनः ) अपवादमाह"—"स्वामिना मार्गिते" याचिते यदिन **ददाति तदा** तदुत्तरकालं—यद्यपि राजादिभि"भ्रेषः" नाशः सञ्जातस्तथापि **तद्द्रव्यं** मूल्यकल्पनया "धनिने ग्रहीता दाप्यः राज्ञा", राज्ञे च **तत्समं दण्डम्** ( दाप्यः )॥ ६६ ॥

## CHARCHA

1. राजदैविक etc—देवे भवम्=देव+ठञ्=दैविकम् divine **dispensation** राजा च दैविकश्च, द्वन्द्व। better राजा च देवश्च राजदैवे। राजदैवे **भवम्** इति राजदैविकम्। ठञ्। राजदैविकं च तस्करः च ( तस्करकृतश्च ) **द्वन्द्व**। बहुप्रकारत्वविवक्षया बहुवचनम्। तैः। अनुक्तकर्त्ता of अपहृतम् ॥ **तेन** समम् तत्समम्, ततत्। or तस्यसमम् also by "तुल्यार्थैरतुलोप**माभ्यां तृतीयान्यतरस्याम्**" or राजदेव+ठञ्।

64. Penalty in case of enjoyer of उपनिधि by **receiver etc.**

आजीवन्स्वेच्छया दण्ड्यो दाप्यस्तं चापि सोदयम्।

याचितान्वाहित-न्यासनिक्षेपादिष्वयं विधिः ॥ ६७ ॥

Prose—स्वेच्छया (स्थापकस्य अननुमत्या) (उपनिहितं द्रव्यम्) आजीवन् (उपभुञ्जानः व्यवहरन् वा रक्षकः) दण्ड्यः. तं (उपनिधिं) सोदयम् (सवृद्धिकं) दाप्यः (सः रक्षकः)। याचित-अन्वाहित-न्यास निक्षेपादिषु अपि अयं विधिः।

Beng—যদি উপনিধিরক্ষক, স্থাপকের বিনা অনুমতিতেই ঐ উপনিধিদ্রব্য ভোগ বা ব্যবহার করে তবে সে রাজকর্তৃক দণ্ডনীয়। এবং রাজা উপনিধিদ্রব্য, ব্যবহারজন্য সুদসহ ফিরাইয়া দেওয়াইবেন। এই বিধি বা নিয়ম, যাচিত দ্রব্য (বিবাহাদিতে ব্যবহারার্থ যাচিত অলঙ্কার বস্ত্রাদি) অন্বাহিত দ্রব্য (রক্ষক উপনিধি যদি পরে অন্য হস্তে প্রদান করে) ন্যাস দ্রব্য (গৃহস্বামীর অসাক্ষাতে তার রক্ষিত দ্রব্য তাকে দিবার জন্য গৃহজনকে প্রদান) নিক্ষেপ দ্রব্য (সাক্ষাতেই ধনাদি সমর্পণ) =প্রভৃতি বিষয়ে ও প্রযোজ্য।

Eng.—If a receiver of upanidhi wilfully uses or enjoys it without the permission of the placer, then the enjoyer will be punished by the king and he is to pay back the same with interest or profit (as the case may be); this rule holds good in case of articles asked (for using), in case of other trusted articles given through another etc.

Mita—भोक्तारं प्रतिदण्डमाह— यः "स्वेच्छया" स्वाम्यननुज्ञया उपनिहितं द्रव्यम् "आजीवन्" उपभुङ्क्ते व्यवहरति वा, प्रयोगादिना लाभार्थमुपभोगानुसारेण लाभानुसारेण च दण्ड्यः" तं चोपनिधिं सोदयमुपभोगे सवृद्धिकं व्यवहारेसलाभं धनिने दाप्यः। (वृद्धिप्रमाणञ्च कात्यायनेनोक्तम्— "निक्षेपं वृद्धिशेपं च कयं विक्रयमेव च। याच्यमानो न चेद्दद्यादवर्धते पञ्चकं शतम्' इति॥ एतच्चभक्षिते द्रष्टव्यम्। उपेक्षाज्ञाननष्टे तु तेनैव विशेषः दर्शितः—



"भक्षितं सोदयं दाप्यः समं दाप्य उपेक्षितम्। किञ्चिन्न्यूनं प्रदाप्यःस्याद् द्रव्यमज्ञाननाशितम्" इति। किञ्चिचन्न्यूनम् इति चतुर्थांशहीनम्)॥

उपनिधेधर्मान् याचितादिष्वतिदिशति—विवाहादुग्रत्सवेषु वस्त्रालंङ्कारादि याचित्वा आनीतं "याचितम्"। यदेकस्य हस्तेनिहितं द्रव्यं तेनाप्यनुपश्चात् अन्यहस्ते "स्वामिनेदेहि" इति निहितं तद् "अन्वाहितम्"। न्यासी नाम गृहस्वामिने अदर्शयित्वा तत्परोक्षमेव गृहजनहस्ते प्रक्षेपो—'गृहस्वामिने प्रदेय'मिति। समक्षं तु समर्पणं निक्षेपः। ['आदि' शब्देन—सुवर्णकारादि हस्ते कटकादिनिर्माणाय न्यस्तस्य सुवर्णादेः, "प्रतिन्यासस्य" च परस्पर-प्रयोजनापेक्षया 'त्वयेदं मदीयं रक्षणीय', मयेदं त्वदीयं रक्ष्यते इति न्यस्तस्य—ग्रहणम्। यदाहनारदः—" एष एव विधिर्दृष्टो याचितान्वाहितादिषु। उपनिधौ न्यासे प्रतिन्यासे तथैव च' इति]। "एतेषु याचित-अन्वाहितादिषु अयं विधिः, उपनिधेर्यः प्रतिदानादिविधिः स एव वेदितव्यः॥ ६७॥

## CHARCHA

1. आजीवन्—आ+जीव+शतृ। Here used in the sense of "enjoying" or "using"। स्वेच्छया has प्रकृत्यादित्वात् तृतीया।

2. सोदयम्—उदय here is वृद्धि वा लाभ due to enjoyment, तेन सह वर्त्तमानम्, बहु। Adv. qual. दाप्यः। The king is to order payment of this, so णिच् in दाप्य is used (see before)

3. याचित &c—for meaning of याचित, अन्वाहित, न्यास, निक्षेपद्रव्य etc, see Beng and मिताक्षरा above.

## अथ साक्षिप्रकरणम् (section on witnesses)

68-69. Characteristics of reliable witnesses,

तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः।
धर्मप्रधाना ऋजवः पुत्रवन्तोधनान्विताः॥ ६८॥

अवरा साक्षिणो ज्ञेयाः श्रौतस्मार्त्तक्रियापराः।
यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः॥ ६९॥

Prose—कुलीनाः तपस्विनः दानशीलाः सत्यवादिनः धर्मप्रधानाः ऋजवः पुत्रवन्तो धनान्विताः श्रौतस्मार्त्तक्रियापराः अवराः साक्षिणो ज्ञेयाः। सर्वे (साक्षिणः) सर्वेषु (ब्राह्मणादिजातिषु अनुलोम-प्रतिलोमादिषु) यथाजाति यथावर्णं स्मृताः।

Beng. সাক্ষিগণ সদ্বংশজাত, জপতপঃপরায়ণ, দানশীল, সত্যবাদী, ধর্মনিষ্ঠ, সরলমনা, ধন ও পুত্র সমন্বিত, শ্রৌতস্মার্ত্তক্রিয়ারত হইবেন। তাঁদের সংখ্যা তিনের কম হইবে না। এতাদৃশ সাক্ষীগণ জাতি এবং বর্ণানুসারে হওয়া উচিত অর্থাৎ জাতিতে মূর্ধাবসিক্তাদির অম্বষ্ঠাদির তাদৃশ সাক্ষী হইবে। তদ্রূপ ব্রাহ্মণের ব্রাহ্মণ, ক্ষত্রিয়ের ক্ষত্রিয় সাক্ষী হইবে। স্ত্রীলোকের ও স্ত্রীলোক সাক্ষী হওয়া বিধেয়।

Eng.—The witnesses should be of good lineage, habituated to Tapas (yapa), of charitable disposition, truthful, virtuous, candid, wealthy, having family, addicted to daily sacrificial rites and there should never be less then three witnesses they should also be of the same category (as मूर्धावसिक्त for मूर्धावसिक्त, अम्बष्ठ for अम्बष्ठ &c), and same caste (as ब्राह्मण for ब्राह्मण etc) as well. [N. B.—Usually साक्षी are either कृत वा निरूपित (appointed beforehand), वा अकृत वा अनिरूपित—not appointed as yet etc].

Mita—"प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्त्तितम्" (sl 22), तत्रभुक्तिर्निरूपिता। सम्प्रति साक्षिस्वरूपं निरूप्यते। साक्षी च साक्षाद्दर्शनात् श्रवणाच्च भवति। यथाहमनुः—"समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिध्यति"।





स च साक्षी द्विविधः-कृतः, अकृतश्चेति। साक्षित्वेन निरूपितः कृतः। अनिरूपितः अकृतः। तत्र कृतः (साक्षी) पञ्चविधः, अकृतश्च षड्विधः—इति एकादशविधः।

यथाह नारदः—"एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः। कृतःपञ्चविधो-ज्ञेयः षड्विधोऽकृत उच्यते"। तेषाञ्च भेदस्तेनैव दर्शितः—लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च। गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधः स्मृतः॥ लिखितादीनां पुनः स्वरूपञ्च कात्यायनेनोक्तम्—"अर्थिना स्वयमानीतो यो लेख्ये संनिवेश्यते। स साक्षी लिखितो नाम स्मारितः पत्रकादृते" इति। "स्मारितः पत्रकादृते" इत्यस्य विवरणं तेनैवकृतम्—"यस्तु कार्य्यप्रसिद्ध्यर्थं दृष्ट्वा कार्य्यं पुनः पुनः। स्मार्य्यते अर्थिना साक्षी स स्मारित इहोच्यते" इति। यस्तु यदृच्छागतः साक्षी क्रियते स यदृच्छाभिज्ञः। अनयोः पत्रानारूढत्वेपि भेदस्तेनैव दर्शितः—प्रयोजनार्थमानीतः प्रसङ्गादागतश्चयः। द्वौ साक्षिणौत्वलिखितौ पूर्वपक्षस्य साधकौ" इति। तथा—"अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम्। यः श्राव्यते स्थितो गूढो गूढसाक्षी स उच्यते।" तथा—साक्षिणामपि यः साक्ष्यमुपर्य्युपरि भाषते। श्रवणाच्छ्रावणाद्वापि स साक्षी उत्तरसंज्ञितः॥ इति। षड्विधस्याप्यकृतस्य (साक्षिणो) भेदो नारदेन दर्शितः—"ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम्। कार्य्येष्वधिकृतो यः स्यादर्थिना प्रहितश्च यः॥ कुल्याः कुलविवादेषु विज्ञेयास्तेपि साक्षिणः"॥ "प्राड्विवाकग्रहणम्" लेखकसभ्योपलक्षणार्थम्, लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः। नृपे पश्यति तत्कार्य्यं साक्षिणः समुदाहृताः" इति॥ [All these are witnesses in a suit]—

तेपि साक्षिणः कीदृशाः, कियन्तश्च भवन्ति इत्यत आह—"तपस्विनः" तपःशीलाः (? जपशीलाः), "दानशीलाः" दाननिरताः, "कुलीनाः" महाकुलप्रसूताः, "सत्यवादिनः" सत्यवदनशीलाः, "धर्मप्रधानाः" न त्वर्थकामप्रधानाः, "ऋजवः" अकुटिलाः, 'पुत्रवन्तः' विद्यमानपुत्राः, धनान्विताः' बहुसुवर्णादिधनयुक्ताः,

"श्रौतस्मार्त्तक्रियापराः" नित्यनैमित्तिकानुष्ठानरताः। एवम्भूताः पुरुषाः "त्र्यवराः साक्षिणो भवन्ति"। त्रयः अवरा न्यूना येषां ते "त्र्यवराः", त्रिभ्योर्वाक् न भवन्ति, परतस्तु यथाकामं भवन्ति। जातिमनतिक्रम्य "यथाजाति"—जातयो जातयोमूर्धावसिक्ताद्याः अनुलोमजाः प्रतिलोमजाश्च। तत्र मूर्धावसिक्तानां मूर्धावसिक्ताः साक्षिणो भवन्ति। एवमम्बष्ठादिष्वपि द्रष्टव्यम्। वर्णमनतिक्रम्य "यथावर्णम्"—वर्णा ब्राह्मणादयः। तत्र ब्राह्मणानां ब्राह्मणा एवोक्तलक्षणा उक्तसंख्यकाः साक्षिणो भवन्ति। एवं क्षत्रियादिष्वपि द्रष्टव्यम्। तथा स्त्रीणां साक्ष्यं स्त्रिय एव कुर्य्युः। यथाह मनुः—"स्त्रीणां साक्ष्यं स्त्रियः कुर्युः"। सजातिसवर्णासम्भवे सर्वे मूर्धावसिक्तादयो ब्राह्मणादयश्च सर्वेषु मूर्धावसिक्तादिषु ब्राह्मणादिषु च यथासम्भवं साक्षिणो भवन्ति। उक्तलक्षणानां साक्षिणामसम्भवे प्रतिषेधरहितानाम् अन्येषामपि साक्षित्वप्रतिपादनार्थम् असाक्षिणः वक्तव्याः [such fit and qualified witnesses being unavailable, other ones may be witness barring those that are unfit for साक्षी or that are असाक्षिन्। असाक्षी are also of 5 types as said by Narada quoted below]—ते च पञ्चविधा नारदेन दर्शिताः—"असाक्ष्यपि हि शास्त्रेषु दृष्टः पञ्चविधो बुधैः। वचनाद्दोषतो भेदात् स्वयमुक्तिमृतान्तरः" इति। पुनः वचनात् (due to special declaration) असाक्षिण इत्यत आह—"श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजितादयः। असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः" इति (नारदस्मृतिः)॥ तापसाः=वानप्रस्थाः। आदिशब्देन पित्रा विवदमानादीनां ग्रहणम्। यथाह शङ्खः—"पित्रा विवादमान-गुरुकुलवासि-परिव्राजक-वानप्रस्थ-निर्ग्रन्था असाक्षिणः" इति॥ दोषात् असाक्षिणो दर्शिताः—"स्तेनाः साहसिकाश्चण्डाः कितवा वञ्चकास्तथा। असाक्षिणस्ते दुष्टत्वात् तेषु सत्यं न विद्यते" (नारदेन)। चण्डाः कोपनाः, कितवा द्यूतकृतः॥ भेदाद् असाक्षिणां च स्वरूपं तेनैवोक्तम्—" साक्षिणां लिखितानाञ्च निर्दिष्टानाञ्च वादिनाम्। तेषामेको अन्यथावादी भेदात् सर्वे न साक्षिणः॥ तथा स्वयमुक्तिस्वरूपं चोक्तम्—"स्वयमुक्तिरनिर्दिष्टः स्वयमेवैत्य



यो वदेत्। सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति" इति॥ मृतान्तरस्यापि लक्षणमुक्तम्—"योर्थः श्रावयितव्यः स्यात् तस्मिन्नसति चार्थिनि। क तद्वदेत् "साक्षित्वमित्यसाक्षी मृतान्तरः"। येनार्थिना प्रत्यर्थिना वा साक्षिणां योर्थः श्रावयितव्यो भवेत् "यूयमत्र साक्षिण" इति, तस्मिन्नर्थिनि प्रत्यर्थिनि वा असति मृते अर्थेचानिवेदिते, साक्षी क कस्मिन्नर्थे कस्य वा कृते साक्ष्यं वदतु इति मृतान्तरः साक्षी न भवति। यत्र तु मुमूर्षुणा स्वस्थेन वा पित्रा पुत्रादयः श्राविता "अस्मिन्नर्थे अमी साक्षिणः' इति तत्र मृतान्तरोपि साक्षी। यथाह नारदः—"मृतान्तरोर्थिनि प्रेते मुमूर्षुश्राविताद्दते"। तथा—'श्रावितोना-तुरेणापि' यस्त्वर्थो धर्मसंहितः। मृतेपि तत्र साक्षी स्यात् षट्सु चान्वहितादिषु" इति॥ ६८-६९॥

## CHARCHA

1. तपस्विनः—By this we like to take जपशीलाः; for गृहस्थ are not usually तापस like वाणप्रस्थ (see Mita)—where तापस (वानप्रस्थ) is called असाक्षी। साक्षी should be कुलीन, अर्थवान्, धर्मपरायण सत्यवादिन् etc. for such are reliable persons.

2. धर्म &c—धर्मः प्रधानं (परायणं) येषां तेः, वहु॥ त्रयः अवराः (न्यूनाः) येषां ते, वहु। Three is the minimum number of साक्षी।

70-71. The स्त्री, वाल, वृद्ध, उन्मत्त, धूर्त्त etc are not eligible or fit for साक्षी।

स्त्रीवालवृद्धकितव-मत्तोन्मत्ताभिशस्तकाः।
रङ्गावतारिपापण्डिकूटकृद्विकलेन्द्रियाः॥ ७०॥

पतिताप्तार्थसंवन्धिसहायरिपुतस्कराः।
साहसी दृष्टदोषश्च निर्धूतायास्त्वसाक्षिणः॥ ७१॥

Prose—स्त्रीबालवृद्धकितव-मत्तोन्मत्ताभिशस्तकाः, रङ्गावतारिपाषण्डि-कूटकृद् विकलेन्द्रियः, पतित-आप्त-अर्थसम्बन्धि-सहाय-रिपु-तस्कराः, साहसी दृष्टदोषश्च तथा निर्धूताद्याः असाक्षिणः स्मृताः ।

Beng—স্ত্রীলোক, বালক, বৃদ্ধ, দ্যূতাসক্ত কিতব, মাতাল, পাগল, অভিশস্ত (ব্রহ্মহত্যাদিপাপগ্রস্ত), রঙ্গাবতারীনট, পাষণ্ডী (ধর্মভান করিয়া লোকবঞ্চক), কূটকর্মকারী, বিকলেন্দ্রিয়, পতিত, বন্ধু, অর্থসম্বন্ধী (বিবাদবিষয়ে সম্বন্ধযুক্ত), সহায় (একই কার্য্যে ব্রতী) শত্রু, চোর, বলপূর্বক দুষ্কর্মকারী, দোষযুক্ত এবং নির্ধূত বা স্বজন-পরিত্যক্ত প্রভৃতি ব্যক্তিগণ সাক্ষীর অনুপযুক্ত ।

Eng – Women, boys, old ones, gamblers, drunkards, lunatics, extremely sinful ones, actors, Bhandas, wrong-doers, debilitated ones, outcaste ones, interested ones, allies, enemies, thieves, outragers, untruthful ones, and those forlorn by relatives etc are not eligible as witnesses.

Mita—स्त्रीप्रसिद्धा, बालः अप्राप्तव्यवहारः, वृद्धः अशीतिकावरः वृद्धग्रहणं वचननिषिद्धानामान्येषमपि श्रोत्रियादीनामुपलक्षणार्थम् । कितवः अक्षदेवी, मत्तः पानादिना, उन्मत्तः ग्रहाविष्टः, अभिशस्तः अभियुक्तो ब्रह्महत्यादिना, रङ्गावतारीचारणः, पाषण्डिनो निर्ग्रन्थप्रभृतयः ; कूटकृत् कपटलेख्यादिकारी, विकलेन्द्रियः श्रोत्रादिरहितः, पतितोब्रह्महादि, आप्तः सुहृद, अर्थसम्बन्धी, सहाय एककार्य्यः, रिपुःशत्रुः तस्करः स्तेनः, साहसी बलावष्टम्भकारी । दृष्टदोषो दृष्टविरुद्धवचनः, निर्धूतो बन्धुभिस्त्यक्तः । आद्य-शब्दात् अन्येषामपि स्मृत्यन्तरोक्तानां दोषादसाक्षिणां भेदादसत्साक्षिणां स्वयमुक्ते मृतान्तरस्य च ग्रहणम् । एते स्त्रीबालादयः साक्षिणोन भवन्ति ॥



## CHARCHA

1, स्त्रीबाल &c—द्वन्द्व । अभिशस्ता एव इति अभिशस्तकाः स्वार्थकन् =accused of ब्रह्महत्या etc. Rest easy-See Beng. and Mitakshara.

72. sometimes there may be less than three witness,

उभयानुमतः साक्षी भवत्येकोपि धर्मवित् ।
सर्वः साक्षी संग्रहणे चौर्य्यपारुष्यसाहसे ॥ ७२ ॥

Prose—(कदाचित्) उभयानुमतः धर्मवित् एकः अपि साक्षी भवति । संग्रहणे (रहसि स्त्रीग्रहणे) चौर्य्यपारुष्यसाहसे च सर्वः (अविशेषेण सर्व एव) साक्षी भवति ।

Beng—কোন কোন ব্যাপারে অর্থি-প্রত্যর্থীর উভয়ানুমতসিদ্ধ একজন ধর্মজ্ঞ সাক্ষীতে ও কাজ চলিবে। আর গোপনে অন্যের স্ত্রীগ্রহণ (বা নারীহরণ), চৌর্য্য, পারুষ্য এবং জনহত্যাদি সাহসকার্য্যে সকলেই সাক্ষী হইতে পারেন। (তাতে তপস্বী শ্রোত্রিয়ব্রাহ্মণাদির সাক্ষী হওয়ার বিচার নাই)।

Eng— Even a single virtuous witness may do if relied on both by the plaintiff and the defendant; and in the matter of taking another's wife or elopement, theft, cruelties and in out-rageous act of killing others every one can stand as witness

Mita—"त्र्यवराः साक्षिणः मताः" इत्यस्यापवादमाह—ज्ञानपूर्वकम् नित्यनैमित्तिककर्मानुष्ठायी "धर्मवित् स एकोपि उभयानुमतश्चेत् साक्षी-भवति" । [अपिशब्दबलाद् द्वावपि ॥ यद्यपि "श्रौतस्मार्तक्रियापरा" इति त्र्यवराणामपि धर्मवित्वं समानं तथापि तेषामुभयानुमत्यभावेपि साक्षित्वं

भवति। एकस्य द्वयोर्वाउभयानुमतैरव साक्षित्वं भवति—इति अर्थवत् ऊभयर् ग्रहणम् [ साक्षित्व of one or two धर्मवित् is accepted if उभयानुमत ; so उभयर is significantly used here before ]।

"तपस्विनो दानशीलाः"—इत्यस्यापवादमाह—'संग्रहणादीनि' वक्ष्यमाण-लक्षणानि। तेषु सर्वे वचननिषिद्धास्तपःप्रभृतिगुणरहिताश्च साक्षिणो भवन्ति॥ दोषादसाक्षिणौ भेदादसाक्षिणः स्वयमुक्तिश्चात्रापि साक्षिणोन भवन्ति, सत्याभावात् इति हेतोरत्रापि विद्यमानत्वात्।। "मनुष्यमारणं चौर्य्यं परदाराभिमर्शनम्। पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम्"—इति वचनात् यद्यपि स्त्रीसंहण-चौर्य्य-पारुष्याणां साहसत्वं तथापि तेषां स्वबलावष्टम्भेन जनसमक्षं क्रियमाणानां साहसत्वम्। [ रहसि क्रियामाणानां तु संग्रह-शब्दवाच्यत्वम् इति तेषां साहसात् पृथगुपादानम्—taking of another's women in secret is संग्रहण here, so it is taken apart from साहस here ] ॥ ७२ ॥

## CHARCHA

1. संग्रहणे – संग्रहण is here taking of or eloping with another's woman in secret. विषयाधिकरणे ७मी।

2. चौर्य्य &c—पारुष्य is both वाक्पारुष्य and दण्ड पारुष्य। साहस is here sudden outrageous act of killing others ; comp सहसा क्रियते कर्मयत्किञ्चित् वलदर्पितः। ततसाहसमिति प्रोक्तम् सहोवलमिहोच्यते"। चौर्य्यं च पारुष्यं च साहसम् च, समाहारद्वन्द्व by "सर्वोद्वन्द्वो विभाषा एकवद् भवतीति वाच्यम्"। विषयाधिकरणे ७मी। In such cases any one reliable and aware of acts may be witness.

73-75. Oath of witnesses

साक्षिणः श्रावयेद्वादि-प्रतिवादिसमीपगान्।
ये पातककृतां लोका महापातकिनां तथा ॥ ७३ ॥



अग्निदानां च ये लोका ये च स्त्रीबालघातिनाम्।
स तान् सर्वानवाप्नोति यः साक्ष्यमनृतं वदेत् ॥ ७४ ॥

सुकृतं यत्त्वया किञ्चिद्जन्मान्तरशतैः कृतम्।
तत्सर्वं तस्य जानीहि यं पराजयसे मृषा ॥ ७५ ॥

Prose—वादि-प्रतिवादिसमीपगान् साक्षिणः ( प्राड्विवाकः सत्यं ) श्रावयेत्। (एवं सत्यं श्रावयेत्)—ये पातककृतांलोकाः तथा महापातकिनां ये लोकाः, अग्निदानां च ये लोकाः, ये च स्त्रीबालघातिनाम् लोकाः ( सन्ति), स तान् सर्वान् अवाप्नोति यः अनृतं साक्ष्यं वदेत्। त्वया यत्किञ्चित् सुकृतं जन्मान्तरशतैः कृतम् तत्सर्वं तस्य जानीहि यं मृषा ( मिथ्याभाषणेन ) त्वंपराजयसे।

Beng—প্রাড়বিবাক বাদিপ্রতিবাদিসমীপাগত সাক্ষিগণকে এই শপথ করাইবেন—"পাপকারিব্যক্তিগণ দেহান্তে যে নরকলোক প্রাপ্ত হয়, ব্রহ্মহত্যাদি মহাপাপকারিগণ যে নরকে যায়, অগ্নিদ্বারা পরহত্যাকারীর যে নরক হয়; স্ত্রীবালক হত্যাকারীর যে গতি হয়—সে সবই, মিথ্যাবাদী সাক্ষী প্রাপ্ত হইবে। অধিকন্তু হে সাক্ষিন্, তুমি মিথ্যাভাষণ দ্বারা যাকে পরাজিত করিবে, সে তোমার শতজন্মের যা কিছু সুকৃতি আছে তাহা পাইবে।"

Eng—The judge shall make the witnesses swear thus come before the plaintiff and the defendant—"the miserable regions alloted for the sinful, for the killer of Brahmans etc, for the murderers by fire, for the slaughterers of women and the boys will be reserved for the witnesses giving false evidences ; moreover "as witness, all your good merits earned in your prior hundreds of births will be his whom you will here defeat by false evidences.

Mita—साक्षिश्रावणमाह—अर्थिप्रत्यर्थिसन्निधौ साक्षिणः समवेताम् ("नासमवेताः पृष्ठाः प्रब्रूयुः" इति गौतमवचनात्) वक्ष्यमाणं श्रावयेत्। [तत्रापि कात्यायनेन विशेषो दर्शितः—"सभान्तः साक्षिणः सर्वानर्थिप्रत्यर्थिसन्निधौ। प्राड्विवाको नियुञ्जीत विधिना अनेन सान्त्वयन्॥ देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान्। उदङ्मुखान् प्राङ्मुखान् पूर्वाह्णे वै शुचिः शुचीन्"॥ "आहूय साक्षिणः पृच्छेत् नियम्य शपथैर्भृशम्। समस्तान् विदिताचारान् विज्ञातार्थान् पृथक् पृथक्"॥ तथा ब्राह्मणादिषु श्रावणे मनुना नियमो दर्शितः—"सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः। गोबीजकाञ्चनैः वैश्यं शूद्रं सर्वैस्तु पातकैः" इति—(mode of swearing for different वर्ण)। ब्राह्मणमन्यथा ब्रुवन्तं सत्यं ते नश्यतीति शापयेत्। क्षत्रियं वाहनायुधानि तव विफलानि इति, गोबीजकाञ्चनादीनि तव विफलानि भविष्यन्ति इति वैश्यम्। शूद्रमन्यथा ब्रुवन्तं—तव सर्वाणि पातकानि भविष्यन्ति इति शापयेत्। अत्र चापवादस्तेनैव दर्शितः—"गोरक्षकान् वाणिजिकांस्तथा। कारुकुशीलवान्। प्रेष्यान् वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्" इति। (विप्रग्रहणं क्षत्रिय वैश्ययोरुप-लक्षणम्)। कुशीलवाः गायकाः। प्रतिवादिना साक्षिदूषणे दत्ते प्रत्यक्षयोग्यदूषणेषु वाल्यादिषु तथैव निर्णयः। अयोग्येषु तु तद्वचनात् लोकतश्च निर्णयो न साक्ष्यन्तरेण इति नानवस्था। यदि साक्षिदोषमुद्भाव्य साधयितुं न शक्नोति प्रतिवादी तदासौ दोषानुसारेण दण्ड्यः। अथ साधयति, तदा न साक्षिणः। यथाह—"असाधयन् दमं दाप्यः दूषणं साक्षिणां स्फुटम्। भाविते साक्षिणो वर्ज्याः साक्षिधर्मनिराकृताः इति। उद्दिष्टेषु च सर्वेषु साक्षिषु दुष्टेषु अर्थी यदा क्रियान्तरनिरपेक्षस्तदा पराजितो भवति।" जितः स विनयं दाप्यः शास्त्रदृष्टेन कर्मणा। यदि वादी निराकाङ्क्षः साक्षिसत्ये व्यवस्थितः इति स्मरणात्। साकाङ्क्षश्चेत् क्रियान्तर-मवलम्बेत इत्यभिप्रायः]॥

कथं श्रावयेत् इत्यत आह—"पातकोपपातकमहापातककारिणाम् अग्निदानां स्त्रीबालघातिनाञ्च ये लोकास्तान् सर्वानसौ अवाप्नोति, यः साक्ष्यमनृतं वदति



तथा जन्मान्तरशतैर्यत् सुकृतं कृतं, तत्सर्वं तस्य भवति, यस्ते असृतवचनेन पराजितो भवति"—इति श्रावयेत् इति सम्बन्धः। एतच्च शूद्रविषयं द्रष्टव्यम्। "शूद्रं सर्वैस्तु पातकैः"—इतिशूद्रे सर्वपातकश्रावणस्यविहितत्वात्। गोरक्षकादि द्विजाति विषयश्च। "गोरक्षकान् वाणिजिकान्" इत्युक्तत्वात्॥ अन्यानेकजन्मार्जित सुकृतसंक्रमणस्य महापातकादि फलप्राप्तेश्च अनृतवचनमात्रेण अनुपपत्तेः। साक्षिसंत्रासार्थमिदमुच्यते। यथाह नारदः—"पुराणैर्धर्मवचनैः सत्यमाहात्म्य-कीर्त्तनैः। अनृतस्यापवादैश्च भृशमुत्रासयेदिमान्॥ ७३-७५॥

## CHARCHA

1. वादिप्रतिवादि &c—वादिप्रतिवादिनोः समीपगान् (ड प्रत्ययः)। Qual. साक्षिणः।

2. पातककृताम्—The base is पातककृत् (with क्विप्)॥ महापातक+इनि मत्वर्थे=महापातकिन्। तेषाम्॥ अग्निं ददाति इति अग्निदः (with क) तेषाम्॥ स्त्रीबालघातिन् (with णिनि)—तेषाम्।

3. जन्मान्तर &c—अन्यत्‌जन्म इति जन्मान्तरम्, मयूरव्यंसकादित्वात्-सिद्धम् (नित्यसमास)। जन्मान्तराणां शतानि। तैः। करणे ३या।

4. पराजयसे—परा+जि+लट्से। "विपराभ्यां जेः" इत्यात्मनेपदम्। Nom. त्वम् understood.

96. Punishment in case of a साक्षिण् not giving evidence after swearing.

अब्रुवन् हि नरः साक्ष्यमृणं सदशबन्धकम्।
राज्ञा सर्वं प्रदाप्यः स्यात् षट्चत्वारिंशकेऽहनि॥ ७६॥

Prose—नरः साक्ष्यमब्रुवन् (सन्) षट्चत्वारिंशकेहनि प्राप्ते सति राज्ञा सदशबन्धकम् (दशमांशसहितं) सर्वम् ऋणं प्रदाप्यः स्यात्।

Beng—শপথ করিবার পর সাক্ষী যদি ঋণ বিষয়ে সাক্ষ্য না দেয় এবং কিছু না বলে, তবে রাজা সুদসহ সমগ্র ঋণ তা দ্বারা ধনীকে দেওয়াইবেন। এবং শপথবচনানুসারে দণ্ড স্বরূপ নিজেও মূল ঋণের দশমাংশ গ্রহণ করিবেন। ছয়চল্লিশ দিনের দিন প্রাপ্ত (উপস্থিত) হইলে রাজা এই ব্যবস্থা করিবেন।

Eng, If after swearing, a witness does not give any evidence about (a loan matter), then the king should order payment by him of the entire loan with interest to the creditor, and as punishment he the king should himself take one tenth of the original loan ; this will come in force on the forty-sixth day. (See Mitakshara).

Mita—यदा तु श्राविताः साक्षिणः कथंचिन्न ब्रुयुः, तदा किंकर्त्तव्यमित्याह — "यः साक्ष्यमङ्गीकृत्य श्रावितः सन् कथश्चिन्नवदति। स राज्ञा सर्वं सवृद्धिकमृणं धनिने दाप्यः"। "सदशवन्धकम्" [दशशब्दोत्र दशमपरः]—दशमांशसहितम्। दशमांशश्च राज्ञो भवति—"राज्ञा अधमर्णिको दाप्यः साधितात् दशमं शतम्" इत्युक्तत्वात्। एतच्च "षट्चत्वारिंशेके अहनि प्राप्ते त्र" वेदितव्यम्। ततः अर्वाक् वदन्नदाप्य इदं च व्याध्याद्युपप्लवरहितस्य। यथाह मनुः—"त्रिपक्षादब्रुवन् वाक्यमृणादिषु नरोगदः। तदृणं प्राप्नुयात् सर्वं दशवन्धं च सर्वशः" इति। "अगद" इति राजदैवोपप्लवविरहोपलक्षणम्॥ ७६॥

## CHARCHA

1. सर्वम् ऋणम्—Refers to original ऋण with Interest. construe – साक्षग्रम् अब्रुवन् नरः राज्ञा सर्वम् ऋणं दाप्यः।

2. सदशवन्धकम्—दशन् here means दशम। "क्वचित् संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वमिष्यते"। then again दशम is दशमांश। दशमांशेन



सहवर्त्तते सदश or सदशमः। वन्ध is मूल ऋणवन्ध। सदशः वन्धः यस्मिन्, बहु। समासान्त कप्। Refers to ऋणम्॥

3. षट्चत्वारिंशके अहनि (प्राप्ते)=षट् च चत्वारिंशच्च, षटचत्वारिंशत्। ततः पूरणे डटि सति षटचत्वारिंश i. e, the 46th day. ततः कन् स्वार्थे Qual. अहनि॥

77. Punishment in case of one not giving evidence though aware of facts.

न ददाति हि यः साक्ष्यं जानन्नपि नराधमः।
स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि॥ ৭৭॥

Prose—यः नराधमः जानन्नपि साक्ष्यं न ददाति हि, स कूटसाक्षिणां (अनृतदुष्टसाक्षिणां) पापैः तुल्यः। दण्डेन च तुल्यः (तुल्यव्यवहारयुक्तः) स्यात्। (तुल्यदण्डयुक्तश्च स्यात्)।

Beng—যে সাক্ষী ঘটনা জানিয়াও নরাধমের মত সাক্ষ্য না দেয় সে কূটসাক্ষীদের তুল্য পাপী হয়, এবং তাদের তুল্য যোগ্য দণ্ড পাইবে।

Eng. A witness who out of inhumimty does not give evidence even after knowing all real facts, gets sin equal to wily witnesses, and is to be punished similarly (i. e, equally or befittingly).

Mita—यस्तु जानन्नपि साक्ष्यमेव नाङ्गीकरोति दौरात्म्यात् तं प्रत्याह— "यः पुनर्नराधमः" "विप्रतिपन्नमर्थं विशेषतो "जानन्नपि साक्ष्यं न ददाति" "स कूटसाक्षिणां तुल्यः पापैः दण्डेन च। कूटसाक्षिणाञ्च दण्डं वक्ष्यति। कूटसाक्षिणश्च दण्डयित्वा पुनर्व्यवहारः प्रवर्त्तनीयः। क्वचिदपि वा, कौटसाक्ष्ये

विहिते निवर्त्तनीयः। यथाह मनुः—"यस्मिन् यस्मिन् विवादे तु कौटसाक्ष्यं कृतं भवेत्। तत्कार्य्यं निवर्त्तत कृतं चाप्यकृतं भवेत्" ॥ ७७ ॥

78. Procedure where witnesses give conflicting evidences.

द्वैधे वहुनां वचनं समेषु गुणिनां तथा ।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तमाः ॥ ७८ ॥

Prose—(साक्षिणां) द्वैधे बहूनां वचनं ( ग्राह्यम् ), तथा समेषु ( समसंख्यकेषु ) द्वैधे गुणिनां वचनं ग्राह्यम्। गुणिद्वैधेतु ये गुणवत्तमाः ( भवन्ति ) तेषां वचनं ग्राह्यम् ॥

Beng—সাক্ষিগণের মধ্যে পরস্পর বিরোধোক্তি হইলে, বহুলোক যাহা বলিবে তাহাই গ্রাহ্য হইবে। সমসংখ্যক সাক্ষী বিরুদ্ধবাদী হইলে গুণিদের কথাই গ্রাহ্য হইবে। যদি বা উভয়পক্ষেই গুণিগণের মধ্যে বিরুদ্ধোক্তি হয়, তবে যারা বেদাধ্যয়নাদিহেতু অতীব গুণযুক্ত বিশ্বাসযোগ্য তাহাদের বচন বা সাক্ষ্যই গ্রাহ্য হইবে।

Eng. If there be conflicting evidences among the witnesses, then the evidence of many should be taken into account ; if however conflict is seen among equal number of witnesses then the evidence of more meritorious ones should be recognised ; if again conflict be among meritorious on both sides, then the evidence of the most learned and the most meritorious reliable ones should be held valid.

Mita. साक्षिविप्रतिपत्तौ कथं निर्णय इत्यत आह—"साक्षिणां द्वैधे" विप्रतिपत्तौ बहूनां वचनं ग्राह्यम्। समेषु "समसंख्यकेषु" द्वैधे ये गुणिनस्तेषां



वचनं प्रमाणम्। यदा "पुनर्गुणिनां विप्रतिपत्ति"स्तदा ये "गुणवत्तमाः" श्रुताध्ययनतदर्थानुष्ठान-धनपुत्रादिगुणसम्पन्नाः "तेषां वचनं ग्राह्यम्"। [ यत्र तु गुणिनः कतिपये, इतरे च वहवस्तत्रापि गुणिनामेव वचनं ग्राह्यम्। "उभयानुमतः साक्षी भवत्येकोपिधर्मवित्" इति गुणातिशयस्य मुख्यत्वात्। यत्तु "भेदात् असाक्षिणः" इत्युक्तं तत् सर्वसाम्येन अगृह्यमाणविशेषविषयम् ] ॥ ७८ ॥

CHARCHA

1. द्वैधे—द्वयोःस्थानयोः स्थितिः इति द्वि+धमुञ=द्वैधम् (a मान्त अव्यय)। then द्वैधमेव इति द्वैधम्+ड स्वार्थे=द्वैधम् ( a neuter अकारान्त base ) by the Varttika "धमुञन्तात् स्वार्थे डदर्शनम्"। This means "division into two". भावे सप्तमी। द्वैधे सति इत्यर्थः। See also our द्वैधीभवति in Sak II. 17.

79. Witnesses supporting the statement in the plaint will bring victory to the party.

यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।
अन्यथावादिनो यस्य ध्रुव स्तस्य पराजयः ॥ ७९ ॥

Prose—यस्य वादिनः प्रतिज्ञां ( व्यवहारस्थितां प्रतिज्ञां ) साक्षिणः सत्यां ऊचुः, स जयी भवेत्, यस्य ( वादिनः ) प्रतिज्ञां अन्यथा ( मिथ्या एतत् इति ) साक्षिणः वदन्ति तस्य पराजयः ध्रुवः ( निश्चितः स्यात् )।

Beng—যে বাদীর ব্যবহারে প্রতিজ্ঞাত বিষয় সাক্ষিরা সত্য বলিয়া প্রতিপাদন করে, সে বিবাদে জয়ী হয়। আর যে বাদীর প্রতিজ্ঞাত বিষয় সাক্ষিরা মিথ্যা বলিয়া বলে, তাহার পরাজয় সুনিশ্চিত।

Eng. The plaintiff whose statement in the plaint is declared as true by witnesses comes out victorious ; if but

the same is declared as false by witnesses, then he is defeated in the suit.

[ N. B. The king is to depend on some other evidences where witnesses forget facts and cant say or support its positive or negative side ( भावपक्ष or अभावपक्ष ) । Repeated cross-examinations in such cases should not be made—See Mitakshara ].

Mita—"यस्य वादिनः प्रतिज्ञां" द्रव्यजातिसंख्यादिविशिष्ठां "साक्षिणः सत्यां वदन्ति" सत्यमेवं जानीमो वयमिति, "सजयी भवेत्"। "यस्य पुनर्वादिनः प्रतिज्ञाम अन्यथा" वैपरीत्येन "मिथ्यैतत इति" वदन्ति, तस्य पराजयो ध्रुवःनिश्चितः। [ यत्र तु प्रतिज्ञातार्थस्य विस्मरणादिना भावाभावौ साक्षिणः न प्रतिपादयति तत्र प्रमाणान्तरेण निर्णयःकार्य्यः। न च राज्ञा साक्षिणः पुनः पुनः प्रष्टव्याः। स्वभावोक्तमेव बचनं ग्राह्यम् ( natural open statement only is to be accepted) । यथाह—"स्वभावोक्तं वचस्तेषां ग्राह्यं यद्दोषवर्जितम्। उक्ते तु साक्षिणः राज्ञा न प्रष्टव्याः पुनः पुनः" इति ] ॥ ७९ ॥

CHARCHA—For वादिन् see हारिन् in Sak I

80. कूटसाक्षी are those who give deliberate false evidences.

> उक्तेपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तमाः।
> द्विगुणा वा अन्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ॥ ८० ॥

Prose—साक्षिभिः साक्ष्ये उक्ते पि, यद्यन्ये गुणवत्तमाः द्विगुणा वा साक्षिणः अन्यथा ब्रूयुः, तदा पूर्वसाक्षिणः कूटाः ( मिथ्यावादिनः ) भवेयुः।

Beng প্রতিজ্ঞাত বিষয়ে অন্যথাবাদী সাক্ষীরা সাক্ষ্য দিবার পর যদি অন্য গুণবত্তম বা অন্য দ্বিগুণ সাক্ষী পূর্বসাক্ষীরা যাহা বলিয়াছে,



তার বিপরীত কথা বলেন ( অর্থাৎ প্রতিজ্ঞাত বিষয়ের অনুকূলে সাক্ষ্য দেন) তবে পূর্বসাক্ষিগণ কূটসাক্ষী বা মিথ্যাসাক্ষী বলিয়া অভিহিত হইবেন।

Eng. (In the matter of পরাজয় ) If after evidences of witnesses are over, some other more reliable virtuous or many a one witnesses give evidence against them and favourable to original statement of facts, then the first or prior witnesses are called "Kuta Sakshin" or teller of false evidence (See also Mitakshara). (All this is to be before final disposal of the suit ]

Mita—"अन्यथा वादिनो यस्य ध्रुवस्तस्य पराजयः" इत्यस्यापवादमाह—पूर्वोक्तलक्षणैः साक्षिभिः साक्ष्ये स्वाभिप्राये प्रतिज्ञातार्थवैपरीत्येन अभिहिते "यद्यन्ये" गुणवत्तमाः द्विगुणा वा अन्यथा" प्रतिज्ञातार्थानुगुण्येन साक्ष्यं ब्रुयुस्तदा पूर्वे साक्षिणः कूटा" मिथ्यावादिनः भवेयुः॥ नन्वेतदनुपपन्नम्, अर्थि-प्रत्यर्थि-सभ्यासभापतिभिः परीक्षितैः प्रमाणभूतैः साक्षिभिः निगदिते प्रमाणान्तरान्वेषणे अनवस्थादोषप्रसङ्गात्—"निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत्। लिखितः साक्षिणोवापि पूर्वमावेदितं न चेत्"। "यथा पक्वेषु धान्येषु निष्फलाः प्रावृषो गुणाः। निर्णिक्तव्यवहाराणां प्रमाणसफलं तथा" इति नारदवचनाच्च। [some say—This is not proper ; if further साक्षिन् is called in a matter settled by साक्षिण्, then there will be no end of witnesses—Narada smriti supports this ], उच्यते (the answer then is)—यदा अर्थी प्रतिज्ञातार्थस्य अन्तरात्मसाक्षित्वेन आविष्कृतदोषाणामपि साक्षिणां बचनम् अर्थाविसंवादित्वेन अप्रमाणं मन्यमानः साक्षिष्वपि दोषं कल्पयति तदा प्रमाणान्तरान्वेषणं केन वार्य्यते। उक्तं च—यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः। यथा चक्षुरादि-

करणदोषनध्यवसाये अपि अर्थविसंवादात् जनितस्य ज्ञानस्य अप्रामाण्येन करणदोषाकल्पना तथा इहापि। साक्षिपरीक्षातिरेकेण वाक्यपरीक्षोपदेशाच्च।" साक्षिभिर्भाषितं वाक्यं सह सभ्यैः परीक्षयेत्॥ [This is not so; witnesses directly related to facts may sometime make contradictory statements due to वचनदोष or being pressed therein, then some other evidences are to be searched for, as चक्षु etc may give impressions contrary to facts due to करणदोष; so वाक्यपरीक्षा of साक्षिणः is enjoined and is necessary in cases.—]

कात्यायनेनाप्युक्तम्—"यदा शुद्धा क्रिया न्यायात्तदा वाक्यशोधनम्। शुद्धाच्च वाक्याद्यः शुद्धः स शुद्धोर्थ इतिस्थितिः"। क्रिया=साक्षिलक्षणा, 'नार्थसम्बन्धिनो नाप्ताः" इति न्यायात् यदा शुद्धा तदा "तद्वाक्य शोधनं"=साक्षिवाक्यशोधनं कर्त्तव्यम्। वाक्यशुद्धिश्च सत्यार्थप्रतिपादनेन, "सत्येन शुध्येत वाक्यम्" इति स्मरणात्। एवं शुद्धायाः क्रियायाः शुद्धवाक्याच्च यः शुद्धोऽवगतः अर्थं स शुद्धस्तथाभूत इति स्थितिः ईदृशी मर्यादा न्यायविदाम्। कारणदोष बाधकप्रत्ययाभावे सत्यवितथ एवार्थ इत्यर्थः॥ ननु स्वयमर्थिना प्रमाणीकृतान् साक्षिणोतिक्रम्य कथं क्रियान्तरं प्रमाणीक्रियते? नैषदोषः। यतः—"क्रियां बलवतींमुक्त्वा दुर्बलां योवलम्बते। स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात् क्रियाम्" इति कात्यायनेन जयावधावणोत्तरकालं क्रियान्तरपरिग्रहनिषेधात् जयावधारणात् प्राक् क्रियान्तरपरिग्रहोदर्शितः॥ नारदेनापि—"निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत्" इति वदता जयावधारणोत्तरकालमेव प्रमाणान्तरं निषिद्धं न प्रागपि। तस्मादुक्ते पि साक्षिभिः साध्येऽ अपरितुष्यता क्रियान्तर-मङ्गीकर्त्तव्यम् इति स्थितम्॥ एवं स्थिते यद्यभिहितवचनेभ्यः साक्षिभ्यः गुणवत्तमा द्विगुणा वा पूर्वनिदिष्टा असन्निहिताः साक्षिणः सन्ति तदा त एव प्रमाणीकर्त्तव्याः—"स्वभावेनैव यदब्रूयुस्तद्ग्राह्यं व्यवहारिकम्" इत्यस्य सर्वव्यवहारशेषत्वात् 'निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत्। लिखितं





साक्षिणो वापि पूर्वमावेदितं न चेत्" इति नारदवचनाच्च। पूर्वनिर्दिष्टानाम-सम्भवे तु अनिर्दिष्टा अपि तथाविधाः साक्षिण एव ग्राह्या न दिव्यम् "सम्भवे साक्षिणां प्राज्ञो वर्जयेद् दैविकीं क्रियाम्" इति स्मरणात्। तेषामभावे दिव्यं प्रमाणीकर्त्तव्यम्। अतःपरमपरितुष्यता अपऽर्थिना न प्रमाणान्तरमन्वेषणीयम् अवचनात् इति परिसमापनीयो व्यवहारः (thus will end a व्यवहार or a case having or requiring witnesses)॥ यत्र तु प्रत्यर्थिनः स्वप्रत्ययविसंवादित्वेन साक्षिवचनस्याप्रामाण्यं मन्यमानस्य साक्षिषु दोषारोपेण अपरितोषस्तत्र प्रत्यर्थिनः क्रियोपन्यासावसराभावात् सप्ताहावधिक-दैविकराजिकव्यसनोद्भवेन साक्षिपरीक्षणं कर्त्तव्यम्। तत्रच दोषावधारणे साक्षिणो विवादास्पदीभूतमृणं दाप्याः, सारानुसारेण दण्डनीयाश्च। अथदोषानव धारणं तदा प्रत्यर्थिना तावता सन्तोष्टव्यम्, यथाह मनुः—'यस्य दृश्येत, सप्ताहादुक्तवाक्यस्यसाक्षिणः; रोगोग्निर्ज्ञातिमरणं ऋणं दाप्या दमंचसः" इति। एतच्च "यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत्" इत्यस्य अपरितुष्यत्-प्रत्यर्थिविषये अपवादोद्रष्टव्यः॥

केचित्तु "उक्ते पि साक्षिभिः साध्ये" इत्येतद्वचनम् अर्थिना निर्दिष्टेषु साक्षिषु अर्थानुकूलमभिहितवत्सु यदि प्रत्यर्थी गुणवत्तमान् द्विगुणान् वा अन्यान् साक्षिणः पूर्वोक्तविपरीतं संवादयति तदापूर्ववादिनः साक्षिणः कूटी इति व्याचक्षते—तदसत् प्रत्यर्थिनः क्रियानुपपत्तेः—[ this is a bad expl. for क्रिया of प्रत्यर्थिन् here is unreasonable ]। तथा हि अर्थीनाम साध्यसार्थस्य निर्देष्टा, तत्प्रतिपक्षस्तद्-भाववादी प्रत्यर्थी [ अर्थी is the plaintiff, the stater of a matter to be proved, and प्रत्यर्थी (defendant) is the antiparty who is to say and prove nonexistence or falsehood of plaintiff's statement ]—तत्र अभावस्य भावसिद्धि-सापेक्षसिद्धित्वात् भावस्य च अभावसिद्धिनिरपेक्षसिद्धित्वात् भावस्यैव साध्यत्वं युक्तम्, अभावस्य स्वरूपेण साध्यादिप्रमेयत्वाभावात्। अतश्च अर्थिन एव क्रियायुक्ता [ अभाव is dependent on भाव, भाव is independent thereof, so

भाव is to be proved ; and so अभाव cannot be प्रमेय by साक्ष्य etc, so क्रिया of अर्थी only is proper ]। अपिचोत्तरानुसारेण सर्वत्रैव क्रिया नियता स्मर्य्यते—"प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियाम्। मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्"। न चैकस्मिन् व्यवहारेद्वयोः क्रिया-'नैकस्मिन् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः" इति स्मरणात्। तस्मात् प्रतिवादिनः साक्षिणो गुणवत्तमा द्विगुणा वान्यथा ब्रूयुरित्यनुपपन्नम् ॥ अथमतम्—यत्रद्वावपि भावप्रतिज्ञवादिनौ 'मदीयमिदं दायादप्राप्तं मदीयमिदं दायादप्राप्तम्' इति प्रतिज्ञावादिनोः पूर्वापरकालविभागानाकलितमेव वदतस्तत्र द्वयोः साक्षिषु सत्सुकस्य साक्षिणो ग्राह्या इत्याकाङ्क्षायामाह—"द्वयोर्विवदतोरर्थे द्वयोः सत्सुचसाक्षिषु, पूर्वपक्षोभवेद्यस्य भवेयुस्तस्य साक्षिणः इति वचनेन यः पूर्वं निवेदयति, तस्य साक्षिणोग्राह्या इतिस्थिते तस्यापवादः— "उक्तेपि साक्षिभिः साक्ष्ये" इति। अतश्चपूर्वोत्तरयोर्वादिनोः समसंख्यकेषु समगुनेषु साक्षिषु सत्सु पूर्ववादिन एव साक्षिणः प्रष्टव्याः। यदातुउत्तर वादिनः साक्षिणो गुणवत्तमा द्विगुणा वा तदा प्रतिवादिनः साक्षिणः प्रष्टव्याः॥ एवं च नाभावस्व साध्यता, उभयोरपि भाववादित्वात्, चतुर्विधोत्तरविलक्षणत्वाच्च प्रकृतोदाहरणे न क्रियाव्यवस्था। 'एकस्मिन् व्यवहारे तु यथैकस्यार्थिनः क्रियाद्वयं परमते तथा वादिप्रतिवादिनोः क्रियाद्वयेपि अविरोधः इति। तदुभ्याचार्य्यौ नानुमन्यते—"उक्तेपिसाक्षिभिः साक्ष्ये" इत्यपिशब्दात् अर्थात् प्रकरणाद्वा अस्यार्थस्य अनवगमात् इत्यलं प्रसङ्गेन ॥ ८० ॥

81. The punishment of कूटकारी and कूटसाक्षी।

पृथक् पृथक्दण्डनोयाः कूटकृत्साक्षिणस्तथा।
विवादाद्द्विगुणं दण्डं विवास्यो ब्राह्मणःस्मृतः ॥ ८१ ॥

Prose—कूटकृत् ( यः धनदानादिना कूटान् साक्षिणः करोति स कूटकृत् ) तथा ( तादृशाः ) साक्षिणः ( कूटसाक्षिणः ) विवादात् द्विगुणं दण्डं पृथक् पृथक् दण्डनीयाः। ब्राह्मणस्तु विवास्यः ( राष्ट्रात् विवास्यः ) स्मृतः ( न तु दण्डनीयः )।



Beng. যিনি ধনাদি দ্বারা মিথ্যাসাক্ষী খাড়া করেন তিনি কূটকৃৎ কূটকৃৎবাদী এবং কূটসাক্ষিগণ প্রত্যেকে, বিবাদে পরাজয় হইলে যে পরিমাণ দণ্ড বিহিত আছে তার দ্বিগুণ দণ্ডে দণ্ডিত হইবেন। ব্রাহ্মণ কূটকৃৎ বা কুটসাক্ষী হইলে রাষ্ট্র হইতে নির্বাসিত হইবে।

Eng. One maintaining or procuring false witnesses by money is a "Kutakrit" (malpracticer), such men and false witnesses—each of these should be fined amounting to twice money involved in the defeat in a case ; such a wrong doer Brahmin however is to be turned out of the kingdom.

Mita. कूटसाक्षिणो दर्शितास्तेषां दण्डमाह—यो धनदानादिना कूटान् साक्षिणः करोति स 'कूटकृत्"। साकिणश्च ये "तथा कूटास्ते विवादात् नाम" विवादपराजयात् पराजये यो दण्डस्तत्र तत्रोक्तस्य "दण्डं द्विगुणं पृथक् पृथक्" एकैकशो दण्डनीयाः। "ब्राह्मणस्तु ( तादृशः ) विवास्यः" राष्ट्रात् निर्वास्यः न दण्डनीयः॥ एतच्च लोभादिकारणविशेपापरिज्ञाने अनभ्यासे च वेदितव्यम्। लोभादिकारणविशेपपरिज्ञाने अभ्यासे च मनुनोक्तम्—"लोभात् सहस्रं दण्ड्यः स्यात् मोहात् पूर्वं तु साहसम्। भयाद्वौ मध्यमौ दण्डो मैत्र्यात् पूर्वं चतुर्गुणम् कामाद्दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम्। अज्ञानात् द्वे शते पूर्णे वालिश्यात् शतमेव च" इति। तत्रलोभोर्थलिप्सा, मोहो विपर्य्ययज्ञानम्। भयं सन्त्रासः, मैत्री स्नेहातिशयः, कामः स्त्रीव्यतिकराभिलापः, क्रोधोमर्षः। अज्ञानमस्फुटज्ञानम्, वालिश्य ज्ञानानुत्पादः। सहस्रादिषु ताम्रिका पण गृह्यन्ते। यथा मनुः—"कौट-साक्ष्यं तु कुर्वानान् त्रीन्वर्णान् धार्मिको नृपः। प्रवासयेत् दण्डयित्वा, ब्राह्मणं विवासयेत्"। एतच्च अभ्यासयिपयम्, "कुर्वानान्" इति वर्त्तमाननिर्देशात्। त्रीन् वर्णान् क्षत्रियादोन् पूर्वोक्तं दण्डं दण्डयित्वा प्रवासयेत् मारयेत्। [ अर्थशास्त्रे प्रवासशब्दस्य मारणे प्रयोगात्। अस्य च अर्थशास्त्ररूपत्वात्। तत्रापि प्रवासनमोष्टछेदनं जिह्वाछेदनं ाणवियोजनञ्च कौटसाक्ष्ययिषयानुसारेण द्रष्टव्यम् ]।

ब्राह्मणं तु दण्डयित्वा विवासयेत् स्वराष्ट्रात् निष्काशयेत्। यद्वा—वाससो विगतो विवासाः। विवासस करोति इति णिचिकृते ("णाविष्टवत् प्रातिपदिकात्" इति टिलोपे रूपम्) विवासयेत्, नग्नीकुर्य्यादित्यर्थः। अथवा—वसत्यस्मिन् इति वासोगृहम्। विवासयेत् भग्नगृहं कुर्य्यादित्यर्थः। ब्राह्मणस्यापि लोभादिकारण-विशेषापरिज्ञाने अनभ्यासे च तत्र तत्र उक्तो दण्ड एव। अभ्यासे अर्थदण्डो विवासनञ्च। तत्रापि जातिद्रव्यानुबन्धाद्यपेक्षया विवासनं नग्नीकरणं गृहभङ्गो देशात् निर्वासनं च इति व्यवस्था द्रष्टव्या। लोभादिकारणविशेषापरिज्ञाने अनभ्यासे चाल्पविषये कौटसाक्ष्ये ब्राह्मणस्यापि क्षत्रियादिवत् अर्थदण्ड एव। महाविषये तु देशात् निर्वासनमेव। अत्राप्यभ्यासे सर्वेषामेव मनूक्तं द्रष्टव्यम्। न च ब्राह्मणस्यार्थोदण्डो नास्ति इति मन्तव्यम्। अर्थदण्डाभावे शारीरदण्डे च निषिद्धे स्वल्पेप्यपराधे नग्नीकरणगृहभङ्गाङ्ककरणविप्रवासनं दण्डाभावो वा प्रसज्येत "चतुर्णामपिवर्णानां प्रायश्चित्तमकुर्वताम्। शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत्" इति स्मरणाच्च। तथा—सहस्रं ब्राह्मणो दण्डयः गुप्तां विप्रां बलाद्व्रजन्" इति मनुस्मरणात्। यत्तु शङ्खवचनम्—"त्रयाणां वर्णानां धनापहारवधवन्धक्रिया विवासनाङ्ककरणं ब्राह्मणस्य" इति, तत्रधनापहार सर्वस्वापहारो विवक्षितः वधसाहचर्यात्। "शारीरस्त्ववरोधादि जीवितान्तः प्रकीर्त्तितः काकिण्यादिस्त्वर्थदण्डः [ विंशतकपर्दिका एका काकिणी ] सर्वस्वान्त-स्तथैव च" इति नारदे वधसर्वस्वहरणयोः सहपाठात्। यदप्युक्तम्—राष्ट्रादेनं वहिः कुर्य्यात् समग्रधनमक्षतम्" इति तत्प्रथमकृतसाहसविषयम्, न सर्वं विषयम्। शारीरस्तु ब्राह्मणस्य न कदाचिद् भवति—"न जातु ब्राह्मणं हन्यात् सर्वपापेष्वपि स्थितम्" इति सामान्येन मनुस्मरणात्। तथा मनुः—"न ब्राह्मणवधाद् भूयानधर्मो विद्यते भुवि। तस्मादस्य वधं राजा मनसापि न चिन्तयेत्" इति ॥ ८१ ॥

CHARCHA

1. विवादात्—विवादास्पदीभूतात् दण्डात् ( अर्थादिदण्डात् )। अधिकारार्थक "द्विगुणम्" शब्दयोगे ५मी (see sl. 11 & 4 ante) i This root दण्ड is द्विकर्मक as राजा साक्षिणः द्विगुणं दण्डं दण्डयति ; this becomes in voicech—साक्षिणः राज्ञा द्विगुणं दण्डं दण्ड्या वा दण्डनीयाः ॥ construe—कूटकृत् राज्ञा दण्डं (अर्थादिदण्डं) दण्डनीयः and साक्षिणः राज्ञा दण्डं दण्डनीयाः, the अप्रधानकर्म as साक्षिण् is voiced here by "दुह्यादेरप्रधाने" ॥



2. विवास्यः—राष्ट्रात् वहिष्कार्यः। वि+वस+णिच्+यत् कर्मणि। Pred to ब्राह्मणः।

82. Punishment in denial of साक्ष्य after अङ्गीकार।

> यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः।
> स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत् ॥ ८२ ॥

Prose—यः (साक्षित्वमङ्गीकृत्य) साक्ष्यं श्रावितः सन् (निगदनकाले) तमोवृत्तः तत् साक्ष्यं अन्येभ्यः निह्नुते ("नाहं साक्षीभवामि" इति) स (पराजयविषये यः दण्डः तस्य) अष्टगुणं दण्डं दाप्यः। (ईदृशं) ब्राह्मणं तु बिबासयेत् (न तु दण्डयेत्)।

Beng. যে ব্যক্তি সাক্ষিত্ব অঙ্গীকার করিয়া পরে সাক্ষ্যবিষয়ক-শপথাদি শুনিয়াও, স্নেহবিদ্বেষাদিবশতঃ "আমি সাক্ষ্য দিব না বলিয়া" আত্মগোপন বা বিষয় গোপন করে, সে পরাজয়ের দণ্ডের অষ্টগুণদণ্ড দিবে। সে ব্যক্তি ব্রাহ্মণ হইলে তাকে রাজা নির্বাসিত করিবেন।

Eng. If one, after enrolling as a witness avoids evidence out of affection or grudge even on hearing modes or oath procedures therein, then he is to be punished with fine eight times as much as in case of defeat ; but such a Brahman is to be driven out of the kingdom (See Mita here and under 81 for meaning of बिबासन)।

Mita. जानतः साक्ष्यानङ्गीकारे ( विशेषम् ) आह—अपिच "यस्तु" साक्षित्वमङ्गीकृत्य अन्यैः साक्षिभिः सह "साक्ष्यं श्रावितः" सन् निगदनकाले "तमोवृतः" रागाद्याक्रान्तचित्तः तत्साक्ष्यम् अन्येभ्यः साक्षिभ्यः "निह्नुते"— "नाहमत्र साक्षीभवामि" इति, "स विवादपराजये यो दण्डस्तं दण्डम् अष्टगुणं दाप्यः"। "ब्राह्मणं" पुनरष्टगुणद्रव्यदण्डदानासमर्थं "विवासयेत्"। विवासनं नग्नीकरणगृहभङ्गदेशनिर्वासनलक्षणम् विषयानुसारेण द्रष्टव्यम्। इतरेषां तु अष्टगुणद्रव्यदण्डदानासम्भवे स्वजात्युचितकर्मकरणनिगड़बन्धन-कारागृहप्रवेशादि द्रष्टव्यम्। [ एतच्च पूर्वश्लोकेप्यनुसर्त्तव्यम्। यदा सर्वे साक्ष्यं निह्नवते तदा सर्वे समानदोषाः। यदा तु साक्ष्यमुक्त्वा पुनरन्यथावदन्ति तदानुबन्धाद्यापेक्षया ( दोषापेक्षया ) दण्ड्याः। यथाह कात्यायनः—"उक्त्वान्यथा ब्रुवाणाश्च दण्ड्याः स्युः वाक्छलान्विताः" इति। न चान्येनोक्ताः साक्षिणोऽन्येन रहस्यनुसर्त्तव्याः। यथाह नारदः—"न परेण समुद्दिष्टमुपेयात् साक्षिणं रहः। भेदयेन्नैव चान्येन हीयते एवं समाचरन्" इति ॥ ८२ ॥

## CHARCHA

1. अन्येभ्यः—construe—अन्येभ्यः साक्षिभ्यः तत् साक्ष्यं निह्नुते—withdraws his साक्ष्य from other witnesses or witness-list saying "नाहं साक्षीभवामि"। अपादाने ५मी by the Varttika "जुगुप्सा विराम प्रमादार्थानामुपसंख्यानम्" ॥ for gram in अष्टगुणं दाप्यः see ante. sl. 20 etc.

2. विवासयेत्—वि+वस+णिच् लिङ्यात। should drive out of the kingdom.

83. A witness may give false evidence, where otherwise capital punishment of a वर्णी is involved.

वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत्।
तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः ॥ ८३ ॥



Prose—यत्र हि वर्णिनां ( ब्राह्मणक्षत्रियवैश्यशूद्राणां वा ब्रह्मचारिणां ) वधः स्यात्, तत्र साक्षी अनृतं वदेत्। तत्पावनाय ( तत् अनृतवचनशोधनाय ) द्विजैः सारस्वतः चरुः निर्वाप्यः ( चरुपाकेन सारस्वतीम् इष्टिं निर्वापयेत्. कुर्य्यादित्यर्थः पापशोधनाय)।

Beng—সত্যবলিলে যদি ব্রাহ্মণ ক্ষত্রিযাদি চারিবর্ণের ( বা ব্রহ্মচারীর) বধসম্ভবনা থাকে, তবে সে স্থলে সাক্ষী মিথ্যাই বলিবে ( সত্য বলিবে না )। পরে মিথ্যজন্য পাপ হইতে আত্মশোধনের জন্য সরস্বতী দেবীর উদ্দেশে চরু পাক করিয়া ইষ্টি বা যজ্ঞ সম্পাদন করিবেন।

Eng. Where slaughter or killing ( or capital punishment) is involved of any one of the 4 castes or of a Brahmacharin, there a witness may utter falsehood or give false evidence ( or he may withdraw himself from evidences ); and to absolve himself of this sin of saying false evidence, he is to perform "Saraswata" sacrifice by cooking milkrice ( charu ). [ N. B. – By वर्णिवध, Mitakhara understands वध of any one of the 4 castes, whereas Manu by वर्णिवध means ब्रह्मचारी वध ; and वर्णिन् is a ब्रह्मचारी by the rule "वर्णाद ब्रह्मचारिणि"—See kirata I "सवर्णी विदितः समाययौ"। Hence मिथ्याकथन of a साक्षी is अनुमोदित here is case of प्राणदन्ड। This also implies to remain silent if possible (or अवचन ), or cessation from साक्ष्यदान if possible ; these being not possible or in any case if वध of अर्थी or प्रत्यर्थी is involved in either way, the साक्षी shall utter the truth ; and then shall do प्रायश्चित्त for abso-

lution of this sin; even remaining silent amounts to मिथ्यासाक्ष्यदान, so प्रायश्चित्त is necessery in any case. See Mita also ].

Mita—साक्षिणामवचनम् असत्यवचनञ्च सर्वत्र प्रतिषिद्धं तदपवादार्थमाह— "यत्र वर्णिनां" शूद्रविट्क्षत्रविप्राणां "सत्यवचनेन बधः सम्भाव्यते, तत्र साक्षी अनृतं वदेत "सत्यं न वदेत्"। [ अनेन च सत्यवचनप्रतिषेधेन साक्षिणः पूर्वप्रतिषिद्धमसत्यवचनम् अवचनं च अभ्यनुज्ञायते ; यत्र शङ्काभियोगादौ-सत्यवचनेवर्णिनोवधः, असत्यवचने न कस्यापिवधः तत्र अनृतबचनम अभ्युनुज्ञायते। यत्रतु सत्यवचने अर्थिप्रत्यर्थिनोरन्यतरस्यवधः, असत्यबचने चान्यतरस्यवधः, असत्यवचने चान्यतरस्यवधः—तत्र तूष्णीम्भावाभ्यनुज्ञा राजा यद्यनुमन्यते। अथ राजा कथमप्यकथने न मुञ्चति तदा भेदात् असाक्षित्वं कर्त्तव्यम्। तस्याप्यसम्भवे सत्यमेव वदितव्यम्। असत्यवचनेन वर्णिवधदोषोऽसत्यवचनदोषश्च। सत्यवचने तु वर्णिवधदीष एव, तत्र च यथाशास्त्रं प्रायश्चित्तं कर्त्तव्यम् ]।

तर्हि असत्यवचने तृष्णीम्भावे च शास्त्राभ्यनुज्ञानात् प्रत्यवायाभाव इत्यत आह—"तत्पावनाय" अनृतवचनावचननिमित्तप्रत्यवायपरिहाराय" सारस्वतश्चरुः द्विजैः ऐकैकशो निर्वाप्यः" कर्त्तव्यः। (सरस्वती देवता अस्य इति सारस्वतः)। (अनवस्त्रावितान्तरूष्मपक्वौदने चारुशब्दः प्रसिद्धः)॥ [इहायमभिसन्धिः— "साक्षिणामनृतवचनमवचनं च यन्निषिद्धं तदिहाभ्यनुज्ञातम्। "नानृतं वदेत्" "अब्रवन् ब्रुवन्वापि नरोभवति किल्विषी" इति सामान्येन अनृतवचनम् अवचनं च प्रतिषिद्धं, तदतिक्रमनिमित्तमिदं प्रायश्चित्तम्। [न च मन्तव्यम् साक्षिणामनृतवचनाभ्यनुज्ञानोपि साधारणानृतवचनावचनप्रतिषेधातिक्रमनिमित्तक-प्रत्यवायस्य तादवस्थ्यात् अभ्यनुज्ञानवचनमनर्थकम् इति। यतः साध्यनृत-वचनावचनयोः भूयान् प्रत्यवायः साधारणानृतवचनावचनयोरल्पीयान् इत्यर्थवत् अभ्यनुज्ञानवचनम्। यद्यपि भूयसः प्रत्यवायस्य निवृत्तत्रा आनुपङ्गिकस्य



अल्पीयसः प्रत्यवायस्य निवृत्तिरन्यत्र तथापीद अभ्यनुज्ञानवचनात् प्रायश्चित्त-विधानाच्च भूयसो निवृत्तत्रा अल्पीयान् अपि आनुपङ्गिकोपि प्रत्यवायोन निवर्त्तते इति गम्यते। एतदेवान्यत्र प्रश्नेपु वर्णिबधाशङ्कायां पान्थादीनाम् अनृतबचनाबचनमभ्यनुज्ञानं वेदितव्यम्। न च तत्र प्रायश्चित्तमस्ति, प्रतिषेधान्तराभावात्। निमित्तान्तरेण कालान्तरे अर्थतत्त्वावगमेपि साक्षिणामन्येषां च दण्डाभावोऽस्मादेव वचनादवगम्यते ॥ ८३ ॥ इति साक्षिप्रकरणम् ॥

## CHARCHA

1. वर्णिनाम्—May mean both ब्राह्मणक्षत्रियादि चतुर्वर्ण (as in मिताक्षरा), वा ब्रह्मचारी as in Manu VIII.

2. तत्पावनाय—पू+णिच्+ल्युठ=पावनम् purifying विशोधनम्। तस्य अनृतबचनस्य पावनम्। ६तत—। तादर्थ्ये ४र्थी।

3. सारस्वतः—सरस्वती देवता अस्य इति सारस्वतः with अण् in the sense "सास्य देवता"। Qual. चरुः। चरु is परमान्न (See Mita)। It is here to be prepared specially for सारस्वती इष्टि। So सारस्वतचरु here refers to सारस्वती इष्टि।

## अथलेख्यप्रकरणम् ( Section on documents=नथिपत्रादि )

84-85. There should be documents with witnesses etc. in registration of money etc.

यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम्।
लेख्यं तु साक्षिमत्कार्य्यं तस्मिन् धनिकपूर्वकम ॥ ८४ ॥
समा-मास-तदर्धाह र्नामजातिस्वगोत्रकैः।
सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ॥ ८५ ॥

Prese—यः कश्चित् अर्थः (हिरण्यादिः) (धनिकाधमर्णयोर्मध्ये)

'परस्परं स्वरूच्या निष्णातः ( स्थिरीकृतः, व्यवस्थितः च ) तस्मिन् ( अर्थे ) लेख्यं साक्षिमत् ( साक्षियुक्तं ) धनिकपूर्वकम् ( धनिकनामलेखनपूर्वकं ) कार्य्यम् —( कालान्तरे विवादेसति तन्निर्णयार्थमिदं कार्य्यम )। तत् लेख्यं समामास-तदर्धाहः—नामजातिस्वगोत्रकैः ( सह ) सब्रह्मचारिकात्मीयपितृनामादिचिह्नितं कार्य्यम्।

Beng—হিরণ্যাদিব্যাপারে ধনিক ও অধমর্ণের মধ্যে যদি পরস্পর নিজ ইচ্ছামত কোন ব্যবস্থা করা হয় ( যথা, আমি এতদিনমধ্যে, এভাবেসুদসহ হিরণ্যাদি দিব ), তখন ( ভবিষ্যতে বিবাদনির্ণয়ের জন্য ) সাক্ষি রাখিয়া প্রথমেই ধনিকের নাম লিখাইয়া দলিল কবিবে। তাতে গৃহীত ঋণের তারিখ, বৎসর, মাস, অর্দ্ধমাস বা পক্ষ এবং দিন বা তিথি, ( ধনিক ও অধমর্ণের উভয়ের ) নাম, জাতি ও গোত্রের সহিত, অধীয়মান বেদশাখার নাম, আত্মীয় ও পিতৃনাম এবং গৃহীত দ্রব্যেরও নাম সংখ্যা প্রভৃতিও স্পষ্টভাবে উল্লিখিত থাকিবে।

Eng. If in some negotiation of loan there be some mutual understanding of payment according to convenience of both the creditor and debtor, it should be done before witnesses and with the name of creditor at the outset (to avoid misunderstanding in future); moreover this document should be marked with year, month, fortnight, day, name, caste and gotra (of each) along with the name of vedic school he belongs to, the name of relations, of father etc, as also the name and amount etc of the loan taken.

[ N. B—Having stated about witnesses in matters of व्यवहार ( suits ), our author new speaks of लेख्य or



documents in negotiations of loans etc ; documents are either (1) शासन=commandments—राजशासनम् ( हुकुमपत्र ), and जानपद (i. e, done in some जनपद or country ) ; again जानपदलेख्य may be (i) स्वहस्तलिखित or (ii) परहस्तलिखित ; mostly in स्वहस्तलिखितलेख्य, witnesses are not required it is असाक्षिक, but in परहस्तलिखितलेख्य or अन्यकृतलेख्य ( documents completed by pleaders etc) साक्षिन् with names of parties with the names of their fathers, lineage, caste year, month, date, etc are necessary and there should be details of the loan etc—mode of repayment etc—Now see Mitakhara ]।

Mita—भुक्ति-साक्षिणौ निरूपितौ, साम्प्रतं लेख्यं निरूप्यते। तत्रलेख्यं द्विविधिम् शासनं जानपदं च इति। शासनं निरूपितम्। जानपदमभिधीयते। तच्च द्विविधम्—स्वहस्तकृतम् अन्यकृतञ्च। तत्र सहस्तकृतमसाक्षिकम्, अन्यकृत ससाक्षिकम्। अनयोश्च देशाचारानुसारेण प्रामाण्यम्। यथाह नारदः—"लेख्यं तु द्विविधं ज्ञेयं स्वहस्तान्यकृतं तथा। असाक्षिमत् साक्षिमच्च सिद्धिर्देश-स्थितेस्तयोः" इति।

तत्रान्यकृतमाह—धनिकाधमर्णयोः "योर्थः" हिरण्यादिः "परस्परं स्वरुच्या" इयताकालेन एतावद्देयम्, इयती च प्रतिमासं वृद्धिः इति "निष्णातः" व्यवस्थितः, "तस्मिन्नर्थे" कालान्तरे विप्रतिपत्तौ वस्तुतत्त्वनिर्णयार्थं "लेख्यं साक्षिमत्" उक्तलक्षणसाक्षियुक्तं "धनिकपूर्वकं" धनिकः पूर्वः यस्मिन् तत् धनिकपूर्वकम् इत्यर्थः। "कार्यं कर्त्तव्यम्"। उक्तलक्षणाः साक्षिणो वा कार्य्याः। "कर्त्ता तु तत्कृतं कार्य्यं सिद्ध्यर्थं तस्य साक्षिणः। प्रवर्त्तन्ते विवादेषु स्वकृतं वाथ लेख्यकम्" इति स्मरणात् ॥ ८४ ॥

अपिच 'समा' वत्सरः, मासश्चैत्रादिः, तदर्थं ( तस्य मासस्य अर्धम् ) पक्षः—शुक्लः कृष्णो वा, अहस्तिथिः प्रतिपदादिः, नाम-धनिकाधमर्णिकयोः,

जातिर्ब्राह्मणत्वादिः, स्वगोत्रं वासिष्ठादिगोत्रम्, एतैः ( सह वा ) चिह्नितम्। तथा "सब्रह्मचारिक" वह्वृचादिशाखाप्रयुक्तं गुणनाम,—वह्वृचः कठः इति। आत्मीयपितृनाम—धनिकाधमर्णिकपितृनाम, आदिग्रहणात् द्रव्यजाति-संख्याचारादेर्ग्रहणम्। "एतैः चिह्नितं लेख्यं कार्य्यं" इति गतेन ( पूर्वेण ) सम्बन्धः॥ ८५॥

## CHARCHA

1. स्वरुच्या—करणे ३या। स्वरुच्या निष्णातः॥ नि+स्ना+क्त=निष्णातः। It means "settled with experts or careful attention", so स्ना becomes ष्णा with cerebral by the rule "निनदीभ्यां स्नातेः कौशले" and meaning of कौशल is implied here ; for पर+परम्=परः परम्= परस्परम, see our Kirata I and Sak etc. Adv. qual. निष्णातः।

2. साक्षिमत्—Pred. to लेख्यम्॥ धनिकपूर्वकम् (वहु—see मिता ) is also Pred. to लेख्यम्। धनमस्ति अस्य gives धनिक with मत्वर्थ ठन्। See ante also.

3. समा-मास-स्वगोत्रकैः—Parse it as ऊह्य सहशब्दयोगे ३या; see Mita.

4. सब्रह्मचारि—चिह्नितम्—Pred. to लेख्यम्। See Mita.

86-87-88. further details of signing etc, in documents.

समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत्।
मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम्॥ ८६॥
साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम्।
अत्राहममुकः साक्षी लिखेयुरिति ते समाः॥ ८७॥
उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना।
लिखितं ह्यमुकेनेति लेखकोऽन्ते ततोलिखेत्॥ ८८॥



Prose—अर्थे ( धनिकाधमर्णिकयोः विषयलेख्ये ) समाप्ते ऋणी नाम ( स्वनाम ) स्वहस्तेन निवेशयेत् ( लिखेत् )—अत्र ( लेख्ये ) यत् उपरि लेखितं तत् अमुकपुत्रस्य मे मतम् ( अभिप्रेतम् )। तथा अस्मिन् लेख्ये साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम् "अत्राहम् अमुकः साक्षी" इति स्वहस्तेन लिखेयुः। ते च साक्षिणः ( गुणतः संख्यातश्च ) समाः कर्त्तव्याः। ततः लेखकः "उभाभ्यां अभ्यर्थितेन अमुकसूनुन मया अमुकेन एतत् लिखितं" इति अन्ते लिखेत्।

Beng—উক্তভাবে ধনিক ও অধমর্ণিকের মধ্যে লেখ্যবিষয় সমাপ্ত হইলে, অধমর্ণ নিজনাম স্বহস্তে স্বাক্ষর করিবে, এবং তাহাতে লিখিবে "অমুকের পুত্র আমি ইহাতে সম্মত আছি"। সাক্ষিগণ ও সেইলেখ্যপত্রে নিজহস্তে পিতার নামোল্লেখপূর্ব্বক "অমুক আমি এই দলিলে সাক্ষী" একথা স্বাক্ষর করিবে। উভয় পক্ষের সাক্ষিগণ সংখ্যায় ও গুণে সমান হইবে॥

অনন্তর লেখক "অমুকের পুত্র আমি অমুক, উভয়পক্ষ দ্বারা প্রার্থিত হইয়া এই দলিল লিখিলাম" এই কথা লিখিবেন।

[ N. B.—অধমর্ণ বা উত্তমর্ণ স্বয়ং লিখিতে না জানিলে সকল সাক্ষিদের সামনে অন্যকে দিয়া নিজনাম লেখাইবেন। অনক্ষর সাক্ষীরা ও এরূপ করিবেন ]।

Eng. Thus the documentary matter (between the creditor and the debtor) being finished, the debtor shall sign his own name himself mentioning that "I son of so and so agree to this or approve of this"; then the witnesses shall sign themselves mentioning their father's name and shall each declare "that I so and so is a witness," witness of both the parties shall be equal in number

and status. Lastly the writer should at the end of the document state that "I so and so, son of so and so, write out this document being entreated by both."

Mita—किञ्च धनिकाधमर्णयोर्थः अर्थः स्वरूच्या व्यवश्रितः, तस्मिन् अर्थे समाप्ते लिखिते ऋणी अधमर्णो नाम आत्मीयं नाम स्वहस्तेन तस्मिन् लेखे?" यदुपरि लेखितं तत् ममामुकपुत्रस्यमतम्" "अभिप्रेतमिति निवेशयेत्" पत्रे विलिखेत् ॥ ८६ ॥

तथा तस्मिन् लेख्ये ये साक्षिणः लिखितास्तेपि आत्मीयपितृनामलेखनपूर्वकं तस्मिन्नर्थे "अयममुको" देवदत्तः साक्षी इति स्वहस्तेन एकैकशःलिखेयुः। "ते च समाः" मंख्यातो गुणतश्च] कर्त्तव्याः। [ यदि अधमर्णः साक्षी वा लिपिज्ञो न भवति तदा अधमर्णोऽन्येन साक्षी च साक्ष्यन्तरेण सर्वसाक्षिसन्निधौ स्वमतं लेखयेत्। यथाह नारदः—"अलिपिज्ञः ऋणी यः स्यात् स्वमतं तु स लेखयेत्। साक्षी वा साक्षिणान्येन सर्वसाक्षीसमीपतः" इति ॥ ८७ ॥

अपिच "ततो लेखक उभाभ्यां धनिकाधमर्णिकाभ्यां प्रार्थितेन मया अमुकेन देवदत्तेन विश्वमित्रसूनुना एतल्लेख्यं लिखितमित्यन्ते लिखेत् ॥ ८८ ॥

## CHARCHA

1. निवेशयेत्—It means स्वनाम लिखेत्। नि+विश+णिच्+लिङ्यात।

2. मे—अनुक्ते कर्त्तरि षष्ठी in connection with वर्त्तमने क्त in मतम्, by the rule "क्तस्य च वर्त्तमाने"।

3. लेखितम्—लिख+णिच्+क्त कर्मणि।

4. पितृनामकपूर्वकम्—नाम एव नामकम्। पितुः नामकम्। स एव पूर्वः यस्मिन्, बहु-with समासान्तकप्। qual. नाम understood, or or better-adv. qual. लिखेयुः।



5. लिखेयुः—लिख+लिङ्युस्। Nom. साक्षिणः।

89. self-written documents are usually valid.

विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितन्तु यत्।
तत्प्रमाणं स्मृतं लेख्यं वलोपधिकृतादृते ॥ ८९ ॥

Prose—अधमर्णेन साक्षिभिर्विनापि यत् लेख्यं स्वहस्तलिखितं तत् प्रमाणं स्मृतम्। वलोपधिकृतात् ऋते ( विना ) ( सर्वं ) लेख्यं प्रमाणं स्मृतम्।

Beng. অধমর্ণ যে দলিল স্বহস্তে লিখিবে তাহা সাক্ষী ছাড়াই প্রমাণ বলিয়া স্মৃত হয়। তবে বলাৎকারদ্বারা বা কপটতা বা ছলনাসহকারে কৃত লেখ্য বা দলিল প্রমাণ হইবে না।

Eng. The document written by the debtor in his own hand writing is declared valid by the smritikaras ; but not so if done forcibly and with a view of deceit.

Mita. साम्प्रतं स्वकृतं लेख्यमाह—"यल्लेख्यं स्वहस्तेन लिखितम्" अधमर्णेन, "तत् साक्षिभिर्विनापि प्रमाणं स्मृतं" मन्वादिभिः। "वलोपधिकृतादृते" वलेन वलात्कारेण, उपधिना छलनालोभक्रोधभयमदादिलक्षणेन यत्कृतं "तस्मात् विना" ( प्रमाणम् ) ॥ नारदोप्याह—"मत्ताभियुक्त-स्त्रीवालवलात्कार-कृतं यत्। तदप्रमाणं लिखितं भयोपधिकृतं तथा" ॥ तच्चैतत् स्वहस्तकृतं परहस्तकृतं च यत् लेख्यं देशाचारानुसारेण सवन्धकव्यवहारे अवन्धकव्यवहारे च युक्तम्, अर्थक्रमापरिलोपेन लिप्यक्षरापरिलोपेन च लेख्यम् इत्येतावत्, न च पुनः साधुशब्दैरेव, प्रातिस्विकदेशभाषायामपि लेखणीयम् [ such documents whether स्वहस्तलिखित वा परहस्तलिखित whether to be used in सवन्धक or अवण्धक legal matters should be written in one's own language, acc. to local custom, keeping sense etc in tact ; it need not be written in elegant language of the learned , or it may be written in one's own language too ]

यथाह नारदः—"देशाचाराविरुद्धं यद् व्यक्ताधिविधिलक्षणम्। तत् प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरम्"। विधानं विधिः; आधेर्विधिराधिविधिः आधीकरणं, तस्य लक्षणं गोप्याधिभोग्याधिकालकृतमित्यादि तद्व्यक्तं विस्पष्टं यस्मिन्, तद्व्यक्ताधिविधिलक्षणम्; "अविलुप्तक्रमाक्षरम्" अर्थानां क्रमः, क्रमश्चाक्षराणि च क्रमाक्षराणि, अविलुप्तानि क्रमाक्षराणि यस्मिन् तदविलुप्तक्रमाक्षरम्; तदेवम्भूतं लेख्यं प्रमाणम्। राजशासनवत्र साधुशब्दनियमोत्र इत्यभिप्रायः ॥ ८९ ॥

CHARCHA

1. बलोपधि &c—बल is बलात्कार, forcible doing; उपधि is छलना; cp "सोपधि मन्धिदूषणम्"—Kirata. बलञ्च उपधिश्च, द्वन्द्व। ताभ्याम् कृतम्, ३तत्। *तस्मात्। ऋतेशब्दयोगे ५मी।

90 documentary loan will run for three generations &c.

ऋणं लेख्यकृतं देयं पुरुषैस्त्रिभिरेव च।
आधिस्तु भुज्यते तावत् यावत्तन्न प्रदीयते ॥ ९० ॥

Prose—लेख्यकृतं ऋणं त्रिभिः पुरुषैरेवदेयम्। आधिस्तु (बन्धकयुक्तः सन्) यावत् तच्च ऋणं न दीयते तावत् भुज्यते।

Beng. সাক্ষিসমন্বিত দলিলদ্বারা কৃত ঋণ তিন পুরুষের অবশ্য দেয় হইবে। কিন্তু সবন্ধক ঋণস্থলে, যতদিন পর্য্যন্ত ঋণশোধ না হয়, ততদিন ধনীকর্ত্তৃক ইহার ভোগ চলিবে। [N B—ইহাতে বোঝা যায় এতাদৃশ ঋণ চারি বা ততোধিক পুরুষ কর্ত্তৃক পরিশোধনীয় হইবে]।

Eng. A documentary loan executed with witnesses is to be repaid even by three successive generations; but a mortgaged loan is to be enjoyed by the creditor till it is





not finally paid off (i. e, it may run down up to 4th or 5th generations even).

Mita. लेख्यप्रसङ्गेन लेख्यारूढमपि ऋणं त्रिभिरेव देयमित्याह—यथा साक्ष्यादिकृतमृणं त्रिभिरेव देयं तथा लेख्यकृतमृणं अपि आहर्त्तृ-तत्पुत्र-तत्पुत्रैस्त्रिभिरेवदेयं न चतुर्थादिभिरिति नियम्यते ॥ [ननु "पुत्रपौत्रैः ऋणं देयम्" (50) इत्यविशेषेण ऋणमात्रं त्रिभिरेव देयम् इति नियतमेव। बाढम्। अस्यैव उत्सर्गस्य पत्रारूढ-ऋणविषये स्मृत्यन्तरप्रभवाम् अपवादशङ्काम् अपनेतुम् इदं वचनमारब्धम्। तथा हि—पत्रलक्षणमभिधाय कात्यायनेन अभिहितम्—"एवं कालमतिक्रान्तं पितॄणां दाप्यते ऋणम्" इति। इत्थं पत्रारूढं ऋणमतिक्रान्त-कालमपि पितॄणां सम्बन्धे दाप्यते। अत्र "पितॄणाम्" इति बहुवचननिर्देशात् कालमतिक्रान्तमिति वचनात् चतुर्थादिदर्भ्यि इति प्रतीयते। यथा हारितेनापि—"लेख्यं यस्य भवेद्धस्ते लाभं तस्य विनिर्दिशेत्"। अत्रापि यस्य हस्ते लेख्यमस्ति तस्य ऋणलाभः इति सामान्येन चतुर्थादिभ्योपि ऋणलाभो अस्तीति प्रतीयते। अतश्चैतद् आशङ्कानिवृत्त्यर्थम् एतद्वचनमुक्तम्। वचनद्वयं च योगीश्वर वचनानुसारेण योजनीयम् [The above two statements are here reconciled by योगी याज्ञवल्क्य]। अस्यापवादमाह—सबन्धकेपि पत्रारूढमृणं "त्रिभिरेव देयम्" इति नियमात् ऋणापाकरणानधिकारेण अध्याहरणेपि अनधिकारप्राप्ताविदमुच्यते—'यावत् चतुर्थेन पञ्चमेन वा ऋणं न दीयते तावदेव आधिर्भुज्यते' इति वदता सबन्धकऋणापाकरणे चतुर्थादेरप्यधिकारो दर्शितः। नन्वेतदपि अयुक्तमेव "फलभोग्योननश्यति" (58) इति। सत्यम्। तदपि एतस्मिन् असति अपवादवचने पुरुषत्रयविषयमेवस्यात् इति सर्वमनवद्यम् ॥ ९० ॥

CHARCHA

1. लेख्यकृतम्—लेख्येन कृतं (विहितं), ततत्—। Qual ऋणम्।
2. प्रदीयते—प्र+दा+लटते कर्मणि. mortgaged loan &c. should

run till the ऋण is not paid off. But साक्षिभावित loan is "पुत्रपौत्रैः देयम्" so also लेख्यकृत loan.

91. If somehow a document is lost, defaced or demolished a new document is to be executed.

देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा ।
भिन्ने दग्धेऽथवा छिन्ने लेख्यमन्यत्तु कारयेत् ॥ ९१ ॥

Prose—लेख्ये देशान्तरस्थे, दुर्लेख्ये ( अवाचकलेखनेसति ), नष्टे ( कालवशेन नष्टे ) तथा उन्मृष्टे ( मषीदौर्बल्यात् मृदितलिप्यक्षरे सति ), हृते, भिन्ने ( विदलिते ), दग्धे ( अग्निना दग्धे सति ) छिन्ने वा ( द्विधाभूते वा ) अन्यत्लेख्यं कारयेत् ।

Beng.—যদি বা লেখ্য বা দলিল বহুদূরদেশে থাকে, যদি তার অক্ষরগুলি অর্থহীন হয়, কাল বশে যদি নষ্ট হয়, অথবা কালীর দোষে অক্ষরগুলি মুছিয়া যায়, যদি চোরদ্বারা হৃত হয়, লেখ্য যদি মর্দিত হয়, পুড়িয়া যায় বা দুই টুকরা হইয়া যায়, তবে অবশ্য অর্থি-প্রত্যর্থীর অনুমতিতে নূতন লেখ্যপত্র সম্পাদনীয় ।

Eng—If a document remains afar ( in another country ), if the letters or words thereof do not convey the the desired meaning, if it is defaced, or stolen, or smashed or burnt by fire or torn asunder then a fresh document is to be executed ( by mutual agreement of the debtor and the creditor).

Mita—प्रासङ्गिकं परिसमाप्यप्रकृतमेवानुसरति—व्यवहाराक्षमे पत्रे पत्रान्तरं कुर्य्यात् इति विधीयते। व्यवहाराक्षमत्वं चास्यन्तव्यवहितदेशान्तरस्थे पत्रे,



दुर्लेख्ये—दुष्टानि सन्दिह्यमानानि अवाचकानि वा लेख्यानि लिप्यक्षराणिपदानि वा यस्मिन् तत् "दुर्लेख्यम्", तस्मिन् दुर्लेख्ये, नष्टे कालवशेन, उन्मृष्टे—मषीदौर्बल्यादिना मृदितलिप्यक्षरे, हृते तस्करादिभिः, भिन्ने विदलिते, दग्धे अग्निना प्रज्वलिते, छिन्ने द्विधाभूते सति, पत्रं (यदि) द्विर्भवति। एतच्च अर्थिप्रत्यर्थिनोः परस्परानुमतौ सत्याम् ॥ विमतौ तु व्यवहारप्राप्तौ देशान्तरस्थपत्रानयनाय अध्वापेक्षया कालोदातव्यः ( If the parties do not agree to a fresh new document, time is to be given in consideration of distance )। दुर्गदेशावस्थिते नष्टे वा पत्रे साक्षिभिरेव व्यवहारनिर्णयः कार्य्यः ( in case of very far or lost document the witnesses are to determine the suit )। यथाह नारदः—"लेख्ये देशान्तरस्थे शीर्णे दुर्लिखिते हृते। सतस्तत् कालकरणम् असतो दृष्टृदर्शनम्। सतः विद्यमानस्य पत्रस्य देशान्तरस्थस्य आनयनाय कालकरणं कालावधिर्दातव्यः। असतः पुनरविद्यमानस्य पत्रस्य पूर्वं ये द्रष्टारः साक्षिणस्तैः दर्शनं व्यवहारसमापनं कार्य्यम्। यदा तु साक्षिणो न सन्ति तदा दिव्येन निर्णयः कार्य्यः—"अलेख्यसाक्षिके दैवी व्यवहारे विनिर्दिशेत्" [ दिव्य प्रमाण is to be resorted to where there is no witness whatsoever ] ॥ एतच्च जानपदव्यवस्थापत्रम्। राजकीयमपि व्यवस्थापत्र-मीदृशमेव भवति। इयान् तु विशेषः—"राज्ञः स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा। राजकीयं स्मृतं लेख्यं सर्वेष्वर्थिषु साक्षिमत्" इति। तथान्यदपि राजकीयं जयपत्रकं वृद्धवसिष्ठेनोक्तम्—"यथोपन्यस्तसाध्यार्थसंयुक्तं सोत्तरक्रियम्। सावधारणकं चैव जयपत्रकमिष्यते"। प्राड्विवाकादिहस्ताङ्कं मुद्रितं राजमुद्रया। सिद्धेऽर्थे वादिने दद्यात् जयिने जयपत्रम्"। तथा सभासदोपि मतंमे अमुकपुत्रस्य इति स्वहस्तं दद्युः—"सभासदश्चयेतत्र स्मृतिशास्त्रविदःस्थिताः। यथालेख्यविधौ तद्वत् स्वहस्तं दद्युरेव ते"—इति स्मरणात्। सभासदां च परम्परानुमतिव्यतिरेकेन न व्यवहारोनिःशल्यो भवति। यथाह नारदः—"यत्र सभ्यो जनः सर्वः साध्वेतदिति मन्यते। स निःशल्योविवादः स्यात्

सशल्यस्त्वन्यथा भवेत्" इति। एतत् चतुष्पात् व्यवहारः—"साधयेत् साध्यमर्थं चतुष्पादान्वितं च यत्। राजमुद्रितान्वितं चैव जयपत्रकमिष्यते" इति स्मरणात्। यत्र तु हीनता, यथा—"अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः। आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः "इति। तत्र न जयपत्रकमस्ति, अपितु हीनपत्रकमेव। तच्च कालान्तरे दण्डप्राप्त्यर्थं, जयपत्रं तु प्राङ्न्याय विधिसिद्ध्यर्थम् इति विशेषः॥ ९१॥

CHARCHA

1. देशान्तरस्थे—अन्यःदेशः देशान्तरम्, मयूरव्यंसकादित्वात् समासः। देशान्तरे तिष्ठतीति देशान्तरस्थम् ("सुपिस्थः" इति कप्रत्ययः)। Pred. to लेख्ये (wh. has भावे ७मी)। Rest easy—see prose & Mita.

92. In case of doubt about document verification is necessary.

संदिग्धलेख्यशुद्धिः स्यात् स्वहस्तलिखितादिभिः।
युक्तिप्राप्तिक्रियाचिह्नसम्बन्धागमहेतुभिः॥ ९२॥

Prose—संदिग्धलेख्यशुद्धिः तु स्वहस्तलिखितादिभिः स्यात्। युक्तिप्राप्ति-क्रिया-चिह्न-सम्बन्धागमहेतुभिः अपि शुद्धिः स्यात्।

Bens.—যদি দলিল সম্বন্ধে সন্দেহ উপস্থিত হয়, তবে অধমর্ণের স্বহস্ত লিখিত অন্য পত্রের সহিত লেখার মিল প্রভৃতি দেখিয়া নির্ণয় করিবে। ইহা ছাড়া প্রাপ্তি সম্বন্ধে যুক্তিদ্বারা নির্ণয় সম্ভব, সাক্ষ্যাদি ক্রিয়া, হস্তাক্ষরাদি চিহ্ন, অর্থি-প্রত্যর্থীর পূর্বেকার লেনদেন সম্বন্ধ, ধনীর অর্থসত্তা সম্ভাব্যতা, ও আনুষঙ্গিক হেতুদ্বারাও সন্দিগ্ধ দলিলের নির্ণয় হয়।

Eng. If doubt arises as to the validity of a document then it can be decided by the debtor's own handwriting



etc in some other document; it may also be decided by logical probability, by evidences, by his special mode of signature etc, by previous relation of debtor and creditor between them, by facts of creditor's acquisition of the sum at the time, and due to his carrying on such loan business—(See Mitakshara also).

Mita—लेख्यसन्देहे निर्णयनिमित्तानि आह—शुद्धमशुद्धं वा इति "सन्दिग्धस्य लेख्यस्य शुद्धिः (तु) स्वहस्तालिखितादिभिः स्यात्"। स्वहस्तेन लिखितं यल्लेख्यान्तरं तेन शुद्धिः। यदि सदृशानि अक्षराणि भवन्ति तदा शुद्धिः स्यादित्यर्थः। [आदिशब्दात् साक्षिलेखकस्वहस्त-लिखितान्तरसंवादात् शुद्धिरिति]। युक्त्या प्राप्तिः "युक्तिप्राप्तिः"—देशकाल-पुरुषाणां द्रव्येणसह सम्बन्धः (एव) प्राप्तिः। (अस्मिन्देशे अस्मिन्काले अस्य पुरुषस्य इदं द्रव्यं घटते इति युक्तिप्राप्तिः)। क्रिया—ततसाद्युपन्यासः। चिह्नम्—असाधारणं श्रीकारादि। सम्बन्धः—अर्थिप्रत्यर्थिनोः पूर्वमपि परस्परविश्वासेन दानग्रहणादिसम्बन्धः। आगमः—अस्य एतावतोर्थस्य सम्भावितः प्राप्त्युपायः। एते एव "हेतवः"। एभिर्हेतुभिः सन्दिग्धलेख्यस्य शुद्धिः स्यात् इति अन्वयः। (यदा तु लेख्यसन्देहेनिर्णयो न जायते तदा साक्षिभिनिर्णयः कार्य्यः। यथाह कात्यायनः—दूषिते पत्रके वादी तदारूढांस्तुनिर्दिशेत्" इति। साक्षिसम्भवविषयमिदं वचनम्। साक्ष्य-सम्भवविषयं तु हारीतवचनम्—"न मयैतत् कृतम् पत्रं कूटम् एतेन कारितम्। अधरीकृत्य तत्पत्रमर्थे दिव्येन निर्णयः"। इति)॥ ९२॥

CHARCHA

1. स्वहस्तलिखितादिभिः—लिख+क्त नपुंसके भावे=लिखितम्=लेखनम् (writing)। स्वहस्तस्य लिखितम्। तत् आदि येषां बहु। तैः करणे ३या। This will be in comparison of his writing

in other documents, or कर्मणिका स्वहस्तेन लिखितम्। This refers to other documents written by him.

2. युक्तिप्राप्ति &c—युक्तिप्राप्ति is logical probability of his or of both having this at the time and at this place etc. युक्त्या प्राप्तिः, इतत्। क्रिया is साक्ष्युपन्यास। चिह्न is special mode of signature, सम्बन्ध is their such prior relation of debtor—creditorship. आगम is rationality of creditor's having this sum at the time. युक्तिप्राप्ति—सम्बन्धागमा एव हेतवः। कर्मधा। तैः। करणे ३या। or—the whole is a द्वन्द्व। Then हेतु is here करण which means असाधारण कारण as लेनदेनव्यवसाय। करणे ३या॥ or—आगमस्य हेतुः cause of having executing the present document, आगमहेतुः। Rest as above.

93. The next step after verification of document, when the whole amount is not given by the debtor at a time.

> लेख्यस्य पृष्ठेऽभिलिखेद्दत्त्वा दत्त्वर्णिको धनम्।
> धनी वोपगतं दद्यात् स्वहस्तपरिचिह्नितम्॥ ९३॥

Prose—ऋणिकः (अधमर्णिकः) (स्वशक्त्यनुसारेण) दत्त्वा दत्त्वा लेख्यस्य पृष्ठे अभिलिखेत्। धनी च उपगतं (प्राप्तं धनं) स्वहस्तपरिचिह्नितम् दद्यात् (कुर्य्यात्, अभिलिखेत् इत्यर्थः)।

Beng. অধমর্ণ একবারে সকলধন দিতে অসমর্থ হইলে, যখনই কিছু কিছু ধন দিবে, তখন দলিলপত্রের পিছনে লিখিয়া দিবে। ধনী (উত্তমর্ণ) ও প্রাপ্তধন স্বাক্ষর করিয়া দিবেন।



Eng. The debtor (if unable to pay off the whole amount at a time) will endorse the part—paid amount on the back of the document whenever it is so paid; and the creditor too will accept the sum by signing it in his own handwriting.

Mitta—एवं शोधिते पत्रे ऋणे च दातव्ये प्राप्ते यदा कृत्स्नमेव ऋणं दातुम् असमर्थस्तदा किं कर्त्तव्यमित्यत आह—यदा (ऋणिकः) अधमर्णिकः सकलमृणं दातुमसमर्थस्तदा शक्त्यनुसारेण "दत्त्वा पूर्वकृतस्य लेख्यस्य पृष्ठेस्याभिलिखेत्"—एतावन्मयादत्तमिति। उत्तमर्णः वा (च) "उपगतं" प्राप्तं धनं तस्यैव लेख्यस्य पृष्ठे दद्यात् अभिलिखेत्—एतावन्मया लब्धम् इति। कथम्?—"स्वहस्तपरिचिह्नितम्" स्वहस्तलिखिताक्षरचिह्नितम् (दद्यात्)। यद्वा उपगतं प्रवेशपत्रं स्वहस्तलिखितपरिचिह्नितम् अधमर्णाय उत्तमर्णो दद्यात्॥ ९७॥

## CHARCHA

1. दत्त्वा, दत्त्वा—वीप्सायाम् द्वित्वम्। whenever there is part-payment it should be so endorsed.

2. ऋणिकः—ऋणमस्ति अस्य इति ऋण+ठन् मत्वर्थे=ऋणिकः a debtor Similarly we derive धनिक अधमर्णिकः and उत्तमर्णिकः। See also ante.

3. च—This reading is better here than वा, for च shows the creditor's duty after the debtor's endorsement.

4. स्वहस्त &c—स्वहस्तेन परिचिह्नितम् signed by his own hand, इतत्। तत् यथा तथा। Adv. qual. दद्यात्। Thus उपगतं धनं स्वहस्तचिह्नितं यथा तथा दद्यात् (कुर्य्यात् i. e, स अपि अभिलिखेत्)। धातनामनेकार्थत्वात् दा अत्र करोत्यर्थे लेखनार्थे वा वर्त्तते)। or—चिह्नित

is चिह्न (नपुंसके भावे क्त); स्वहस्तेन परिचिह्नितं निजहस्ताक्षरचिह्नम् दद्यात् (पृष्ठे दद्यात् i. e. अभिलिखेत्)। In fact स्वहस्तपरिचिह्नितम् (adv. &c) applies both in the case of ऋणिक and धनी or धनिक।

94. After full payment tear off the document.

दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै वान्यत्तु कारयेत्।
साक्षिमच्च भवेद् यद्वा तद्दातव्यं ससाक्षिकम्॥ ९४॥

Prose—कृत्स्नं ऋणं दत्त्वा लेख्यं पाटयेत् (छिन्द्यात्), वा शुद्ध्यै अन्यत् (शोधनसूचकं) लेख्यं कारयेत्। वा (अथवा) यत् लेख्यं साक्षिमद् भवेत् तत् ससाक्षिम् (एव) दद्यात्।

Beng. সমগ্র ঋণ পরিশোধ হইলে, ঐ লেখ্য পত্র ছিঁড়িয়া ফেলিবে, অথবা লেখ্য দেশান্তরে থাকিলে, উত্তমর্ণকে দিয়া ঋণশোধপত্র করাইয়া লইবে। আবার যদি লেখ্য দলিল কোন সাক্ষী রাখিয়া করা হয়, তবে সেই সাক্ষীর সমক্ষেই ঋণ শোধ করিবে।

Eng. When the entire loan is paid off, then tear off the original document; if the document is in another country or place, then make a release-document duly executed by the creditor. If the debt-document was done before a witness, then pay it before that very witness.

Mita—ऋणे च कृत्स्नेदत्ते लेख्यं किं कर्त्तव्यमित्यत आह—क्रमेण सकृदेव "कृत्स्नमृणं दत्त्वा, पूर्वकृतं लेख्यं पाटयेत्"। यदा तु दुर्गदेशावस्थितं (दूरदेशावस्थितं) लेख्यं नष्टं वा तदा "शुद्ध्यै" अधमर्णत्वनिवृत्त्यर्थम् अन्यत्लेख्यं "कारयेत्" उत्तमर्णेन अधमर्णः। पूर्वोक्तक्रमेण उत्तमर्णो विशुद्धिपत्रमधमर्णाय दद्यात् इत्यर्थः॥ ससाक्षिके कृत्स्ने ऋणे दातव्ये



किंकर्त्तव्यम् इत्यत आह—यत्तु ससाक्षिकमृणं तत् पूर्वसाक्षिसमक्षमेव दद्यात्॥ ९४॥ इतिलेख्यप्रकरणं (समाप्तम्)॥

## CHARCHA

1. शुद्ध्यै—शुद्धि is ऋणशुद्धि repayment of loan. तादर्थ्ये वा कर्मणि चतुर्थी। शुद्धिं लब्धुम् इत्यर्थः।

2. साक्षिमत्—Pred, to यत् (referring to लेख्य)।

3. ससाक्षिकम्—साक्षिणा सह वर्त्तमानम्, वहु। तत यथा तथा। Adv. qual. दातव्यम्॥

अथ दिव्यप्रकरणम्—(the section on divine proof).

95. In grave offences only – scales, fire, water, poison, कोशपान etc are used for divine oath for विशुद्धि।

तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि॥ ९५॥

Prose—तुलाग्न्यापो विषं कोशो (विधिना कोशपानविशेषः) इति (पञ्च) दिव्यानि इह (धर्मशास्त्रे) विशुद्धये (सन्दिग्धार्थशोधनाय) व्यवह्रियन्ते। एतानि (पञ्च) दिव्यानि महाभियोगेषु एव (व्यवह्रियन्ते, नान्यत्र)। विशेषतः अभियोक्तरि शीर्षकस्थे (श्रेष्ठदण्डलक्षणे स्थितेस्वीकृते सति) एव भवन्ति। [N. B. "यद्यनेन इदं कृतं न स्यात्, तदा मया अयं दण्डः आदेयः"—(ग्रहणीयः) इतिवादी शीर्षकस्थः इति केचित् वदन्ति]॥

Beng. মহাভিযোগ বা মহাপাতকে-তুলাদণ্ড, অগ্নি, জল, বিষ ও কোশপানবিধি—এই পাঁচটিদিব্য সন্দিগ্ধবিষয়ে দোষস্খালনের জন্য ধর্মশাস্ত্রে ব্যবহৃত হইয়া থাকে [স্বল্পদোষে এগুলি ব্যবহার্য্য নয়]। বিশেষতঃ অভিযোক্তা চতুষ্পাদ ব্যবহার পদের শ্রেষ্ঠদণ্ড লইতে

ইচ্ছুক হইলে এগুলি দিব্যস্বরূপ ব্যবহৃত হইবে। (See Mita) [ এ শ্লোক বাদীশপথবিষয়ক ]।

Eng. In cases of grave offences only ( as outrages, etc ), these five namely, scale, fire, water, poison and special handful drink are used for divine oath, for self-expiation ; specially if the accuser agrees to the final and greatest punishment ( of चतुष्पादव्यवहारपद ) [ See Mita ]—or capital punishment even. [ This is वादिदिव्यशपथविषयक ] ।

Mita—लिखित-साक्षि-भुक्तिलक्षणं त्रिविधं मानुषं प्रमाणमुक्तम् । अवसरप्राप्तं दिव्यं प्रमाणमभिधास्यन् "तुलाग्न्यापो" इत्यादिभिः आद्यैः पञ्चभिः श्लोकैर्दिव्यमातृकां (divine oath cannon or formula ) कथयति । तत्र तावद् दिव्यान्युपदिशति — "तुलादीनि कोशान्तानि पञ्च दिव्यानि इह धर्मशास्त्रे विशुद्धये" सन्दिग्धार्थस्य सन्देहनिवृत्तये दातव्यानि इति । ननु अत्रान्यान्यपि तन्डुलादीनि दिव्यानि सन्ति—"घटोग्निरुदकं चैव विषं कोशस्तथैव च । तन्डुलाश्चैव दिव्यानि सप्तमस्तप्तमापकः" इति पितामहस्मरणात् । अतः कथमेतावन्ति ( पञ्चानि ) एव ? इत्यत आह—एतानि पञ्च महाभियोगेषु एव नान्यत्र इति नियम्यन्ते । न पुनरिमान्येव दिव्यानि इति । महत्वावधिं च वक्ष्यति । ननु अल्पाभियोगेपि कोश इष्यते । "कोशमल्पेपि दापयेत्" इति स्मरणात् । सत्यम्,—कोशस्य तुलादिषु पाठो न महाभियोगेषु एव इति नियमार्थः । किन्तु सावष्टमाभियोगेपि प्राप्त्यर्थः [ महाभियोग is grave offence, महापातकादि । सावष्टम्भाभियोग is by accepting दन्ड on self if found guilty "स्वोपरि दन्डमङ्गीकृत्य स्थापितः सावष्टम्भः" । कोश is used here, for it is both for महाभियोग and सावष्टम्भाभियोग ] अन्यथा शङ्काभियोगे एव स्यात् [ other



wise कोशदिव्य will be confined to शङ्काभियोग वा सन्देहयुक्त अभियोग only ] "अवष्टम्भाभियुक्तानां घटादीनि विनिर्दिशेत् ( घट is rod of a scale वा तुलादन्ड । Cp. घटः स्यात्तु तुलाकाष्टम्" It is the same as तुला or scale-use ) तन्डुलांश्चैव कोशश्च शङ्कास्वेव न संशयः" इति स्मरणात् ।

महाभियोगेषु शङ्कितेषु चाविशेषेण प्राप्तौ अपवादमाह—एतानि तुलादीनि "अभियोक्तरि शीर्षकस्थे" अभियुक्तस्यभवन्ति । शीर्षकं शिरोव्यवहारस्य चतुर्थः पादो जयपराजयलक्षणस्तेन च दन्डो लक्ष्यते, तत्र तिष्ठतीति शीर्षकस्थः तत्प्रयुक्तदन्डभाग् इत्यर्थः ॥९५ ॥

[ Remark—अभियोग is either स्वल्प वा महान् । महाभियोग is grave offence like परस्त्रीधर्षण, ब्रह्महत्या &c. महाभियोग is either सावष्टम्भ ( निश्चयार्थक for here अभियोक्ता says of taking दन्ड if he is found false ) वा शङ्कितः—वा शङ्काभियोग ( like कारावास etc on suspicion of murder etc. ) ].

## CHARCHA

1. तुलाग्न्यापः &c—उह्य इतिशब्द योग १मा ॥ कोश is विध्यनुसारेण कोशत्रयपानविशेषः—Three handful drink as per enjoining, It is a kind ofordeal in स्मृतिशास्त्र and is diff. from कोश वा कोष meaning treasury,

2. विशुद्धये—तादर्थे ४र्थी । वा कर्मणि ४र्थी । See शुद्धैः ।

3. दिव्यानि—दिविभवानि दिव्यानि with यत् । divine i.e. divine oath—objects उक्तकर्म to व्यवह्रियन्ते वा दातव्यानि understood.

4. शीर्षकस्थे—construe—अभियोक्तरि शीर्षकस्थे एतानि भवन्ति । शीर्षक is शिरस् ( "उत्तमाङ्गं शिरः शीर्षम्" ) वा श्रेष्ठ=चतुर्थ व्यवहारपाद-

योग्य or श्रेष्ठ दन्ड। तत्र तिष्ठति इति शीर्षकस्थ। तस्मिन्। Pred. to, अभियोक्तरि (wh, has भावे ७मी)। See Mita; some say it is arrogation of मुन्डकच्छेद दन्ड by one if his अभियोग is false. In such cases only दिव्यप्रमाण is used. This sloka is वादी अभियोगकारीविषयक।

96, This divine oath may be either by वादी वा प्रतिवादी by mutual understanding,

> रुच्या वान्यतरः कुर्य्यादितरो वर्त्तयेच्छिरः।
> विनापि शीर्षकात् कुर्य्यात् नृपद्रोहे अथ पातके ॥ ९६ ॥

Prose—रुच्या (वादिप्रतिबादिनोः इच्छया) अन्यतरः वा दिव्यं कूर्य्यात्। (यः दिव्यं कुर्य्यात् ततः) इतरः शिरः (शिरः अर्थात् शरीरविषयकं दन्डं) वर्त्तयेत् (अङ्गीकुर्य्यात्)। अथ राजद्रोहे, पातके (ब्रह्महत्यादि पातके) शीर्षकात् (दन्डात्) विनापि दिव्यं कुर्य्यात।

Beng—পরস্পর মতানুসারে বাদী বা প্রতিবাদীর একজন দিব্য গ্রহণ করিবেন। যিনি দিব্য করিবেন তার প্রতিপক্ষ শারীর বা চতুষ্পাদের শীর্ষক দণ্ড স্বীকার করিয়া লইবেন। কিন্তু রাজদ্রোহে বা ব্রহ্মহত্যাদিপাতকবিষয়ে শীর্ষকদণ্ডাঙ্গীকার ছাড়াই তুলাদি দিব্য শপথ করিবেন। (অর্থাৎ রাজদ্রোহ বা মহাপাতক শঙ্কায় শঙ্কিত ব্যক্তি আত্মবিশোধনের জন্য এতাদৃশ দিব্য পরীক্ষা দিবেন)।

Eng—By mutual consent either complainant (वादिन्) वा accused (प्रतिबादिन् वा प्रतिपक्ष) may undergo such divine tests of oath with scale etc (तुल्यादिदिव्य); the other than the one taking such divine oath should agree to



accept the punishment bodily or monetary (as is reserved in such cases); but in matters of sedition against king or grave crime of ब्रह्महत्या etc. such divine oath with scales etc. will be undergone even without reference to highest deserving punishment.

Mita—"ततोर्थी लेखयेत्सद्यः प्रमिज्ञातार्थसाधनम् "इति भावप्रतिज्ञावादिन एव क्रिया इति व्यवस्थादर्शिता, तदपवादार्थमाह—"रुच्या' अभियोक्त, अभियुक्तयोः परस्परसम्प्रतिपत्त्या "अन्यतरः" अभियोक्ता वा अभियुक्तो "दिव्यंकुर्य्यात"। "इतरो" अभियुक्तः अभियोक्ता वा 'शिरः' शारीरमर्थदन्डं वा 'वर्त्तयेत्' अङ्गीकुर्य्यात्॥ अयमभिसन्धिः—न मानुपप्रमाणवत दिव्यं प्रमाणं भावैकगोचरं अपितु भावाभावाविशेषेण गोचरयति। अतश्च मिथोप्रत्तरे प्रत्यवस्कन्दने प्राङ्न्याये वा अर्थिप्रत्यर्थिनोरन्यतरस्य इच्छया दिव्यं भवति॥ अल्पाभियोगे शङ्का-सावष्टम्भयोरपि अविशेषेण कोशोभवति इत्युक्तं; तुलादीनि विषान्तानि तु महाभियोगेष्वव सावष्टम्भेष्वेव च इति नियमो दर्शितः। तत्र सावष्टम्भाभियोगेधु एव इत्यस्यापबादमाह—"राजद्रोहाभिशङ्कायां तथा ब्रह्महत्यादि-पातकाभिशङ्कायाश्च, शिरःस्थायिना विनापि तुलादीनि कुर्य्यात् महाचौर्य्याभिशङ्कायां च। यथाह "राजभिः शङ्कितानां च निर्दिष्टनां दस्युभिः॥ आत्मशुद्धिपराणाञ्च दिव्यं देयं शिरो बिना" इति। [तन्डुलाः पुनः अल्पचौर्य्यशङ्कायामेव—"चौर्य्ये, च तन्डुला देया नान्यत्रेति विनिश्चयः" इति पितामहवचनात्। तप्तमापस्तु महाचौर्य्याभिशङ्कायामेव—"चौर्य्यशङ्काभियुक्तानां तप्तमाषो विधीयते" इति स्मरणात्। अन्ये पुनः शपथाः अल्पार्थविषयाः— "सत्यं वाहनशस्त्राणि गोवीजकनकानि च। देवतापितृपादांश्च दत्तानि सुकृतानि च। स्पृशेत् शिरांसि पुत्राणां दाराणां सुहृदां तथा। अभियोगेषु सर्वेषु कोशपानमथापिवा"। इत्येते शपथाः प्रोक्ता मनुना स्वल्पकारणे" इति नारदस्मरणात्]॥ यद्यपि मानुषप्रमाणानिर्णेयस्य निर्णायकं यद्दिव्यं इति लोकप्रसिद्धमा शपथानामपि दिव्यत्वं तथापि कालान्तरे निर्णयनिमित्तत्वेन समनन्तर-

निर्णयनिमित्तेभ्यो घटादिभ्यो दिव्येभ्योः भेदत्वव्यपदशः ब्राह्मणपरिव्राजकवत् ।
[In "मानुषप्रमाण" some शपथ is taken, again in मानुषप्रमाणानिर्णेयवस्तु दिव्यप्रमाण is said here; both usual शपथ and दिव्यप्रमाणशपथ are शपथ, still a difference is drawn here like ब्राह्मण and परिव्राजक by परिव्राजकन्याय, to emphasise this दिव्यशपथप्रमाण section. [N. B. In 'ब्राह्मणानामन्त्रय' ब्राह्मण includes परिव्राजकब्राह्मण also, still we also say 'परिव्राजकानामन्त्रय" (though he is a ब्राह्मण) only to give some pre-eminence to परिव्राजक। So here also separate दिव्यप्रमाण प्रकरण is given or adduced here. ].

कोशस्य तु शपथत्वेपि घटादिषु (तुलादिषु) पाठो महाभियोगविषयत्वेन अवष्टम्भाभियोगविषयत्वेन च घटादिसाम्यात्। न तु समनन्तरनिर्णयनिमित्तत्वेन (not asacause of settlement showing resultlater on), तन्डुलानां तप्तमाषस्य च समनन्तरनिर्णयनिमित्तत्वेपि अल्पविषयत्वेन शङ्काविषयत्वेन च घटादि-वैलक्षण्यात तेपु अपाठ इति सन्तोष्टव्यम्। एतानि च दिव्यानि शपथाश्च यथासम्भवमृणादिषु विवादेषु प्रयोक्तव्यानि। यत्तु पितामहवचनम् "स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत्" इति, तदपि लिखितसामन्तादिसद्भावे दिव्यानि परिवर्जयेत् इति व्याख्येयम्॥ ननु विवादान्तरेषु अपि प्रमाणान्तर सम्भवे दिव्यानामनवकाश एव। सत्यम्,—ऋणादिषु विवादेषु उक्तलक्षणसाक्ष्युप-न्यासे अर्थिनाकृतेपि प्रत्यर्थी यदि दन्डाभ्युपागमावष्टम्भेन द्विव्यमवलम्बते तदा दिव्यमपि भवति। साक्षिनामाशयदोपसम्भवात् दिव्यस्य च निर्दोषत्वेन वस्तुतत्त्वविषयत्वात् तललक्षणत्वाच्च धर्मस्य। यथाह नारदः— 'तत्र सत्ये स्थितोधर्मः व्यवहारस्तु साक्षिनि। दैवसाध्ये पौरुषेयीं न लेख्यं वा प्रयोजयेत्" इति॥ स्थावरेषु विवादेषु प्रत्यर्थिना दन्डावष्टम्भेन दिव्यावलम्बने कृतेपि सामन्ताद्दि दृष्टप्रमाणसद्भावे नदिव्य' 'ग्राह्यमिति विकल्पनिराकरणार्थं "स्थावरेषु विवादेषु" इत्यादिपितामहवचनं नात्यन्तिकदिव्यनिराकरणार्थम्। लिखितसामन्ताद्यभावे स्थावरविवादेषु अनिर्णयप्रसङ्गात्॥ ९६॥



## CHARCHA

1. शिरः—Here refers to शीर्षकदण्ड as said in previous sloka, and शीर्षक here. शीर्षक is fourth punishment of चतुष्पद्व्यवहारपद; or highest punishment or शारीर दण्ड॥

8. वर्त्तयेत्—वृत+णिच्+लिङ्यात्। It means here "अङ्गीकुर्य्यात्। Nom. इतरः। वृत is both भ्वादि (आत्मनेपदी) and चुरादि (उभयपदी)।

97. usual general rites in दिव्यविधि।

सचैलं स्नातमाहूय सूर्य्योदये उपोषितम्।
कारयेत् सर्वदिव्यानि नृपब्राह्मणसन्निधौ॥ ९७॥

Prose—(पूर्वेद्युः) उपोषितम् सूर्योदये सचैलं स्नातं (दिव्यग्राहिणम्) आहूय नृपब्राह्मणसन्निधौ सर्वदिव्यानि कारयेत्।

Beng.—পূর্বদিবস উপবাস করিয়া পরদিন সূর্য্য উঠিলে পর পরিহিত বস্ত্রসহ স্নান করিলে পর দিব্যগ্রাহীকে আহ্বান করিয়া রাজ ও ব্রাহ্মণদের সমক্ষে দিব্য গ্রহণ করাইবেন।

Eng. Fasting on the previous day, the oath-taker on the next morrow after sunrise, will take ablution with his cloth on; then he should be summoned and ordered by the judge to take oath before the King and Brahmanas.

Mita—दिव्ये साधारणविधिः—किञ्च पूर्वेद्युः "उपोषितं उदिते सूर्य्ये सचैलं स्नातं" दिव्यग्राहिणम् "आहूय नृपस्य सभ्यानाञ्च ब्राह्मणानां सन्निधौ सर्वाणि दिव्यानि कारयेत् प्राड्विवाकाः।" त्रिरात्रोपषिताय स्युरेकरात्रोपषिताय वा। नित्यं दिव्यानि देयानि शुचये चार्द्रवाससे" इत्युपवासविकल्पः

पितामहेनोक्तो बलवदबलवत् महाकार्य्याल्पकार्य्यविषयत्वेन व्यवस्थितो द्रष्टव्यः। उपवासनियमश्च कारयितुः प्राड्विवाकस्यापि—"दिव्येषु सर्वकार्य्याणि प्राड्विवाकः समाचरेत्। अध्वरेषु यथाध्वर्य्युः सोपवासो नृपाज्ञया" इति पितामहवचनात्। [अत्र यद्यपि "सूर्य्योदये" इत्यविशेषणेनोक्तं तथापि शिष्टाचाराद् भानुवासरे दिव्यानि देयानि। तत्रापि "पूर्वाह्णे अग्निपरीक्षा स्यात् पूर्वाह्णे च धटो भवेत्। मध्याह्ने तु जलं देयं धर्मतत्त्वमभीप्सताम् दिवसस्य च पूर्वाह्णे कोशशुद्धिर्विधीयते। रात्रौ च पश्चिमे यामे विषं देयं सुशीतलम्" इति पितामहोक्तः विशेषो द्रष्टव्यः॥ अनुक्तकालविशेषाणां तण्डलतप्तमाषप्रभृतीनाम् पूर्वाह्णे एव प्रदानम्—"पूर्वाह्णे सर्वदिव्यानां प्रदानं परिकीर्त्तितम्" इति सामान्येन नारदस्मरणात्॥ अहनि त्रिधा विभक्ते पूर्वोभागः पूर्वाह्णः, मध्यमः मध्याह्नः, उत्तरोपराह्णः। तथा आपरोपि कालविशेषः विधिप्रतिषेधमुखेन दर्शितः॥ विधिमुखस्तावत्—"अग्नेः शिशिर-हेमन्तौ वर्षाश्चैव प्रकीर्त्तिताः। शरद्ग्रीष्मयु सलिलं, हेमन्ते शिशिरे विषम्। चैत्रो मार्गशिरश्चैव वैशाखश्च तथैवच। एते साधारणमासा दिव्यानामविरोधिनः॥ कोशस्तु सर्वदा देयस्तुला स्यात् सार्वकालिकी" इति॥ कोशग्रहणं सर्वशपथा-नामुपलक्षणम्, तण्डुलानां पुनर्विशेषोनभिधानात् सार्वकालिकत्वम्। प्रतिषेधो-मुखो यथा—"न शीते तोयशुद्धिः स्यात् नोष्णकाले अग्निशोधनम्। न प्रावृषि विषम् दद्यात् प्रवाते न तुलां तथा। नापराह्णे न सन्ध्यायां न मध्याह्ने कदाचन॥ इति॥ "न शीते तोयशुद्धिः स्यात्" इत्यत्र शीतशब्देन हेमन्तशिशिरवर्षाणां ग्रहणम्॥" "नोष्णकाले अग्निशोधनम्" इत्यत्र उष्णकालशब्देन ग्रीष्मशरदोः विधानलब्धस्यापि पुनर्निषेध आदरार्थः, प्रयोजनं तु वक्ष्यते॥ ९७॥

CHARCHA

1. सचैलम्—चेल वा चैल is garment or cloth. चैलेन सह वर्त्तमानं सचैलम्, बहु। तद् यथा तथा। Adv. qual स्नातम्॥





स्नातम्—Refers to स्नान of दिव्यग्राहिन्। obj. of आहूय (आ+ ह्वे+ल्यप्)।

2. कारयेत्—कृ+णिच्+लिङ्यात्। should cause to take. प्रयोजक कर्त्ता is प्राड्विवाकः। प्राड्विवाकः सचैलं स्नातं जनं सर्वदिव्यानि कारयेत्॥

98. who is entitled to which दिव्य ?

तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम्।
अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वा॥ ९८॥

Prose—स्त्रीबालवृद्धान्धब्राह्मणरोगिणां तुला (तुलादिव्यं) एव स्यात्। अग्निः (क्षत्रियस्य स्यात्), जलं (वैश्यस्य स्यात्); विषस्य सप्त यवाः (परिमाणाः) शूद्रस्य वा (एव) स्युः। [N. B.—अत्र श्लोके वा शब्दोवधारणार्थे व्यवहृतः]।

Beng. জাতি, বয়স ও অবস্থা নির্বিশেষে—স্ত্রীজাতিমাত্রেরই দোষশুদ্ধির জন্য তুলাদিব্য হইবে, বালকের এবং অশীতিপ্রায় বৃদ্ধের, দৃষ্টিহীন অন্ধের, গতিশক্তিবিহীন পঙ্গুর এবং ব্রাহ্মণ এবং রুগ্নেরও তুল্যদিব্যই হইবে। ক্ষত্রিয়ের অগ্নিদিব্য, বৈশ্যের জলদিব্য, এবং শূদ্রের দোষশুদ্ধির জন্য যব পরিমাণ সাতটী বিষখণ্ড দিব্য হিসাবে প্রযোজ্য। [যব is here যব পরিমাণ অর্থাৎ একটী বার্লির দানার ওজন]।

Eng. Divine oath for purity of the females, of boys (not exceeding 16 years); of the old (reaching about 80 years), of the blind, of the paralytic, of the Brahmins and the indisposed ones, will be with scales (तुलादिव्य);

fire will be used for Kshatriyas, water for the Vaishyas and seven bits of poison weighing a "yava" each for the sudras. (See Mita. for further details here). [ "yava" here is यवपरिमाण i. e, weight equal to one barley corn ].

Mita—अधिकारिव्यवस्थामाह—"स्त्री" स्त्रीमात्रं जातिवयोवस्थाविशेषानादरेण, "बाल" आषोड़शाद्वर्षात् जातिविशेषानादरेण, "वृद्धः" अशीतिकापरः, "अन्धः" नेत्रविकलः, "पङ्गुः" पादविकलः, "ब्राह्मणो" जातिमात्रम्, "रोगी" व्याधितः,—एतेषां शोधनार्थं "तुलैव" नियम्यते। "अग्निः" फालस्तप्तमाषश्च क्षत्रियस्य। जलमेव वैश्यस्य। [ वा-शब्दः अवधारणे ]। "विषस्य यवा" उक्त परिमाणाः "सप्तैव, शूद्रस्य" शोधनार्थं भवन्ति ॥ [ ब्राह्मणस्य तुलाविधानात् "शूद्रस्य यवाः सप्त विषस्य वा" इति विषविधानात्, "अग्निर्जलं वा" इति क्षत्रियवैश्यविषयमुक्तम्। एतदेव स्पष्टीकृतं पितामहेन—"ब्राह्मणस्य धटः ( तुला ) देयः, क्षत्रियस्य हुताशनः। वैश्यस्य सलिलं प्रोक्तं, विषं शूद्रस्य दापयेत् इति ] ॥ यत्तु स्त्र्यादीनां दिव्याभावस्मरणम्, "सव्रतानां भृशार्त्तानां व्याधितानां तपस्विनाम्। स्त्रीणाञ्च न भवेत् दिव्यं यदि धर्मस्त्वपेक्षितः" इति, तत् "रूच्या वा अन्यतरः कुर्यात्" इति विकल्पनिवृत्त्यर्थम् [ The statement of दिव्याभाव in case of females etc is to apply and nullify "रूच्या अन्यतरः कुर्यात्" as said before ]। एतदुक्तं भवति (the gist is this)—"अवष्टम्भाभियोगेषु स्त्र्यादीनामभियोक्तृत्वे अभियोज्यानामेव दिव्यम्, एतेषामभियोज्यत्वेपि अभियोक्तॄणामेव दिव्यम्। परस्पराभियोगे तु विकल्प एव। तत्रापि "तुलैव" इति कात्यायनवचनेन नियम्यते (कात्यायन restricts तुला for स्त्री etc in such cases) ॥ तथा महापातकादिशङ्काभियोगे स्त्र्यादीनां "तुलैव" इति एतच्च वचनं सर्वदिव्यसाधारणेषु मार्गशिरश्चैत्र-वैशाखेषु स्त्र्यादीनां सर्वदिव्यसमवधाने नियामकतया अर्थवत् ( thus is तुला restricted to स्त्री etc in सर्वदिव्य and in अग्रहायण चैत्र वैशाख ) ॥ न च सर्वकालं स्त्रीणां "तुलैव"। स्त्रीणां तु न विषं प्रोक्तं न चापि सलिलं स्मृतम्। धटकोशादिभिस्तासामन्तस्तत्त्वं विचारयेत्"—इति विषसलिलव्यतिरिक्तधटकोशाग्न्यादिभिः शुद्धिविधानात्। एवं बालादिष्वपि योजनीयम्। तथा ब्राह्मणादीनामपि न सार्वकालिकम्तुलादिनियमः, "सर्वेषामेव वर्णानां कोशशुद्धिर्विधीयते। सर्वाण्येतानि सर्वेषां ब्राह्मण्स्य विषं विना" इति पितामहस्मरणात्।



तस्मात् साधारणे काले बहुदिव्यसमवधाने तुलादिनियमार्थमेवेदं वचनम् [ So this वचन is to restrict तुलादिदिव्य in usual course of time—there being many varieties of दिव्य ]। कालान्तरे तु तत्तत्कालविहितं सर्वेषाम् (in other times दिव्य is of all, see below)। तथाहि—"वर्षास्वग्निरेव सर्वेषाम्। हेमन्तशिशिरयोस्तु क्षत्रियादित्रयाणमग्निविषयोर्विकल्पः। ब्राह्मणस्य त्वग्निरेव न कदाचिद्विषम्, "ब्राह्मणस्य विषं विना" इति प्रतिषेधात्। ग्रीष्मशरदोस्तु सलिलमेव। येषां तु व्याधिविशेषाणामग्न्यादिनिषेधः—"कुष्ठिनां वर्जयेदग्निं सलिलं श्वासकासिनाम्। पित्तश्लेष्मवतां नित्यं विषं तु परिवर्जयेत्" इति इति तेषामग्न्यादिकालेपि साधारणं तुलाद्येव दिव्यं भवति ॥ तथा "तोयमग्निर्विषं चैव दातव्यं बलिनांनृणाम्" इति वचनात् दुर्बलानांमपि सर्वथा विधिप्रतिषेधात् ऋतुकालानतिक्रमेण जातिवयोवस्थाश्रितानि दिव्यानि देयानि ॥ ९८ ॥

## CHARCHA

1. स्त्रीबाल &c—द्वन्द्व। सम्बन्धे षष्ठी। Rest easy—See Mita first portion.

99. तुला etc to be used as दिव्यप्रमाण in महाभियोग। So now महाभियोग is being stated.

नासहस्राद्धरेत्फालं न विषं न तुलां तथा ।
नृपार्थेष्वभिशापे च वहेयुः शुचयः सदा ॥ ९९ ॥

Prose—आसहस्रान न फालं विषं तथा तुलां (दिव्यं) न हरेत् (न कारयेत्)। नृपार्थेषु (राजद्रोहेषु) अभिशापे (महापातकाभियोगे) च शुचयः (प्रयताःसन्तः) सदा दिव्यानि वहेयुः (कुर्य्यात)।

Beng সহস্রমুদ্রার ন্যূন ব্যবহারে ফালদিব্য (কৃষিযন্ত্ররূপফাল যাহা ক্ষত্রিয়তে বিশেষ প্রযোজ্য), বিষগ্রহণ বা তুলাদিব্য করাইবে না। কিন্তু রাজদ্রোহে মহাপাতকাভিযোগে নিয়ত শুচি হইয়া তুলাদিদ্রব্য গ্রহণ করিবে। [অর্থাৎ গুরু অভিযোগেই এই সকল দিব্যদ্রব্য শপথে গ্রহণ করিবে]।

Eng. In suits involving less than thousand coins (or such valued objects), the oath with plough—share (फाल) [as is special of a Kshattriya], with poison (poison bits), and with scale should not be done (or taken); but in sedition against king or in grave sins only oaths with these should be done in a pure mood.

Mita—"महाभियोगष्वेतानि" (sl 95) इत्युक्तं, तत्र महाभियोगस्य यदपेक्षं महत्त्वं तदिदानीमाह—"पणसहस्रादर्वाक फालं विषं तुलां वा न कारयेत्"। मध्यवर्त्तिजलमपि न कारयेत्। यथोक्तं—तुलादीनि विषान्तानि गुरूष्वर्थेषु दापयेत्" ॥ अत्र कोषस्य अग्रहणं "कोशमल्पेपि दापयेत्" इत्यल्पाभियोगेऽपि तस्य स्मरणात् ॥ एतानि चत्वारि दिव्यानि पणसहस्राद् ऊर्ध्वमेव भवन्ति नार्वाक् इत्यर्थः ॥ [ ननु अर्वागपि अग्न्यादीनि पितामहेन दर्शितानि —"सहस्रे तु धटं (तुलां) दद्यात् सहस्रार्धेतथायसम् (फालम्)। अर्धस्यार्धे तु सलिलं तस्यार्धे तु विषं स्मृतम् इति सत्यम्। तत्र इयं व्यवस्था, यद



पातित्यं भवति तद्विषयं पितामहवचनम्; इतरद्रव्यविषयं योगीश्वरवचनम् इति। एतच्च वचनद्वयं स्तेयसाहसविषयम् अपह्नवे तु विशेषोदर्शितः कात्यायनेन—"दत्तस्यापह्नवो यत्र प्रमाणं तत्र कल्पयेत्। स्तेयसाहसयोर्दिव्यं स्वल्पेप्यर्थे प्रदापयेत् ॥ सर्वद्रव्यप्रमाणं ज्ञात्वाहेमप्रकल्पयेत्। हेमप्रमाणयुक्तं तुतदादिव्यं नियोजयेत् ॥ ज्ञात्वासंख्यां सुवर्णानां शतनाशे विषं स्मृतम्। अशीतेस्तुविनाशे वै दद्याच्च हुताशनम्। षष्ठ्यानाशे जलंदेयं चत्वारिंशति वै धटम्। विंशद्रव्यविनाशे तु कोशपानं विधीयते ॥ पञ्चाधिकस्यवानाशे वा ततो अर्द्धार्धस्य तन्दुलाः। ततोधार्थविनाशे हि स्मृशेत् पुत्रादिमस्तकान्। ततोधार्धविणाशे तु लौकिक्यः क्रियाः स्मृताः।—एवं विचारयन् राजा धर्मार्थाभ्यां न हीयते इति। (ज्ञात्वा संख्यां सुवर्णानां इत्यत्र सुवर्णशब्दस्य, "षोड़शमाषाः सुवर्णः" इत्युक्तपरिमाणवचनः। नाशशब्दश्चापह्नववचनः) ] ॥

"नासहस्राद्धरेत्फालम्"—इत्यत्र तु ताम्रिकपणसहस्रं वोधव्यम्। [Here in आसहस्रात् thousand copper-coin is meant] ॥

ननु नृपद्रोहे महापातके च एतानि दिव्यान्युक्तानि, तत्कथं 'नासहस्राद्धरेत् फालम्' इत्यत्राह—"नृपद्रोहेषु महापातकाभियोगे च सदा द्रव्यसंख्यामनपेक्ष्य एव एतानि दिव्यानि वहेयुः कुर्युः, उपवासादिना "शुचयः सन्तः" ॥ तथादेशविशेषोपि नारदेनोक्तः—सभाराजकुलद्वार- देवायतनचत्वरे। निधेयोनिश्चलः पूज्यः धूपमाल्यानुलेपनैः इति। निधेय=धटः (scale here)। व्यवस्था कात्यायनेन उक्ता—"इन्द्रस्थानेभिशस्तानां महापातकिनां नृणाम्। नृपद्रोहे प्रवृत्तानां राजद्वारे प्रयोजयेत्। प्रातिलोम्यप्रसूतानां दिव्यंदेयं चतुष्पथे अतोन्येषुसभामध्ये दिव्यं विदुर्बुधाः। अस्पृश्याधमदासानां म्लेच्छानां पापकारिणान्। प्रातिलोम्यप्रसूतानां निश्चयो न तु राजनि। तत्प्रसिद्धानि दिव्यानि संशये तेषु निर्दिशेत्" इति। ९९ ॥ इति दिव्यमातृका— (This is the divine canon or formula) ॥

## CHARCHA

1. आसहस्रात्=आ is here in the sense of मर्य्यादा or exclusion (cp तेन विना मर्य्यादा तत्सहितोभिविधिः)। सहस्रात् आ इति आसहस्रम् up to सहस्र—वा less than that, अव्ययीभाव by the rule "आङ् मर्य्यादाभिविध्योः"। Then आसहस्रात् is correct by the rule" नाव्यायीभावादतोऽम् त्वपञ्चम्याः"। And पञ्चमी is to be guided by ल्यब्लोपे कर्मणि-अधिकरणे च" thus आसहस्रम् अधिकृत्य= आसहस्रात्। or we construe here न असहस्रात्; अविद्यमानम् सहस्रं यत्र इति असहस्रम्। वा न सहस्रम् (सहस्रविषयकम्) इति असहस्रम्। तस्मात्। असहस्रम् अधिकृत्य=असहस्रात्॥ वा—आ and सहस्रात् are uncompounded; this is better for it emphasises सहस्रात् taking मर्य्यादायां आङ्योगे ५मी by the rule "पञ्चम्यपाङ्परिभिः"॥ फाल is specially meant for क्षत्रिय, it is plough-sharo (लाङ्ल—an आयस दिव्य)॥ See Mita,

2. हरेत्—हृ+लिङयात्। हृ is here वहनार्थक वा करणार्थक। See बहेयुः here in next line। वा धरेत् is the reading. To take oath or handling these.

100—102 The mode of procedure and मन्त्र in तुला दिव्य।

> तुलाधारणविद्भिरभियुक्तस्तुलाश्रितः।
> प्रतिमानसमीभूतो रेखां कृत्वावतारितः॥ १००॥
> "त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता।
> तत् सत्यं वद कल्याणि, संशयान्मां विमोचय॥ १०१॥
> यद्यस्मि पापकृन्मातस्ततो मां त्वमधोनय।
> शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत्"॥ १०२॥



Prose—तुलाश्रितः अभियुक्तः (अभियोक्ता वा) तुलाधारणविद्भिः प्रतिमान-समीभूतः रेखां कृत्वा अवतारितः (सन्) तुलां (तुलायन्त्रं) इति (अनेन प्रकारेण) अभिमन्त्रयेत्—"हे तुले त्वं पुरा देवैःविनिर्मिता सत्यधामासि। तत् हे कल्याणि, सत्यं वद, मां संशयात् विमोचय, हे मातः यदि पापकृत् अस्मि ततो माम् अधोनय, शुद्धश्चेत् मामूर्द्धं गमय"।

Beng—অভিযুক্তব্যক্তি (অথবা অভিযোক্তা), তুলাযন্ত্র নির্মাণ ও ধারণ বিষয়ে অভিজ্ঞ ব্যক্তিদ্বারাকৃত তুলাযন্ত্রে মৃদাদিদ্বারা নিজেকে ওজন করাইয়া দুই দিকই সমান ওজন করাইয়া মধ্যভাগে রেখা দিয়া নামিয়া যাইবে। সে পরে এইভাবে তুলাযন্ত্রকে অভিমন্ত্রিত করিবে—" হে তুলে, তুমি পুরা দেবগণ কর্ত্তৃক নির্মিতা, তুমি 'সত্যসাক্ষিণী, হে কল্যাণি;' সত্য বলিয়া, আমাকে সংশয় হইতে মোচন কর; হে মাতঃ যদি আমি পাপী (দোষী) হই তবে আমাকে নীচে নামাইয়া দিবে (অর্থাৎ রেখা হইতে, নীচের দিকে নামাইবে। আমি যদি দোষ শূন্য হই তবে আমার দিকটা উর্দ্ধে তুলিয়া দিবে। [এই মন্ত্রোচ্চারণ করিয়া তুলা যন্ত্রের যেদিকে মৃদাদি আছে, তার অপরদিকে উঠিবে। যদি পূর্বকৃত সমান ওজন হইলেও, অভিযুক্ত আবার আরোহণ করিলে সে দিকটা নামে, তবে সে দোষী. সে দিকটা উঠিলে সে নির্দোষী]।

Eng.—Having made a scale by some specialist therein, and having made both sides of the scale equal (with mud etc.) himself being on one side, the accused or the complainant will descend down marking the scale and then utter this mantra thus—' He scale, you made by gods in days of yore, are the resort of truth; Ho auspicious one, do tell the truth in the matter and deliver me out of

this ordeal; Ho mother, if I am guilty then let the scale go down on the other side (though it was equal on both sides erelong), and if I am free of all guilt then let the side to be occupied by me go up

Mita—एवं सर्वदिव्योपयोगिनां दिव्यमातृकामभिधाय इदानीं धटादि (तुलादि) दिव्यानां प्रयोगमाह—"तुलाया धारणं तोलनं ये विदन्ति" "सुवर्णकारप्रभृतयस्तैः प्रतिमानेन मृदादिना समीभूतः" समीकृतः "तुलामाश्रितः अधिरूढः अभियुक्तः" अभियोक्ता वा दिव्यकारी "रेखांकृत्वा" येन सन्निवेशेन प्रतिमानसमीकरणदशायां शिक्यतले अवस्थितस्तस्मिन् पाण्डुलेखेन अङ्कयित्वा "अवतारितः, तुलामभिमन्त्रयेत्" प्रार्थयेत् अनेन मन्त्रेण—"हेतुले, त्वं सत्यस्य स्थानमसि, पुरा आदिसृष्टौ देवैः हिरण्यगर्भप्रभृतिभिः विनिर्मिता उत्पादिता। तस्मात् त्वं सत्यं सन्दिग्धार्थस्य स्वरूपं बद दर्शय, हे कल्याणि शोभने, अस्मात् संशयात मां विमोचय। हे मातः, यद्यहं पापकृत् असत्यवादी अस्मि ततो मां त्वमधो नय, अथ शुद्धः सत्यवादी अस्मिततो मामऊर्ध्वं गमय" इति ॥

प्राड्विवाकस्य तुलाभिमन्त्रणमन्त्राः स्मृत्यन्तरोक्ताः, अयं तु दिव्यकारिणः। जयपराजयलक्षणं तु मन्त्रलिङ्गादेवावगम्यते इति न पृथगुक्तम् ॥ घटनिर्माणं पुनरारोहणाद्यर्थसिद्धमेव पितामहनारदादिभिः स्पष्टीकृतम्। तद्यथा—'छित्त्वा तु यज्ञियं वृक्षं यूपवन्मन्त्रपूर्वकम। प्रणम्य लोकपालेभ्यस्तुला कार्या मनीषिभिः॥ मन्त्रः सौम्यो वानस्पत्यश्छेदने जप्य एव च। चतुरस्रा तुला कार्या दृढा ऋज्वी तथैव च। कटकानि च देयानि त्रिषु स्थानेषु चार्थवत्। चतुर्हस्ता तुला कार्या पादौ चोपरि तत्समौ॥ अन्तरं तु तयोर्हस्तौ भवेदध्यर्धमेव वा। हस्तद्वयं निखेयं तु पादयोरुभयोरपि। तोरणे च तथा कार्ये पार्श्वयोरुभयोरपि। धटादुच्चतरे स्यातां नित्यं दशभिरङ्गुलैः॥ अवलम्बौ च कर्तव्यौ तोरणाभ्यामधोमुखौ। मृन्मयौ सूत्रसंबद्धौ धटमस्तक-



चुम्बिनौ॥ प्राङ्मुखान्कल्पयेद्दर्भाञ्शिक्ययोरुभयोरपि। पश्चिमे तोलयेत्कर्तॄन-न्यस्मिन्मृत्तिकां शुभाम्॥ पिटकं पूरयेत्तस्मिन्निष्टकाग्रावपांसुभिः। अत्र च मृत्तिकेष्टकाग्रावपांसूनां विकल्पः। 'परीक्षका नियोक्तव्यास्तुलामानविशारदाः॥ वणिजो हेमकाराश्च कांस्यकारास्तथैव च। कार्यः परीक्षकैर्नित्यमवलम्बसमो धटः॥ उदकं च प्रदातव्यं धटस्योपरि पण्डितैः। यस्मिन्न प्लवते तोयं स विज्ञेयः समी धटः॥ तोलयित्वा पूर्वं पश्चात्तमवतार्य तु। धटं तु कारयेन्नित्यं पताकाध्वजशोभितम्॥ तत आवाहयेद्देवान्विधिनानेन मन्त्रवित्। वादित्र-तूर्यघोषैश्च गन्धमाल्यानुलेपनैः॥ प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत्। एह्येहि भगवन्धर्म अस्मिन्दिव्ये समाविश॥ सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः। आवाह्य तु धटे धर्मं पश्चादङ्गानि विन्यसेत्॥ इन्द्रं पूर्वे तु संस्थाप्य प्रेतेशं दक्षिणे तथा। वरुणं पश्चिमे भागे कुवेरं चोत्तरे तथा॥ अग्नयादिलोकपालांश्च कोणभागेषु विन्यसेत्। इन्द्रःपीतो यमः श्यामो वरुणः स्फटिकप्रभः॥ कुवेरस्तु सुवर्णाभो वह्निश्चापि सुवर्णाभः। तथैव निरृतिः श्यामो वायुर्धूम्रः प्रशस्यते॥ ईशानस्तु भवेद्रक्त एवं ध्यायेत्क्रमादिमान्। इन्द्रस्य दक्षिणे पार्श्वे वसूनाराधयेद्बुधः॥ धरो ध्रुवस्तथा सोम आपश्चैवानि-लोऽनलः। प्रत्युषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः॥ देवेशेशानयोर्मध्ये आदित्यानां तथा गणम्। धाताऽर्यमा च मित्रश्च वरुणोंऽशुर्भगस्तथा॥ इन्द्रो विवस्वान्पूषा च पर्जन्यो दशमः स्मृतः। ततस्त्वष्टा ततो विष्णुरजधन्यो जधन्यजः॥ इत्येते द्वादशादित्या नामभिः परिकीर्तिताः। अग्नेः पश्चिमभागे तु रुद्राणामयनं विदुः॥ वीरभद्रश्च शम्भुश्च गिरिश्च महायशाः। अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः॥ भुवनाधीश्वरश्चैव कपाली च विशांपतिः। स्थाणुर्भवश्च भगवान् रुद्रास्त्वेकादश स्मृताः॥ प्रेतेशरक्षोमध्ये तु मातृस्थानं प्रकल्पयेत्। ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा॥ वाराही चैव माहेन्द्री चामुण्डा गणसंयुता। निरृतेरुत्तरे भागे गणेशायतनं विदुः॥ वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते। पवनः स्पर्शनो वायुरनिलो मारुतस्तथा॥ प्राणः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्तिताः। धटस्योत्तरभागे तु दुर्गामावाहये-

द्बुधः ॥ एतासां देवतानां तु स्वनाम्ना पूजनं विदुः। भूषावसानं धर्माय दत्त्वा चार्घ्यादिकं क्रमात् ॥ अर्घ्यादिपश्चादङ्गानां भूषान्तमुपकल्पयेत्। गन्धादिकां नैवेद्यान्तां परिचर्यां प्रकल्पयेत् ॥' इति। अत्र च तुलां पताकाध्वजालंकृतां विधाय तस्यां 'एह्येही'ति मन्त्रेण धर्ममावाह्य 'धर्मायार्घ्यं कल्पयामि नमः' इत्यादिना प्रयोगेणार्घ्यपाद्याचमनीयमधुपर्काचमनीयस्नानवस्त्रयज्ञोपवीताचमनीय-मुकुटकटकादिभूषान्तं दत्त्वा इन्द्रादीनां दुर्गान्तानां प्रणवाद्यैः स्वनामभिश्चतुर्थ्य-न्तैर्नमोन्तैरर्घ्यादिभूषान्तं पदार्थानुसमयेन दत्त्वा इन्द्रादीनां गन्धादीनि पूर्ववद्दद्यात्। गन्धपुष्पाणि च घटपूजायां रक्तानि कार्याणि। यथाह नारदः— 'रक्तैर्गन्धैश्च माल्यैश्च दध्यपूपाक्षतादिभिः। अर्चयेत्तु घटं पूर्वं ततः शिष्टांस्तु पूजयेत् ॥' इति। इन्द्रादीनां तु विशेषानभिधानाद्यथालाभं रक्तैरन्यैर्वा पूजनमिति पूजाक्रमः ॥ एतच्च सर्वं प्राड्विवाकः कुर्यात्। यथोक्तम्— 'प्राड्विवाकस्ततो विप्रो वेदवेदाङ्गपारगः। श्रुतवृत्तोपसंपन्नः शान्तचित्तो विमत्सरः ॥ सत्यसंधः शुचिर्दक्षः सर्वप्राणिहिते रतः। उपोषितः शुद्धवासाः कृतदन्तानुधावनः ॥ सर्वासां देवतानां च पूजां कुर्याद्यथाविधि ॥' तथा ऋत्विग्भिश्चतुर्भिश्चतसृषु दिक्षु लौकिकाग्नौ होमः कार्यः। यथाह—'चतुर्दिक्षु तथा होमः कर्तव्यो वेदपारगैः। आज्येन हविषा चैव समिद्भिर्होमसाधनैः ॥ सावित्र्या प्रणवेनाथ स्वाहान्तेनैव होमयेत् ॥' प्रणवादिकां गायत्रीमुच्चार्य पुनः स्वाहाकारान्तं प्रणवमुच्चार्य समिदाज्यचरून्प्रत्येकमष्टोत्तरशतं जुहुयादित्यर्थः'। एवं हवनान्तां देवपूजां विधायानन्तरमभियुक्तमर्थं वक्ष्यमाणमन्त्रसहितं पत्रे लिखित्वा तत्पत्रं शोध्य शिरोगतं कुर्यात्। यथाह—'यदर्थमभियुक्तः स्याल्लिखित्वा तं तु पत्रके। मन्त्रेणानेन सहितं तत्कार्यं तु शिरोगतम् ॥' मन्त्रश्चायम्— 'आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च। अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥' इति। एतच्च धर्मावाहनादि शिरसि पत्रारोपणान्तमनुष्ठानकाण्डं सर्वदिव्यसाधारणम्। यथोक्तम्—'इमं मन्त्रविधिं कृत्स्नं सर्वदिव्येषु योजयेत्। आवाहनं च देवानां तथैव परिकल्पयेत् ॥' इति। अनन्तरं प्राड्विवाको घटमामन्त्रयेच्चैव विधिनानेन शास्त्रवित्' इति



स्मरणात्। मन्त्राश्च दर्शिताः—'त्वं घट ! ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम्। धकाराद्धर्ममूर्तिस्त्वं टकारात्कुटिलं नरम् ॥ धृतो भावयसे यस्माद्घटस्तेनाभिधीयते। त्वं वेत्सि सर्वजन्तूनां पापानि सुकृतानि च ॥ त्वमेव देव ! जानीषे न विदुर्यानि मानवाः। व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ॥ तदेनं संशयाद-स्माद्धर्मतस्त्रातुमर्हसि ॥' इति। शोध्यस्तु 'त्वं तुले' इत्यादिना पूर्वोक्तेन मन्त्रेण तुलामामन्त्रयेत्। अनन्तरं प्राड्विवाकः शिरोगतपत्रकं शोध्यं यथास्थानं निवेश्य च घटमारोपयति; 'पुनरारोपयेत्तस्मिञ्छिरोवस्थितपत्रकम्' इति स्मरणात्। आरोपितं च विनाडीपञ्चकं यावत्तथैवावस्थापयेत्। तत्कालपरीक्षां च ज्योतिःशास्त्राभिज्ञः कुर्यात्; 'ज्योतिर्विद्ब्राह्मणः श्रेष्ठः कुर्यात्कालपरीक्षणम्। विनाड्यः पञ्च विज्ञेयाः परीक्षाकालकोविदैः ॥' इति स्मरणात्। दशगुर्व-क्षरोच्चारणकालः प्राणः। षट् प्राणा विनाडी। उक्तं च—'दशगुरुवर्णः प्राणः षट् प्राणाः स्याद्विनाडिका तासाम्। षष्ट्या घटी घटीनां षष्ट्याहःखाग्नि-भिर्दिनैर्मासः ॥' इति। तस्मिंश्च काले शुद्ध्यशुद्धिपरीक्षणार्थं शुचयः पुरुषा राज्ञा नियोक्तव्याः। ते च शुद्ध्यशुद्धी कथयन्ति। यथोक्तं पितामहेन— 'साक्षिणो ब्राह्मणाः श्रेष्ठा यथादृष्टार्थवादिनः। ज्ञानिनः शुचयोऽलुब्धा नियोक्तव्या नृपेण तु ॥ शंसन्ति साक्षिणः श्रेष्ठा शुद्ध्यशुद्धी नृपे तदा ॥' इति। शुद्ध्यशुद्धिनिर्णयकारणं चोक्तम् (नारदः १।२८३)—'तुलितो यदि वर्धेत स शुद्धः स्यान्न संशयः। समो वा हीयमानो वा न स शुद्धो भवेन्नरः ॥' इति। यत्तु पितामहवचनम्—'अल्पदोषः समो ज्ञेयो बहुदोषस्तु हीयते' इति, तत्र यद्यप्यभियुक्तस्यार्थस्याल्पत्वं बहुत्वं च न दिव्येनावधारयितुं शक्यते तथापि सकृदमतिपूर्वत्वेनाल्पत्वमसकृन्मतिपूर्वत्वेन च महत्त्वमिति दण्डप्रायश्चित्ताल्पत्व-महत्त्वमवधार्यते। यदा चानुपलक्ष्यमाणदृष्टकारण एव कक्षादीनां छेदो भङ्गो वा भवति तदाप्यशुद्धिरेव—(नारदः १।२८४) 'कक्षच्छेदे तुलाभङ्गे घटकर्कटयोस्तथा। रज्जुच्छेदेऽक्षभङ्गे च तथैवाशुद्धिमादिशेत् ॥' इति स्मरणात्। कक्षं शिक्यतलम्। कर्कटौ तुलान्तयोः शिक्याधारावीषद्वक्रा-यसकीलकौ कर्कटशृङ्गसंनिभौ। अक्षः पादस्तम्भयोरुपरि निविष्टस्तुलाधारपट्टः।

यदा तु दृश्यमानकारणक एषां भङ्गस्तदा पुनरारोपयेत्; 'शिक्यादिच्छेदभङ्गेषु पुनरारोपयेन्नरम्' इति स्मरणात्। ततश्च – 'ऋत्विक्पुरोहिताचार्यान्दक्षिणाभिश्च तोषयेत्। एवं कारयिता राजा भुक्त्वा भोगान्मनोरमान्॥ महतीं कीर्तिमाप्नोति ब्रह्मभूयाय कल्पते॥' यदा तूक्तलक्षणं धटं तथैव स्थापयितुमिच्छति तदा वायसाद्युपघातनिरासार्थं कपाटादि सहितां शालां कुर्यात्; 'विशालामुन्नतां शुभ्रां धटशालां तु कारयेत्। यत्रस्था नोपहन्येत श्वभिश्चण्डालवायसैः॥ तत्रैव लोकपालादींस्सर्वान्दिक्षु निवेशयेत्। त्रिसन्ध्यं पूजयेदेतान्गन्धमाल्यानुलेपनैः॥ कपाटबीजसंयुक्तां परिचारकरक्षिताम्। मृत्पानीयाग्निमंयुक्तामशून्यां कारयेन्नृपः॥' इति स्मरणात्। बीजानि यवव्रीह्यादीनि॥ १००-१०२॥

इति धटविधिः (=तुलादिव्यविधिः)॥

## CHARCHA

1 तुलाधारणविद्भिः—अनुक्तकर्त्तरि इया, कर्त्ता of समीभूतः and अवतारितः। In समीभूतः we have अन्तर्भावितण्यर्थ, so समीभूतः means समीभावितः making the two sides of the scale equal—on one side अभियुक्तः वा अभियोक्ता will stand, and the other side will be made or placed equal by mud etc So Mita says "समीभूतः समीकृतः"।

2. सत्यधामा—सत्यस्य धाम (स्थानम्, आधार इत्यर्थश्च)॥ You are also कल्याणि and माता, so do justice by declaring the truth.

3. अभिमन्त्रयेत्—मन्त्र is in usual course is चुरादि आत्मनेपदी। So the proper form should have been अभिमन्त्रयेत। परस्मैपद use is आर्ष here This मन्त्र is for the दिव्यकारिन् only. In दिव्यग्रहण, प्राड्विवाक will also do the needful of पूजा, होम, होमान्ते मस्तके प्रतिज्ञापत्र स्थापन &c.—See Mita here & ahead.



103. The mode and मन्त्र in अग्निदिव्य ग्रहण।

करौ विमृदितव्रीहेर्लक्षयित्वा ततो न्यसेत्।
सप्ताश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत्॥ १०३॥

त्वमग्ने सर्वभूतानामन्तश्चरसि पावक।
साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम॥ १०४॥

Prose—विमृदितव्रीहेः (अभियुक्तस्य, अभियोक्तुर्वा) करौ लक्षयित्वा (अलक्तादिभिः तिलकालकादिचिह्नस्थानम् अङ्कयित्वा) ततः सप्त अश्वत्थस्य पत्राणि (करे न्यसेत्), तावतसूत्रेण (सप्त पृथक् सूत्रैः) वेष्टयेत्। (पश्चात) हे अग्ने, त्वं सर्वभूतानाम्‌अन्तः चरसि, त्वं हे पावक (शुद्धिहेतो), हे कवे (क्रान्तदर्शिन्) साक्षिवत् (मानुषसाक्षिवत्) पापपुण्येभ्यो (पापपुण्यमधिकृत्य) सत्यं ब्रूहि इति अभिमन्त्रयेत।

Beng—দিবা গ্রহণকারী (অভিযুক্ত বা অভিযোক্তা) দুইহাতে ধান্য-মর্দিত করিয়া করতলের তিলচিহ্নাদিস্থান অলক্তাদিদাগদ্বারা শুভভাবে অঙ্কিত করিয়া, তাহাতে সাতটি অশ্বত্থপাতা দিয়া সর্বসমেত সাত সাত সূতা দিয়া তাহা বেষ্টন করিবে। পরে অগ্নির অভিমন্ত্রণ করিবে এইভাবে —হে অগ্নি, তুমি সকল জীবের অন্তরে অন্নপানাদির পাচকরূপে আছে। হে পবিত্র শোধক, হে ক্রান্তদর্শিন, তুমি সাধারণ সাক্ষীর মত—পাপ পুণ্য বিষয়ে সত্য প্রকাশ কর। (See মিতাক্ষরা)

Eng—The person taking oath with respect to fire should first pound paddy by his palm of hands, (or rub paddy by his hand-palms) then mark its dark-spots of warts etc. beautifully with lac-dye and then cover this

palm with seven Banian leaves, tying each with seven threads along with the palm ; he then utters this mantra "Ho fire you are within all creatures, you are a purifyer, you know or see everything, you just tell or disclose the truth with respect to sin or merit about me ( See Mita. )

Mita—इदानीं क्रमप्राप्तमग्निदिव्यमाह--दिव्यमातृकोक्त—साधारणधर्मेषु सत्सु तुलाविधानोक्तावाहनादिशिरः पत्रारोपणान्ते च विध्यन्ते सति अयमग्निविधौ विशेषः। "विमृदितव्रीहेः" विमृदिता विघर्षिता व्रीहयः कराभ्यां येनासौ= 'विमृदितव्रीहिः", तस्य "करौलक्षयित्वा" तिलकादि-व्रणकिनादिस्थानेषु अलक्तकरसादिना अङ्कयित्वा। यथाह नारदः—"हस्तक्षतेषु-सर्वेषु कृर्य्यात् हंसपदानितु" इति। "अनन्तरं सप्त अश्वत्थस्य पत्रानि हस्तयोरञ्जलीकृतयोर्न्यसेत्"— "पत्रैरञ्जलिमापूर्य्य आश्वत्थैः सप्तभिः समैः" इति स्मरणात्। तानि च हस्तसहितानि "सूत्रेण तावद् वेष्ठयेत्"। यावन्ति अश्वत्थपर्णानि सप्तकृत्वः वेष्टयेदित्यर्थः। ( सूत्राणि च सप्त शुक्लानि भवन्ति—"वेष्टयीत सितैर्हस्तौ सप्तभिः सप्ततन्तुभिः" इति नारदवचनात्। तथा सप्त शमीपत्राणि-सप्तैव दूर्वापत्राणि चाक्षतांश्च दध्यक्तान् अक्षतांश्च अश्वत्थपत्राणामुपरि विन्यस्येत— "सप्तपिप्पलपत्राणि शमीपत्रान् जक्षाक्षतान्। दूर्वायाः सप्तपत्राणि दध्यक्षांश्चाक्षतान् न्यसेत" इति स्मरणात्। तथा कुसुमानि च विन्यसेत्। "सप्त पिप्पलपत्राणि अक्षतान् सुमनसोदधि। हस्तयोर्निक्षिपेत् तत्र सूत्रेणवेष्टनं तथा" इति पितामहवचनात्। सुमनसः पुष्पाणि। यदपि स्मरणम्—" अयस्तप्तं तु पाणिभ्यामर्कपत्रैस्तु सप्तभिः अन्तर्हितं हवन् शुद्धस्तु अदग्धः सप्तमे पदे" इति – तदप्यश्वत्थपत्राभावे अर्कपत्रविषयं वेदितव्यम्। अश्वत्थपत्राणां पितामहप्रशंसा-वचनेन मुख्यत्वावगमात—"पिप्पलाज्जायते वह्निः पिप्पलो वृक्षराट् स्मृतः। अतस्तस्य पत्राणि हस्तयोर्विन्यसेद्बुधः" इति ॥ १०३ ॥

कर्त्तुरग्निमन्त्रणमाह—"हे अग्ने, त्वं सर्वभूतानां जरायुजाण्डजस्वेदज-उद्भिज्जानाम् अन्तःशरीराभ्यन्तरे चरसि" उपयुक्तान्नपानादीनां पाचकत्वेन वर्त्तसे।



"हे पावक शुद्धिहेतो, हे कवे क्रान्तदर्शिन, साक्षिवत् पुण्य पापेभ्यः सत्यं ब्रूहि [ पुण्यपापेभ्यः" इतिल्यब्लोपे ५मी। पुण्यपापान्यवेक्ष्य सत्यं ब्रूहि दर्शय इत्यर्थः। [ अयःपिण्डे त्रिभिस्तापैः सन्तप्ते संदंशेन पुरत आनीते कर्त्ता पश्चिममण्डले प्राङ्मुखस्तिष्ठन् अनेन मन्त्रेणाग्निं अभिमन्त्रयेत्। यथाह नारदः— "अग्निवर्णमयः पिण्डं सस्फुलिङ्गं सरञ्जितम्। तापे तृतीये सन्ताप्य ब्रूयात् सत्य पुरस्कृतम्"। इति। [ अस्यार्थः—लोहशुद्धयर्थं सुतप्तं लोहपिण्डमुदके निक्षिप्य पुनः सन्ताप्य उदके निक्षिप्य तृतीये तापे संताप्य संदंशेन गृहीत्वा पुरत आनीते सत्यपुरस्कृतं सत्यं शब्दयुक्तं "त्वमग्नेसर्वभूतानाम्" इत्यादि मन्त्रं कर्त्ताब्रूयादिति। प्राड्विवाकस्तु मण्डलभूभागात दक्षिणप्रदेशे लोकिकमग्निमुपसमाधाय "अग्नये पावकाय स्वाहा" इत्याज्येन अष्टोत्तरशतवारं जुहुयात्। "शान्त्यर्थं जुहुयादग्नौ घृतमष्टोत्तरशतम्" इति स्मरणात्। हुत्वा च तस्मिन्नग्नौ अयःपिण्डं प्रक्षिप्य तस्मिन् ताप्यमाने धर्मावाहनादिहवनान्तं पूर्वोक्तं विधिं विधाय तृतीये तापे वर्त्तमाने अयःपिण्डस्थमग्निमेभिर्मन्त्रैरभिमन्त्रयेत्— "त्वमग्ने वेदाश्चत्वार त्वञ्च यज्ञेषुहूयसे। त्वं मुखं सर्ववेदानां त्वं मुखं ब्रह्मवादिनाम्। जठरस्थो हि भूतानां ततोवेत्सि शुभाशुभम्। पापं पुनासि वै यस्मात् तस्मात् पावक उच्यसे। पापेषु दर्शयात्मानमर्चिष्मान् भव पावक। अथवा शुद्ध भावेषु शीतो भव हुताशन॥ त्वमग्ने सर्वदेवानामन्तश्चरसि साक्षिवत्। त्वमेवदेव जानीषे न विदुर्यानि मानुषाः। व्यवहाराभिशस्तोयं मानुषः शुद्धिमिच्छति। तदेनं संशयात् अस्मात धर्मतः त्रातुमर्हसि।" इति ] ॥ १०४ ॥

CHARCHA

1. विमृदितव्रीहेः—Adj. used substantively, विमृदितव्रीहेः जनस्य करौ लक्षयित्वा। लक्षयित्वा here means तिलकालकादिस्थानम् अलक्तकरसादिना अङ्कयित्वा। This is an auspicious function or rite.

2. पुण्यपापेभ्यः—ल्यब्लोपे ५मी। पुण्यपापम् अधिकृत्य वा पुण्यपापम् अवेक्ष्य as मिताक्षरा has it, Or we may say—पुण्यपापं ज्ञापयितुं

दर्शयितुं सत्यं ब्रूहि। कर्मणि ४र्थी by the rule "क्रियार्थोपपदस्य च कर्मणि स्थानिनः"।

105-107. Further details of अग्निदिव्य by taking अग्निदग्ध लौहपिण्ड on अश्वत्थपत्रावृत शोधित हस्ततल।

तस्येत्युक्तवतोलौहं पञ्चाशत्पलिकं समम्।
अग्निवर्णं न्यसेत् पिण्डं हस्तयोरुभयोरपि ॥ १०५ ॥

स तमादाय सप्तैव मन्डलानि शनैर्व्रजेत्
षोड़शाङ्गुलकं ज्ञेयं मण्डलं तावदन्तरम् ॥ १०६ ॥

मुक्त्वाग्निं मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात्।
अन्तरा पतिते पिन्डे सन्देहे वा पुनर्हरेत् ॥ १०७ ॥

Prose—तस्य (दिव्यकर्त्तुः) इति ("त्वमग्ने सर्वभूतानामन्तश्चरसि" इति मन्त्रम्) उक्तवतः, पञ्चाशत्पलिकं (तत्परिमितं) समम् (गोलं) अग्निवर्णं लौहं उभयोः हस्तयोः (अश्वत्थपत्रवेष्टितयोः हस्तयोः) उपरि न्यसेत। स तमादाय सप्त एव मण्डलानि (प्रदत्तानि मण्डलानि) शनैः व्रजेत। मण्डलञ्च षोड़शाङ्गुलं स्यात्, प्रत्येकं तावदन्तरं च स्यात। (सप्तमण्डलानि गत्वा) अग्निं (तादृशं गोललौहं) मुक्त्वा मृदितव्रीहिः (दिव्यकर्त्ता) अदग्धश्चेत् तदा शुद्धिमाप्नुयात्। अन्तरा (मध्ये) पिण्डे (अग्निदग्धे अग्निवर्णे लौहपिण्डे) पतिते सति, सन्देहे (दग्धत्वे अदग्धत्वे वा सन्देहे सति) वा पुनः हरेत् (एवं कुर्यात्)। (see Mitak).

Beng. অতঃপর দিব্যগ্রহণকারী ব্যক্তি "ত্বমগ্নে" এই মন্ত্র উচ্চারণ করিয়া গোল সন্তপ্ত অগ্নিবর্ণ লৌহপিণ্ড অশ্বত্থপত্রবেষ্টিত দুই করতলের উপর স্থাপন করিবে। ঐ তপ্ত লৌহপিণ্ড লইয়া অঙ্কিত বিশুদ্ধ সাতটি মণ্ডলের উপর দিয়া ধীরে ধীরে যাইতে থাকিবে।





মণ্ডলগুলি আড়ে ও পাশে ষোল আঙ্গুল পরিমাণ হইবে এবং ষোল আঙ্গুল পরিমাণ পর পর স্থাপিত থাকিবে। সপ্তমমণ্ডল পার হইয়া অষ্টমমণ্ডলে দাঁড়াইবে এবং নবমমণ্ডলে তপ্তলৌহপিণ্ড ফেলিয়া আবার হাতে ধান্যমর্দন করিয়া দেখিবে হাত পুড়িয়াছে কিনা। না পুড়িলে দিব্যগ্রহণকারী নির্দোষ জানিবে। হাত দগ্ধ হইলে দোষী সাব্যস্ত হইবে। যদি বা হস্তকম্পন হেতু লৌহপিণ্ড কোনকারণে সপ্তমমণ্ডল পার হইবার পূর্বেই মাটিতে পড়িয়া যায়, বা দগ্ধাদগ্ধ বিষয়ে সন্দেহ থাকে তবে পুনরায় অগ্নিদগ্ধ লৌহপিণ্ড লইয়া আবার এইরূপ করিবে।

Eng. Then having uttered the mantra ("त्वमग्ने—" as in sl. 104), the divine oath-taker shall place a round red-hot iron ball on his both palms covered by banian leaves (already taken in a purified way); then with this hot iron ball he will slowly pass over seven auspicious square circles as of sixteen finger—measure each, placed at such distance; then having passed over these circles he will let the hot iron ball fall down, then having rubbed the palms with paddy if found not-burnt then he is free of guilt; if found burnt then he is guilty; if somehow the hot iron ball slips off in the midway, or if there is doubt about burning or not burning of plams, then let this procedure be followed a second time. (See Mitak. sl. 107 last para for further details here.)

Mita—अपिच "तस्य कर्त्तुरित्युक्तवतः", "त्वमग्ने सर्वभूतानाम्" इत्यादि मन्त्रैरभिमन्त्रणं कृतवतो "लौहं" लोहविकारं पिण्डं "पञ्चाशत्पलिकं"

पञ्चाशत्पलपरिमितं "समम्" अस्त्ररहितम् (सर्वतश्च समं वृत्तं श्लक्ष्णं तथाष्टाङ्गुलायामम्—"अस्त्रहीनं समं कृत्वा अष्टाङ्गुलमयोमयम्। पिण्डं तु स्थापयेदग्नौ पञ्चाशत्पलिकं समम्" इति पितामहस्मरणात्)—"अग्निवर्णमग्नि-सदृशम् उभयोर्हस्तयोः अश्वत्थदधिदूर्वाधन्तरितयोः न्यसेत्" निक्षिपेत् प्राड्विवाकः ॥ १०५ ॥

ततः किंकुर्य्यादित्यत आह—"स पुरुषः तं तप्तलौहपिण्डम् अञ्जलिना गृहीत्वा सप्तमण्डलानि शनैः व्रजेत्" (एवकारेण मण्डलेष्वेव पदन्यासं मण्डलानतिक्रमणं च दर्शयति। यथाह पितामहः—"न मण्डलमतिक्रामेत् नाप्यर्वाक् स्थापयेत् पदम्" इति)॥ "सप्तैव मण्डलानि शनैर्व्रजेत्" इत्युक्तं तत्र एकैकं मण्डलं किंप्रमाणिकं मण्डलयोरन्तरं च कियत्प्रमाणकम् इत्यत आह—षोडश अङ्गुलानि यस्य तत् "षोडशाङ्गुलकम्"। षोड़शाङ्गुलप्रमाणं मण्डलं बोध्यव्यम्। मण्डलयोरन्तरं—मध्यं च तावदेव षोड़शाङ्गुलकम् एव ॥ "सप्तमण्डलानि व्रजेत" इति वदता प्रथममवस्थानमण्डलमेकमुक्तम्। अतश्चाष्टमण्डलानि षोड़शाङ्गुलकानि मण्डलानामन्तरानि मध्यानि इत्यर्थः। मण्डलान्तराणि च सप्त तावन्त प्रमाणानि। एतदेव नारदेन परिसंख्याय उक्तम्—"द्वात्रिंशदङ्गुलं प्राहुर्मण्डलान् मण्डलान्तरम्। अष्टभिर्मण्डलैरेवम् अङ्गुलानां शतद्वयम्। चत्वारिंशत् समधिकं भूमेरङ्गुलमानतः" इति। [अयमर्थः—अवस्थानमण्डलात् षोड़शाङ्गुलात् मण्डलान्तरम्, अन्यत् मण्डलम्। द्वितीयाद्येकमेकं द्वात्रिंशदङ्गुलं सान्तरालम्, तद्वेव अवस्थानमण्डलं षोडशाङ्गुलं। गन्तव्यानि च सप्तमण्डलानि सान्तरालानि द्वात्रिंशदङ्गुलानि। एवमष्टभिर्मण्डलैश्चत्वा-रिंशदधिकं शतद्वयं भूमेरङ्गुलमानतः अङ्गुलमानम् इति सार्वविभक्तिकस्तसिः। अस्मिन् पक्षे—अवस्थानमण्डलं षोड़शाङ्गुलं विधाय द्वात्रिंशदङ्गुलप्रमाणानां सप्तानां सान्तरालमण्डलभूभागानाम् एकमेकं भूभागं द्विधाविभज्य अन्तरालभूभागान् षोड़शाङ्गुलप्रमाणान् विहाय मण्डलभूभागेषु द्विषोड़शाङ्गुल-प्रमाणेषु गन्तृपदप्रमाणानि सप्तमण्डलानि कार्य्याणि। यथा तेनैवोक्तम्—"मण्डलस्य प्रमाणं तु कुर्य्यात् तत्पद सम्मितम्" इति ॥ यत्तु पितामहेनोक्तम्—



"कारयेन्मण्डलान्यष्टौ पुरस्तान्नवमं तथा। आग्नेयं मण्डलं चाद्यं द्वितीयं वारुणं स्मृतम्। तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम्, पञ्चमं तु इन्द्रदैवत्यं षष्ठं कौवेरमुच्यते। सप्तकं सोमदैवत्यं सावित्रं चाष्टमं तथा॥ नवमं सर्वदैवत्यम् इति दिव्यविदो विदुः, द्वात्रिंशदङ्गुलं प्राहुर्मण्डनात्मण्डलान्तरम्। अष्टाभिमण्डलैरेवमङ्गुलानां शतद्वयम। षटपञ्चाशत् समधिकं भूमेस्तु परिकल्पना। कर्त्तुः पदसमं कार्य्यं मण्डलं तु प्रमाणतः। मण्डले मण्डले देयाः कुशाः शास्त्रप्रवोदिताः" इति, तत्र "नवमं सर्वदैवत्यम" अपरिमिताङ्गुलप्रमाणं मण्डलं विहाय अष्टाभिर्मन्डलैरष्टाभिश्चान्तरालैः प्रत्येकं षोड़शाङ्गुलप्रमाणैरङ्गुलानां षटपञ्चाशदधिकं शतद्वयं सम्पद्यते। तत्रापि गन्तव्यानि सप्तैव मण्डलानि। यतः प्रथमे तिष्टति नवमे क्षिपति इति न विरुध्यते। अङ्गुलप्रमाणं च—" "तिर्य्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः। प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वा-दशाङ्गुला। हस्तो वितस्तिद्वय दण्डो हस्तचतुष्टयम्। तत सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम्" इति बोध्यम्] ॥ १०६ ॥

सप्तमण्डलानि गत्वा किकर्त्तव्यमित्यत आह—अष्टमे मण्डले स्थित्वा नवमे मण्डले "अग्नितप्तमयःपिण्डं त्यक्त्वा व्रीहीन् कराभ्यां मर्दयित्वा अदग्धहस्तश्चेत् शुद्धिमाप्नुयात्"। दग्धहस्तश्चेत अशुद्ध इत्यर्थसिद्धम्। [यस्तु सन्त्रासात् प्रस्खलद्हस्तभ्याम् अन्यत्र दह्यते तथाप्यशुद्धो न भवति। यथाह कात्यायनः—"प्रस्खलन्नभिशस्तश्चेत् स्थानादन्यत्र दह्यते अदग्धं तं विदुर्देवास्तस्य भूयोपि दापयेत्"]।

"यदा गच्छतो अन्तराष्टममण्डलादर्वाग् एव पिण्डः पतति दग्धत्वादग्धत्वेवा संशयः तदा पुनर्हरेत" इत्यर्थप्राप्तमुक्तम्। [तत्र चायमनुष्टानक्रमः (The procedure in this दिव्यग्रहण here is)—पूर्वेद्युर्भूशुद्धिं बिधाय अपरेद्युः मण्डलानि यथाशास्त्रं निर्माय मण्डलाधिदेवताश्च मन्त्रैस्तत्र तत्र सम्पूज्य अग्निमुपसमाधाय शान्तिहोमं निर्वर्त्य उपोषितस्य स्नातस्य आर्द्रबाससः पश्चिमे मन्डले तिष्ठतः व्रीहिमर्दनादिकरसंस्कारं विधाय प्रतिज्ञापत्रं समन्त्रकं कर्त्तुः शिरसि बद्ध्वा

प्राड्विवाकस्तृतीये तापे अग्निमभिमन्त्रयतप्तम् अयःपिण्डं संदंशेन गृहीत्वा कर्त्रभिमन्त्रितं तस्याञ्जलौ निदध्यात्। सोपि मण्डलानि सप्त गत्वा नवमे मण्डले प्रक्षिप्य अदग्धः शुद्धोभवति ] ॥ १०७ ॥

॥ इत्यग्निविधिः ॥

CHARCHA—I पञ्चाशत &c —पञ्चाशतपल+अस्त्यर्थे ठन्। Qual. लौहम्॥ for मृद्भिरुद्‌गति see sl. 103. for अङ्गुलपरिमाण see Mitak For हरेत्=वहेत or कुर्यात् see sl 99 ante

108-109. The procedure in जलदिव्यग्रहण।

मत्येन माभिरक्ष त्वं वरुणेत्यभिशाप्य कम्।
नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत्॥ १०८॥

समकालमिषुं मुक्तमानीयान्यो जवी नरः
गते तस्मिन् निमग्नाङ्गं पश्येत्चेच्छुद्धिमाप्नुयात्॥ १०९॥

Prose—हे वरुण, त्वं सत्येन मा (माम्) अभिरक्ष इति कम् (उदकम्) अभिशाप्य (अभिमन्त्र्य), नाभिदघ्नोदकस्थस्य (नाभिप्रमाणजले अवस्थितस्य पुरुषस्य) ऊरू गृहीत्वा दिव्यग्रहणकारी जलं विशेत् (जले निमज्जेत्)। ततः समकालं (निमज्जनसमकालमेव) मुक्तम् इषुम् तस्मिन् एकस्मिन् गते अन्यः जवी (वेगवान्) नरः आनीय जले निमग्नाङ्गं पश्येत चेत तदा शुद्धिमाप्नुयात्॥

Beng. জলদিব্যগ্রহণকারী—"হে জলদেব বরুণ, আপনি সত্যদেব, আপনি সত্য নির্ণয় করিয়া আমাকে রক্ষা করুন" এই মন্ত্রোচ্চারণ করিয়া জলকে অভিমন্ত্রিত করিবেন, নাভিপ্রমাণজলে অবস্থিত কোন পুরুষের উরু ধরিয়া জলে ডুব দিবেন। ইতিমধ্যে নিমজ্জনসমকালেই এক ব্যক্তি বাণ ছুড়িবেন, বাণপতনস্থলে



আর একজন দ্রুত যাইবেন, আবার অন্য একজন বেগবান্ পুরুষ নিক্ষিপ্ত বাণটী লইয়া ফিরিয়া আসিয়া যদি দেখেন—জলনিমজ্জিত দিব্যগ্রহণকারী তখনও জল হইতে ওঠে নাই, তবে তাকে শুদ্ধ বা নির্দোষ বলিয়া জানিবে।

Eng. One taking oath with reference to water, shall purify water with this mantra "Ho virtuous Varuna (the water-god), you save me by declaring the truth" and then having caught hold of a person standing on navel-deep water he will dive down. Simultaneously then one person will throw an arrow, another person will go to the spot where this falls and a third speedy one will then come back withthis arrow ; and if he find the above dived person not risen up from water by this time then he is to be deemed as guiltless

Mita—सम्प्रत्युदकविधिमाह—हे वरुण, "सत्येन मामभिरक्षत्वम्" इत्यनेन मन्त्रेण "कम्" उदकम् "अभिशाप्य" अभिमन्त्र्य "नाभिदघ्नोदकस्थस्य" नाभिप्रमाणोदकस्थितस्य "पुरुषस्य ऊरू गृहीत्वा शोध्यो जलं प्रविशेत्" जले निमज्जेत्। [ एतच्च वरुणपूजायाम् सत्याम्—"गन्धमाल्यैः सुरभिभिर्मधुक्षीरघृतादिभिः। वरुणाय प्रकुर्वीत पुजामादौसमाहितः" इति नारदस्मरणात्। तथा साधारणधर्मेषु धर्माबाहनादिसकलदेवतापूजाहोम-समन्त्रक-प्रतिज्ञापत्र-शिरोनिवेशनान्तेषु सत्सु च ]॥ तथा तोय त्वं प्राणिनां प्राणः सृष्टेराद्यं तु निर्मितम्। शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनां तथा। अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे"—इति प्राड्विवाकेन उदकाभिमन्त्रणे कृते शोध्यः जनः "सत्येन माभिरक्ष त्वं वरुण" इति जलं प्रार्थयेत। उदकस्थानानि च नारदेनोक्तानि—"नदीषु तनुवेगासु सागरेषु वहेपु च। ह्रदेषु देवखातेपु तड़ागेषु सरःसुच" इति। तथापितामहेनापि—

-स्थिरतोये निमज्जेत न ग्राहिणि न चाल्पके। तृणशैबालरहिते जलौकामत्स्य-बर्जिते। देबखातेषु यत्तु तोयं तस्मिन्कुर्य्यात् बिशोधनम्। आहार्य्यं बर्जयेत् नित्यं शीघ्रगासु नदीषु च। प्रबिशेत् सलिले नित्यम् ऊर्मिपङ्कबिबर्जिते।" इति। आहार्य्यं तड़ागादिभ्य आहृतं ताम्रकटाहादिक्षिप्तं जलम्। नाभिप्रमाणोदकस्थश्च यज्ञियवृक्षोद्भवां धर्मस्थूणामवष्टभ्य प्राङ्मुखस्तिष्ठेत्। "उदके प्राङ्मुखस्तिष्ठेत् धर्मस्थूणां प्रगृह्य च" इति स्मरणात् ॥ १०८ ॥

ततः किंकर्त्तव्यमित्यह आह—निमज्जनसमकालं, 'गते तस्मिन्' जबिनि एकस्मिन् पुरुषेगते, अन्योजवी शरपातस्थानस्थितः, पूर्वमुक्तमिषुमानीय जले निमग्नाङ्गं यदि पश्यति तदा स शुद्धो भवति ॥ १०९ ॥

एतदुक्तं भवति – त्रिषु शरेषु मुक्तष्वेको वेगवान्मध्यमशरपातस्थानं गत्बा तमादाय तत्रैव तिष्ठति। अन्यस्तु पुरुषो वेगबान् शरमोक्षस्थाने तोरणमूले तिष्ठति। एबं स्थितयोस्तृतीयस्यां करतालिकायां शोध्यी निमज्जति। तत्समकालमेव तोरणमूलस्थितोऽपि द्रुततरं मध्यशरपातस्थानं गच्छति। शरग्राही च तस्मिन्प्राप्ते द्रुततरं तोरणमूलं प्राप्यान्तर्जलगतं यदि न पश्यति तदा शुद्धो भवतीति। एतदेव स्पष्टीकृतं पितामहेन—'गन्तुश्चापि च कर्तुश्च समं गमनमज्जनम्। गच्छेत्तोरणमूलात्तु लक्ष्यस्थानं जवी नरः॥ तस्मिन्गते द्वितीयोऽपि वेगादादाय सायकम्। गच्छेत्तोरणमूलं तु यतः स पुरुषो गतः॥ आगतस्तु शरग्राही न पश्यति यदा जले। अन्तर्जलगतं सम्यक्तदा शुद्धं बिनिर्दिशेत् ॥' इति। जबिनोश्च पुरुषयोर्निर्धारणं कृतं नारदेन—पञ्चाशतो धावकानां यौ स्यातामधिकौ जवे। तौ च तत्र नियोक्तव्यौ शरानयनकारणात् ॥' इति। तोरणं च निमज्जनसमीपस्थाने समे शोध्यकर्णप्रमाणोच्छ्रितं कार्यम्; 'गत्बा तु तज्जलस्थां तटे तोरणमुच्छ्रितम्। कुर्बीत कर्णमात्रं तु भुमिभागे समे शुचौ ॥' इति नारदस्मरणात्। शरत्रयं वैणवं च धनुर्मङ्गलद्रव्यैः श्वेतपुष्पादिभिः प्रथमं संपूजयेत्; 'शरान्संपूजयेत्पूर्वं वैणवं च धनुस्तथा। मङ्गलैर्धूपपुष्पैश्च ततः कर्म समाचरेत् ॥' इति पितामहबचनात्। धनुषः प्रमाणं लक्ष्यस्थानं च



नारदेनउक्तम्—'कूरं धनुः सप्तशतं मध्यमं षट्शतं स्मृतम्। मन्दं पञ्चशतं ज्ञेयमेष ज्ञेयो धनुर्विधिः॥ मध्यमेन तु चापेन प्रक्षिपेच्च शरत्रयम्। हस्तानां तु शते सार्धे लक्ष्यं कृत्वा बिचक्षणः॥ न्यूनाधिके तु दोषः स्यात्क्षिपतः सायकांस्तथा ॥' इति। अङ्गलानां सप्ताधिकं शतं सप्तशतं कूरं धनुः। एवं षट्शतं पञ्चशतं च। एबं चैकादशाङ्गलाधिकं हस्तचतुष्टयं कूरस्य धनुषः प्रनाणम्, मध्यमस्य दशाङ्गुलाधिकम्, मन्दस्य नवाङ्गलाधिकमित्युक्तं भवति। शराश्चानायसाग्रा वैणवाः कार्याः; शरांश्चानायसाग्रांस्तु प्रकुर्वीत बिशुद्धये। वेणुकाण्डमयांश्चैव क्षेप्ता तु सुदृढं क्षिपेत् ॥' इति स्मरणात्। क्षेप्ता क्षत्रियस्तद्वृत्तिर्वा ब्राह्मणः सोपवासो नियोक्तव्यः। यथाह—'क्षेप्ता च क्षत्रियः प्रोक्तस्तद्वृत्तिर्ब्राह्मणोऽपि वा। अक्रूरहृदयः शान्तः 'सोपबासस्ततः क्षिपेत् ॥' इति। त्रिषु मुक्तेषु मध्यमं शरो ग्राह्यः; तेषां च प्रोषितानां च शराणां शास्त्रचोदनात्। मध्यमस्तु शरो ग्राह्यः पुरुषेण बलीयसा ॥' इति वचनात्। तत्रापि पतनस्थानादानेतव्यः; न सर्पणस्थानात्, 'शरस्य पतनं ग्राह्यं सर्पणं तु विवर्जयेत्। सर्पन्सर्पन्शरो यायाद्दूराद्दूरतरं यतः ॥' इति वचनात्। वाते च प्रवायति विषमादिदेशे च शरमोक्षो न कर्तव्यः; इषुं न प्रक्षिपेद्विद्वान्मारुते चातिवायति। विषमे भूप्रदेशे च वृक्षस्थानसमाकुले ॥ तृणगुल्मलतावल्लीपङ्कपाषाणसंयुते ॥' इति पितामहवचनात्। "निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुया"दिति वदता उन्मज्जिताङ्गस्याशुद्धिर्दर्शिता। स्थानान्तरगमने चाशुद्धिः पितामहेनोक्ता; 'अन्यथा न विशुद्धिः स्यादेकाङ्गस्यापि दर्शनात् ॥' इति 'स्थानाद्वाऽन्यत्र गमनाद्यस्मिन्पूर्वं निवेशितः ॥' इति। एकाङ्गस्यापि दर्शनादिति च कर्णाद्यभिप्रायेण। 'शिरोमात्रं तु दृश्येत न कर्णौ नापि नासिका। अप्सु प्रवेशने यस्यशुद्धं तमपि निर्दिशेत् ॥' इति विशेषाभिधानात्। अयमत्र प्रयोगक्रमः—'उक्तलक्षणजलाशयसंनिधावुक्तलक्षणं तोरणं विधाय उक्तप्रमाणे देशे लक्ष्यं बिधाय तोरणसंनिधौ सशरं धनुः संपूज्य जलाशये वरुणमावाह्य पूजयित्वा तत्तीरे धर्मादींश्च देवान्हवनान्तमिष्ट्वा। शोध्यस्य शिरसि प्रतिज्ञापत्रमाबध्य प्राड्विवाकोजलमभिमन्त्रयते—'तोय! त्वं प्राणिनां प्राणः'

इत्यादिना मन्त्रेण। अथ शोध्यः—'सत्येन' इत्यादिना मन्त्रेण जलमभिमन्त्र्य गृहीतस्थूणस्य नाभिमात्रोदकावस्थितस्य बलीयसः पुरुषस्य समीपमुपसर्पति। अथ शरेषु त्रिषु मुक्तेषु मध्यमशरपातस्थाने मध्यमं शरं गृहीत्वा जविन्येकस्मिन्पुरुषे स्थिते अन्यस्मिंश्च तोरणमूले स्थिते प्राड्विवकेन तालत्रये दत्ते युगपद्गमनमज्जनमथ शरानयनमिति ॥ १०८ ॥

इत्युदकविधिः ॥

CHARCHA

1. वरुण—case of address वरुण is जलदेव and सत्यदेव, cp "सुदेवोसि वरुण यस्य ते सप्तसिन्धवः" where भाष्यकर says—सुदेव as सत्यदेव। So he is to determine सत्य ॥

2. अभिशाप्य—अभि+शप+णिच ल्याप्। It is used in the sense of अभिमन्त्रण ॥ कम् here means उदकम्।

3 नाभि &c—नाभिप्रमाणमस्य इति नाभि+प्रमाणे दघ्नच् प्रत्ययः= नाभिदघ्नम्। see the rule "प्रमाणे द्वयसच्-दघ्नच् मात्रचः'। तादृशम् उदकम्। कर्मधा। तत्र तिष्ठतीति कप्रत्ययः। तस्य। Adj used substantively.

4. समकालम्—समःकालः यस्मिन्, वहु। तत यथा तथा। Qual. मुक्तम्। one will throw arrow so soon as दिव्यकारी dives down; another will go to the spot of शरपतन। A third speedy one will come back with the thrown arrow. See Mita एतदुक्तं भवति etc.

5. निमग्नाङ्गम्—Qual. दिव्यकारिणम् &c understood. निमग्नम् अङ्गमस्य, वहु। तम्। obj. of पश्येत्।

110-111. The procedure is विषदिव्यग्रहण।



त्वं विष ब्रह्मणःपुत्रः सत्यधर्मेव्यवस्थितः।
त्रायस्वास्मादभीशापात् सत्येन भव मेऽमृतम् ॥ ११० ॥

एवमुक्ता विषं शार्ङ्गं भक्षयेद् हिमशैलजम्।
यस्य वेगैर्विना जीर्येत् शुद्धिंतस्य विनिर्दिशेत् ॥ १११ ॥

Prose—"हे विष, त्वं ब्रह्मणः पुत्रः, सत्यधर्मे च व्यवस्थितः, माम् अस्मात् अभीशापात् (कलङ्कारोपात्) त्रायस्व, सत्येन मे अमृतं भव"—इति मन्त्रम् उक्त्वा, दिव्यकारी हिमशैलजं शार्ङ्गं (शृङ्गजातं) विष भक्षयेत्। यस्य वेगैः (धातुविकारैः) विना विषं जीर्येत तस्य शुद्धिं विनिर्दिशेत्।

Beng—দিব্যকারী 'হে বিষ, তুমি ব্রহ্মার পুত্র, সত্যাশ্রিত, আমাকে কলঙ্কহইতে উদ্ধার কর, তুমি অমৃত হও' এই মূলমন্ত্র বিশুদ্ধভাবে উচ্চারণ করিয়া হিমালয় পর্বতের শৃঙ্গাগ্রজাত বিষ ভক্ষণ করিবে। যদি ধাত্বাদির কোনরূপ বিকার উৎপাদন না করিয়া বিষ হজম হইয়া যায়, তবে ভক্ষণকারী নির্দোষ বলিয়া গ্রহণ করিবে।

Eng—"Ho poison, you are born of Brahman, and are in the path of rectitude, deliver one from this present guilt, be like nectar unto me"—having uttered this mantra the दिव्यकारी will take the poison got from the summit of Himalayan ranges, if it is digested without showing any bodily disturbances, then the Jndge is to declare the poison-eater as free of guilt.

Mita—इदानीं विषविधानमाह—"त्वं विष" इत्यादि मन्त्रेण विषमभिमन्त्र्य कर्त्ता (दिव्यग्रहणकारी) विषं हिमशैलजं शृङ्गभवं भक्षयेत्। तच्च भक्षितं सत् यस्य विषं वेगैर्विना जीर्यति स शुद्धो भवति। [विषवेगोनाम धातोः धात्वन्तरप्राप्तिः (=विषवेग is transformation of one त्वगादिशारीर

धातु into another causing bodily disturbances)। "धातोर्धात्वन्तरप्राप्तिर्विषवेग इति स्मृतः "इति वचनात्॥ धातवश्च त्वगामृङ्मांसमेदोऽस्थिमज्जाशुक्राणि इति सप्त। एवं च सप्तैव विषवेगाभवन्ति। तेषां च लक्षणानि पृथग एव विषतन्त्रे कथितानि—

'वेगो रोमाञ्चमाद्यो रचयति विषजः स्वेदवक्त्रोपशोषौ तस्योर्ध्वस्तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ। यो वेगः पञ्चमोऽसौ नयति विवशतां कण्ठभङ्गं चहिक्कां पष्ठी निःश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य॥' इति। अत्र च महादेवस्य पूजा कर्तव्या। यथाह नारदः—'दद्याद्विषं सोपवासो देवब्राह्मणसंनिधौ। धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम्॥' इति प्राड्विवाकः कृतोपवासो महादेवं पूजयित्वा तस्य पुरतो विषं व्यवस्थाप्य धर्मादिपूजां हवनान्तां विधाय प्रतिज्ञापत्रं शोध्यस्य शिरसि निधाय विषमभिमन्त्रयते— 'त्वं विष! ब्रह्मणा सृष्टं परीक्षार्थं दुरात्मनाम्। पापानां दर्शयात्मनं शुद्धानाममृतं भव। मृत्युमूर्ते विष! त्वं हि ब्रह्मणा परिनिर्मितम्। त्रायस्वैनं नरं पापात्सत्येनास्यामृतं भव॥' इति। एवमभिमन्त्र्य दक्षिणाभिमुखावस्थिताय दद्यात्; 'द्विजानां संनिधावेव दक्षिणाभिमुखे स्थिते। उदङ्मुखः प्राङ्मुखो वा विषं दद्यात्समाहितः॥' इति नारदवचनात्। विषं च वत्सनाभादि ग्राह्यम्, 'शृङ्गिणो वत्सनाभस्य हिमजस्य विषस्य वा॥' इति पितामहवचनात्। वर्ज्यानि च तेनैवोक्तानि—'चारितानि च जीर्णानि कृत्रिमाणि तथैव च। भूमिजानि च सर्वाणि विषाणि परिवर्जयेत्॥' इति। तथा नारदेनापि (१।३२१)—'भ्रष्टं च चारितं चैव धूपितं मिश्रितं तथा। कालकूटमलाबुं च विषं यत्नेन वर्जयेत्॥' इति। कालश्च नारदेनोक्तः (१।३१९)—'तोलयित्वेप्सितं काले देयं तद्धि हिमागमे। नापराह्णे न मध्याह्ने न संध्यायां तु धर्मवित्॥' इति। कालान्तरे तूक्तप्रमाणादल्पं देयम्; 'वर्षे चतुर्यवा मात्रा ग्रीष्मे पञ्चयवा स्मृता। हेमन्ते सा सप्तयवा शरद्यल्पा ततोऽपि हि॥' इति स्मरणात्। अल्पेति षड्यवेत्यर्थः। 'हेमन्त' ग्रहणेन शिशिरस्यापि ग्रहणम्। 'हेमन्तशिशिरयोः समासेन' इति श्रुतेः। वसन्तस्य च



सर्वदिव्यसाधारणत्वात्तत्रापि सप्त यवा विषं च घृतप्लुतं देयं, नारदवचनात्। 'विषस्य पलषड्भागाद्भागो विंशतिमस्तु यः। तमष्टभागहीनं तु शोध्ये दद्याद्घृतप्लुतम्॥' (नारदः १।३२३) इति। पलं चात्र चतुःसुवर्णकम्। तस्य षष्ठो भागो दश माषाः दश यवाश्च भवन्ति। 'त्रियवं त्वेककृष्णलम्। पञ्चकृष्णलको माषः' इत्येको माषः पञ्चदश यवा भवन्ति। एवं दशानां माषाणां यवाः सार्धशतं भवन्ति। पूर्वे च दश यवा इति षष्ट्यधिकं शतं यवाः पलस्य षष्ठो भागस्तस्माद्विंशतितमो भागोऽष्टौ यवास्तस्याष्टभाग एकयवः, तेन हीनं विंशतितमं भागं सप्तयवं घृतप्लुतं दद्यात्। घृतं च विषात्त्रिंशद्गुणं ग्राह्यम्; 'पूर्वाह्णे शीतले देशे विषं देयं तु देहिनाम्। घृते नियोजितं श्लक्ष्णं पिष्टं त्रिंशद्गुणान्वितम्॥' इति कात्यायनवचनात्। त्रिंशद्गुणेन घृतेनान्वितं विषम्। शोध्यश्च कुहकादिभ्यो रक्षणीयः; 'त्रिरात्रं पञ्चरात्रं वा पुरुषैः स्वैरधिष्ठितम्। कुहकादिभयाद्राजा रक्षयेद्दिव्यकारिणम्॥ ओषधीर्मन्त्रयोगांश्च मणीनथ विषापहान्। कर्तुः शरीरसंस्थांस्तु गूढोत्पन्नान्परीक्षयेत्॥' इति पितामहस्मरणात्। तथा विषमपि रक्षणीयम्—'शार्ङ्गं हैमवतं शस्तं गन्धवर्णरसान्वितम्। अकृत्रिममसंमूढममन्त्रोपहतं च यत्॥' (१।३२२) इति नारदस्मरणात्। तथा विषे पीते यावत्करतालिकाशतपञ्चकं तावत्प्रतीक्षणीयोऽनन्तरं चिकित्सनीयः। यथाह नारदः—'पञ्चतालशतं काल निर्विकार यदा भवेत्। तदा भवति संशुद्धस्ततः कुर्याच्चिकित्सितम्॥' इति। पितामहेन तु दिनान्तोऽवधिरुक्तोऽल्पमात्रविषयः—'भक्षिते तु यदा स्वस्थो मूर्च्छाच्छर्दिविवर्जितः। निर्विकारो दिनस्यान्ते शुद्धं तमपि निर्दिशेत्॥' इति। अत्र च प्राड्विवाकः सोपवासो महादेवं संपूज्य तत्पुरतो विषं स्थापयित्वा धर्मादीनिष्ट्वा शोध्यस्य शिरसि प्रतिज्ञापत्रं निधाय विषमभिमन्त्र्य दक्षिणाभिमुखस्थिताय विषं प्रयच्छति। स च शोध्यो विषमभिमन्त्र्य भक्षयतीति क्रमः॥ ११०-१११॥

इति विषविधानम्॥

## CHARCHA

1. अभिशापात्—अभिशाप is दोष as अभियोगः accusation or attribution of guilt. Both अभिशाप and अभीशाप are correct by the rule "उपसर्गस्य घञि अमनुष्ये बहुलम्"॥ त्राणार्थक धातुयोगे अपादाने ५मी। सत्येन has करणे ३या here.

2. शार्ङ्गम्—शृङ्ग is here शैलशृङ्ग। तस्य इदम् इति शार्ङ्गम् with अण्। Q विषम्। such विष is not deadly poisonous like cobra poison वा कालकूट etc. शार्ङ्गविष may be प्राणिशृङ्गविष in हिमालय ? यस्य and तस्य has शेषसम्बन्धे षष्ठी।

112 & 113 Procedure in ordeal ( दिव्य ) known as कोश।

> देवानुग्रान् समभ्यर्च्य तत्स्नानोदकमाहरेत्।
> संस्नाप्य पाययेत् तस्माद्जलन्तु प्रसृतित्रयम ॥ ११२ ॥
>
> अर्वाक् चतुर्दशादह्नोयस्य न राजदैविकम्।
> व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः॥ ११३ ॥

Prose—उग्रान् देवान् समभ्यर्च्य तत्स्नानोदकम् आहरेत्। ( आहृत्य संस्नाप्य च ) तत्तोयं संस्नाप्य ( पात्रान्तरे कृत्वा ) प्राड्विवाकः, तस्मात् ( मन्त्रपूतात पवित्रात् जलात् ) प्रसृतित्रयं पाययेत ( दिव्यकारिणं पाययेत् )। चतुर्दशात् अह्नः पूर्वं ( प्राक् ) यस्य राजदैविक ( राजविषयं दैविकं च ) घोरं व्यसनं न जायते स शुद्धः स्यात्, ( इति ) न संशयः ( अत्र सन्देहः न स्यात् )।

Beng—প্রথমে প্রাড্বিবাক সূর্যাদি উগ্রদেবতাগণকে পূজা করিয়া তাদের স্নানজল আহরণ করিয়া ও স্নান করাইয়া এবং এই অভিমন্ত্রিত জল পাত্রান্তরে রাখিয়া দিব্যগ্রহণকারীকে তাহা হইতে তিন অঞ্জলি জল পান করাইবেন। পান দিবস হইতে চতুর্দশ দিবস



পার হইবার পূর্বে যদি পানকারী অভিযুক্তের, কোন গুরুতর রাজ বিষয়ক বা দৈব অনিষ্ট না ঘটে তবে তাকে নির্দোষ জানিবে—এ বিষয়ে সন্দেহ নাই।

[ N, B.—राजा च देवश्च, द्वन्द्व। एकवत् वा। Then राजदेवे भवम् इति ठञ। अनुशतिकादित्वात् उभयपदवृद्धिः। See sl. 66 also. ]

Eng. The Judge will first of all worship the powerful Gods ( like sun etc ), and then procure ablution water for these, pour this water after समन्त्रकस्नान in some other vessel, it being already purified by mantras ( देवतास्नानमन्त्र ); shall then make the oathtaker take three handful of water out of this ; if no dire royal or divine visitation come to him within a fortnight then he is free of guilt ; and there is no doubt in this.

Mita—अथ कोशविधिमाह—"उग्रान्देवान्" दुर्गादित्यादीन् "समभ्यर्च्य" गन्धपुष्पादिभिः पूजयित्वा संस्नाप्य ( ? संस्नापनाय ) तत् स्नानोदकमाहरेत्"। आहृत्य च "तोय त्वं प्राणिनां प्राण" इत्यादिना "तत्तोय प्राड्विवाकः संस्नाप्य" शोध्येन च तत्तोयं पात्रान्तरे कृत्वा "सत्येन मामभिरक्षत्वं वरुण" इत्यनेन अभिमन्त्रितं "पाययेत् प्रसृतित्रयम्"॥ एतच्च साधारणधर्मेषु धर्मावाहनादि-सकलदेवतापूजाहोमसमन्त्रकप्रतिज्ञापत्रशिरोनिवेशनान्तेषु सतसु ( स्यात )।

[ अत्र च स्नाप्यदेवतानियमः कार्य्यनियमोधिकारिनियमश्च पितामहादि-भिरुक्तः—"भक्तो यो यस्य देवस्य पाययेत तस्य तज्जलम्। समभावे तु देवानामादित्यस्य च पाययेत् दुर्गाया पाययेत चौरान् ये च शस्त्रोपजीविनः। भास्करस्य तु यत्तोयं ब्राह्मणं तन्न पाययेत्। दुर्गायाः स्नापयेत् शूलम् आदित्यस्य तु मण्डलम्। अन्येषामपि देवानां स्नापयेदायुधानि तु" इति देवतानियमः॥ विस्रम्भे सर्वशङ्कासु सन्धिकार्य्ये तथैव च। एषु कोशो

प्रादतव्यो नित्यं चित्तविशुद्धये। इति कार्य्यनियमः। पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च। सशूकस्याव्यसनिनः कोशपानं विधीयते" (इति नारदः)॥ सशूकः=आस्तिकः। मद्यपस्त्रीव्यसनिनां कितवानां तथैव च। कोशः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः। महापराधे निर्धर्मे कृतघ्ने क्लीवकुत्सिते। नास्तिकव्रात्यदाशेषु कोशपानं विवर्जयेत्॥ इति॥ महापराधो=महापातकी; निर्धर्मः=वर्णाश्रमधर्मरहितः पाषण्डी, कुत्सितः=प्रतिलोमजः। दाशाः=कैवर्त्ताः—इत्यधिकारिनियमः॥ तथा गोमयेन मण्डलं कृत्वा तत्र शोध्यमादित्याभिमुखं स्थापयित्वा पाययेत इति नारदवचनात् अवगन्तव्यम्। यथाह—"तमाहूयाभिशस्तं तु मण्डलाभ्यन्तरे स्थितम्। आदित्याभिमुखं कृत्वा पाययेत् प्रसृतित्रयम्' ॥ ११२॥

ननु तुलादिषु विषान्तेषु समनन्तरमेव शुद्ध्यशुद्धिभावना, कोशे तु कथमित्यत आह—"चतुर्दशादह्नः पूर्वं यस्य राजिकं राजनिमित्तं दैविकं देवप्रभवं व्यसनं दुःखं घोरं महत् नो नैव जायते (अल्पस्य देहिनामपरिहार्य्यत्वात स शुद्धो वेदितव्यः)। ऊर्ध्वं पुनरवधेर्न दोषः। यथाह नारदः—"ऊर्ध्वं यस्य द्विसप्तहात् वैकृतं तु महद्भवेत्। नाभियोज्यः स विदुषा कृतकालव्यतिक्रमात्"—इत्यर्थसिद्धमेवोक्तम्। ("अवाक् चतुर्दशादह्नः" इत्येतत् महाभियोगविषयम्, "महाभियोगेष्वेतानि" इति प्रस्तुत्याभिधानात। अवध्यन्तराणि पितामहेनोक्तानि अल्पविषयानि। "कोशमल्पेपि दापयेत्" इति स्मरणात्। तानि च "त्रिरात्रात् सप्तरात्राद्वा द्वादशाहात द्विसप्ताहात वा। वैकृतं यस्य दृश्येत पापकृत् स उदाहृतः"। इति। महाभियोगोक्तद्रव्यादर्वाचीनं दिव्यं त्रिधा विभज्य त्रिरात्राद्यपि पक्षत्रयं व्यवस्थापनीयम्॥ ११३॥ इति कोशविधिः॥

तुलादीनि कोशान्तानि पञ्च महादिव्यानि यथोद्देशं योगीश्वरेण व्याख्यातानि। स्मृत्यन्तरे त्वल्पाभियोगविषयाण्यन्यान्यपि दिव्यानि कथितानि। यथाह पितामहः—'तण्डुलानां प्रवक्ष्यामि विधिं भक्षणोदितम्। चौरे तु तण्डुला देया नान्यत्रेति विनिश्चयः॥ तण्डुलान्कारयेच्छुक्लाञ्छालेर्नान्यस्य



कस्यचित्। मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः॥ स्नानोदकेन संमिश्रान्रात्रौ तत्रैव वासयेत्। प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम्॥ तन्डुलान्भक्षयित्वा तु पत्रे निष्टीवयेत्ततः। पिप्पलस्य तु नान्यस्य अभावे भूर्ज एव तु॥ लोहितं दृश्यते यस्य हनुस्तालु च शीर्यते। गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत्॥ इति। शिरोरोपितपत्रकं तण्डुलान्भक्षयित्वा निष्टीवयेत्प्राड्विवाकः॥ भक्षयित्वेति च ण्यन्तात्सिचि (? णिचि) रूपम्। सर्वदिव्यसाधारणं च धर्मावाहनादि पूर्ववदिहापि कर्तव्यम्॥

इति तण्डुलविधिः॥

तप्तमाषविधिः पितामहेनोक्तः। तथा हि—'सौवर्णं राजतं वापि ताम्रं वा षोडशाङ्गुलम्। चतुरङ्गुलखातं तु मृन्मयं वाऽथ मण्डलम्॥ वर्तुलमित्यर्थः। 'पूरयेद्घृततैलाभ्यां विंशत्या तु पलैस्तु तत। सुवर्णमाषकं तस्मिन्सुतप्ते निक्षिपेत्ततः॥ अङ्गुष्ठाङ्गुलियोगेन उद्धरेत्तप्तमाषकम्। कराग्रं यो न धुनुयाद्विस्फोटो वा न जायते। शुद्धो भवति धर्मेण निर्विकारकराङ्गुलिः॥' इति। 'उद्धरेत्' इति वचनात्पात्रादुत्क्षेपणमात्रं, न बहिः प्रक्षेपणमादरणीयम्।

अपरः कल्पः—'सौवर्णे राजते ताम्रे आयसे मृन्मयेपि वा। गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचिः॥ सौवर्णीं राजतीं ताम्रीमायसीं वा सुशोधिताम्। सलिलेन सकृद्धौतां प्रक्षिपेत्ताम्रे मुद्रिकाम्॥' (नारदः १।३३४) 'भ्रमद्वीचितरङ्गाढ्ये ह्यनखस्पर्शगोचरे। परीक्षेतार्द्रपर्णेन चुरुकारं सुघोषकम्॥ ततश्चानेन मन्त्रेण सकृत्तदभिमन्त्रयेत॥ परं पवित्रममृतं घृत त्वं यज्ञकर्मसु। दह पावक! पापं त्वं हिमशीतं शुचौ भव॥ उपोषितं ततः स्नातमार्द्रवाससमागतम्। ग्राहयेन्मुद्रिकां तां तु घृतमध्यगतां तथा॥ प्रदेशिनी च तस्याथ परीक्षेयुः परीक्षकाः। यस्य विस्फोटका न स्युः शुद्धोऽसावन्यथाऽशुचिः॥' इति। अत्रापि धर्मावाहनाद्यनुसधातव्यम्॥ घृतानुमन्त्रणं प्राड्विवाकस्य। 'त्वमग्ने!

सर्वभूतानाम्' इति शोध्यस्याग्न्यभिमन्त्रः। 'प्रदेशिनीं परीक्षेयुः' इति वचनात् प्रदेशिन्यैव मुद्रिकोद्धरणम् ॥

इति तप्तमाषकविधिः ॥

धर्माधर्मदिव्यविधिः ॥ धर्माधर्माख्यदिव्यविधिश्च पितामहेनोक्तः। तथाच— 'अधुना संप्रवक्ष्यामि धर्माधर्मपरीक्षणम्। हन्तॄणां याचमानानां प्रायश्चितार्थिनां नृणाम्' ॥ इति। हन्तॄणामिति साहसाभियोगेषु, याचमानानामिति अर्थाभियोगेषु, प्रायश्चित्तार्थिनामिति पातकाभियोगेषु, 'राजतं कारयेद्धर्ममधर्मं सीसकायसम्' इति प्रतिमाविधानं सीसकं वा आयसं वेति ॥ पक्षान्तरमाह—'लिखेद्भूर्जे पटे वापि धर्माधर्मौ सितासितौ। अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत् ॥ सितपुष्पस्तु धर्मः स्यादधर्मोऽसितपुष्पधृक्। एवंविधायोपलिख्य पिण्डयोस्तौ निधापयेत् ॥ गोमयेन मृदा वापि पिण्डौ कार्यौ समंततः। मृद्भाण्डकेऽनुपहते स्थाप्यौ चानुपलक्षितौ ॥ उपलिप्ते शुचौ देशे देवब्राह्मणसंनिधौ। आवाहयेत्ततो देवाँल्लोकपालांश्च पूर्ववत् ॥ धर्मावाहनपूर्वं तु प्रतिज्ञापत्रकं लिखेत् ॥' ततः— 'यदि पापविमुक्तोऽहं धर्मस्त्वायातु मे करे। अशुद्धश्चेन्मम करे पाप आयातु धर्मतः ॥' इति ॥ अभिशस्तोऽभिमन्त्रयते—'अभियुक्तस्तयोश्चैकं प्रगृह्णीताविलम्बितः। धर्मे गृहीते शुद्धः स्यादधर्मे तु स हीयते ॥ एवं समासतः प्रोक्तं धर्माधर्मपरीक्षणम् ॥' इति ॥

इति धर्माधर्मदिव्यविधिः ॥

अन्ये च शपथा द्रव्याल्पत्वमहत्त्वविषया जातिविशेषविषयाश्च मन्वादिभिरुक्ताः। ते यथा—'निष्के तु सत्यवचनं द्विनिष्के पादलम्भनम्। त्रिकादर्वाक्तु पुण्यं स्यात्कोशपानमतः परम् ॥' (मनुः ८।११३) 'सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः। गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥' (मनुः—८) इत्यादयः। अत्र च शुद्धिविभावना मनुनोक्ता (८।११४)—'न चाऽऽर्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचिः' इति। आर्तिरपि 'यस्य नो राजदैविकं व्यसनं'





जायते घोरम्' इत्युक्तैव। कालनियमश्च एकरात्रमारभ्य त्रिरात्रपर्यन्तं त्रिरात्रमारभ्य पञ्चरात्रपर्यन्तम्। एकरात्रप्रभृतित्वं कार्यलाघवगौरवपर्यालोचनया द्रष्टव्यम् ॥ एवं दिव्यैर्जयपराजयावधारणे दण्डविशेषोऽपि दर्शितः कात्यायने— 'शतार्धं दापयेच्छुद्धमशुद्धो दन्डभाग्भवेत्' इति। तं दण्डमाह—'विषे तोये हुताशे च तुलाकोशे च तण्डुले। तप्तमाषकदिव्ये च क्रमाद्दण्डं प्रकल्पयेत् ॥ सहस्रं षट्शतं चैव तथा पञ्चशतानि च। चतुस्त्रिद्व्येकमेवं च हीनं हीनेषु कल्पयेत् ॥' इति ॥ 'निह्नवे भावितो दद्याद्' इत्युक्तदण्डेनायं दिव्यनिबन्धनो दन्डः समुच्चीयते ॥

इति दिव्यप्रकरणम् ॥

## CHARCHA

1. देवान् उग्रान्—Mitakshara with ref. to स्मृतिकार, takes उग्रदेव as दुर्गा and आदित्य etc. But दुर्गा is दयायुक्तदेवी to us comp "दुर्गे स्मृता हरसि भीतिम् अशेषजन्तोः···सर्वोपकारकरणाय सदार्द्रचित्ता"। in Sri chandi, though भास्कर is strong to all of us. Rudra however is उग्र to us—the name too is so ॥ समभ्यर्चन is first पूजा before देवतास्नापन ॥ संस्राव्य (सम्+स्रु णिच्+ल्यप्) is keeping of purified water into another पात्र। First there will be अर्चना, then स्नापनार्चना, then संस्रावण of this holy water into another vessel, then there will be taking of this hoty water by the oathtaker. ; this is कोशदिव्य meant for both महाभियोग and स्वल्पाभियोग।

2. पाययेत्—पा+णिच्+लिङयात् ॥ construe—प्राड्विवाकः दिव्यग्राहिणं जलं पाययेत्।

3. चतुर्दशात्—चतुर्दशन्+डट पूरणे=चतुर्दश fourteenth. तस्मात्। Qual. अह्नः।

4. अह्नः—दिग्वाचक "अर्वाक्" शब्दयोगे ५मी ॥ नो=न (not), see ante.

5. राजदैविकम्=Q. व्यसनम्। राज is here राजविषयक by लक्षणा। देव+ठञ् (अध्यात्मादि)=दैविकम् i. e, देवविषयकम्? राजा च दैविकं च राजदैविकम्; or राजदैवे भवम्, ठञ् or better राजदेवे भवम् राजदैविकम् with भवार्थ ठञ् as before.

—: 0 :—

अथ दायविभागप्रकरणम् (The section on division of heritage or Inheritance)

Mita—प्रमाणं मानुषं दैवमिति भेदेन वर्णितम्।
अधुना वर्ण्यते दायविभागो योगमूर्तिना ॥

तत्र 'दाय' शब्देन यद्धनं स्वामिसंवन्धादेव निमित्तादन्यस्य स्वं भवति तदुच्यते। स च द्विविधः—अप्रतिबन्धः, सप्रतिवन्धश्च। तत्र पुत्राणा पौत्राणां च पुत्रत्वेन पौत्रत्वेन च पितृधनं पितामहधनं स्वं भवतीत्यप्रतिवन्धो दायः। पितृव्यभ्रात्रादीनां तु पुत्राभावे स्वाम्यभावे च स्वं भवर्तीति सप्रतिवन्धो दायः। एवं तत्पुत्रादिष्वप्यूहनीयः। विभागो नाम द्रव्यसमुदायविषयाणामनेकस्वाम्यानां तदेकदेशेपु व्यवस्थापनम्। एतदेवाभिप्रेत्योक्तं नारदेन—'विभागोऽर्थस्य पित्र्यस्य तनयैर्यत्र कल्प्यते। दायभाग इति प्रोक्तं व्यवहारपदं बुधैः (ना०१३।१)॥' इति। पित्र्यस्येति स्वत्वनिमित्तसंवन्धोपलक्षणम्। 'तनयैः' इत्यपि प्रत्यासन्नोपलक्षणम्। (१)। इदमिह निरुपणीयम्,—कस्मिन्काले कस्य कथं कैश्च विभागः कर्तव्य इति। तत्र कस्लिन्काले कथं कैश्चेति तत्र तत्र श्लोकव्याख्यान एव वक्ष्यते। कस्य विभाग इत्येतावदिह चिन्त्यते (२)। किं विभागात्स्वत्वमुत स्वस्य सतो विभाग इति। तत्र स्वत्वमेव तावन्निरूप्यते—किं शास्त्रैकसमधिगम्यं स्वत्वमुत प्रमाणान्तरसमधिगम्यमिति। तत्र शास्त्रैकसमधिगम्यमिति तावदुक्तम्;



गौतमवचनात्—'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोः॥' (गौ०१०।३९-४२) इति। प्रमाणान्तरगम्ये स्वत्वे नेदं वचनमर्थवत्स्यात्। तथा स्तेनातिदेशे मनुः(८।३४०) 'योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम्; याजनाध्यापनेनापि यथा स्तेनस्तथैव सः॥' इति। अदत्तादायिनः सकाशाद्याजनादिद्वारेणापि द्रव्यमर्जयतां दण्डविधानमनुपपन्नं स्यात्स्वत्वस्य लौकिकत्वे। अपि च, लौकिकं चेत्स्वत्वं मम स्वमनेनापहृतमिति न ब्रूयात्; अपहर्तुरेव स्वत्वात्। अन्यथाऽन्यस्य स्वं तेनापहृतमिति नापहर्तुः स्वम्। एवं तर्हि सुवर्णरजतादिस्वरूपवदस्य वा स्वमन्यस्य वा स्वमिति संशयो न स्यात्। तस्माच्छास्त्रैकसमधिगम्यं स्वत्वमिति (३)। अत्रोच्यते—'लौकिकमेव स्वत्वं लौकिकार्थक्रियासाधनत्वात् व्रीह्यादिवत्। आहवनीयादीनां हि शास्त्रगम्यानां न लौकिकक्रियासाधनत्वमस्ति॥ नन्वाहवनीयादीनामपि पाकादिसाधनत्वमस्त्येव। नैतत्,—नहि तत्राहवनीयादिरूपेण पाकादिसाधनत्वम्। किं तर्हि? प्रत्यक्षादिपरिदृश्यमानाग्न्यादिरूपेण। इह तु सुवर्णादिरूपेण न क्रयादिसाधनत्वमपि तु स्वत्वेनैव। नहि यस्य यत्स्वं न भवति तत्तस्य क्रयाद्यर्थक्रियां साधयति॥ अपि च,—प्रत्यन्तवासिनामप्यदृष्टशास्त्रव्यवहाराणां स्वत्वव्यवहारो दृश्यते; क्रयविक्रयादिदर्शनात्। किंच,—नियतोपायकं स्वत्वं लोकसिद्धमेवेति न्यायविदो मन्यन्ते। तथा हि—लिप्सासूत्रे तृतीये वर्णके द्रव्यार्जननियमानां क्रत्वर्थत्वे स्वत्वमेव न स्यात्। स्वत्वस्यालौकिकत्वादिति पूर्वपक्षासंभवमाशङ्क्य द्रव्यार्जनस्य प्रतिग्रहादिना स्वत्वसाधनत्वं लोकसिद्धमिति पूर्वपक्षःसमर्थितो गुरुणा—ननु द्रव्यार्जनस्य क्रत्वर्थत्वे स्वत्वमेव न भवतीति याग एव न संवर्त्तेत। प्रलपितमिदं केनापि 'अर्जनं स्वत्वं नापादयतीति विप्रतिषिद्धम्' इति वदता। तथा सिद्धान्तेऽपि स्वत्वस्य लौकिकत्वमङ्गीकृत्यैव विचारप्रयोजनमुक्तम्, अतो 'नियमातिक्रमः पुरुषस्य न क्रतोः' इति। अस्य चार्थ एवं विवृतः—यदा द्रव्यार्जननियमानां क्रत्वर्थत्वं तदा नियमार्जितेनैव द्रव्येण क्रतुसिद्धिर्न नियमातिक्रमार्जितेन द्रव्येण न क्रतुसिद्धिरिति न पुरुषस्य नियमातिक्रमदोषः पूर्वपक्षे। राद्धान्ते

त्वर्जननियमस्य पुरुषार्थत्वात्तदतिक्रमेणार्जितेनापि द्रव्येण क्रतुसिद्धिर्भवति, पुरुषस्यैव नियमातिक्रमदोष इति नियमातिक्रमार्जितस्यापि स्वत्वमङ्गीकृतम्,—अन्यथा क्रतुसिद्ध्यभावात्, न चैतावता चौर्यादिप्राप्तस्यापि स्वत्वं स्यादिति मन्तव्यम्।। लोके तत्र स्वत्वप्रसिद्ध्यभावात्, व्यावहारबिसंवादाच्च एवं प्रतिग्रहाद्युपायके स्वत्वे लौकिके स्थिते—ब्राह्मणस्य प्रतिग्रहादयः उपायाः. क्षत्रियस्य बिजितादयः, वैश्यस्य कृष्यादयः, शुद्रस्य शुश्रूषादय' . इत्यदृष्टार्था नियमाः। रिक्थादयस्तु सर्वसाधारणाः—'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु' ( गौ १०।३९ ) इत्युक्ताः ( ४ )। तत्राप्रतिबन्धो दायी रिक्थम्। क्रयः प्रसिद्धः। संविभाग' सप्रतिवन्धोदायः। परिग्रहोऽनन्यपूर्वस्य जलतृणकाष्ठादेः स्वीकारः। अधिगमो निध्यादेः प्राप्तिः। एतेषु निमित्तेषु सत्सु स्वामी भवति। ज्ञातेषु ज्ञायते स्वामी। ब्राह्मणस्याधिकं लब्धम्' ( गौ० १०।४० ) इति ब्राह्मणस्य प्रतिग्रहादिना यल्लब्धं तदधि कमसाधारणम्। 'क्षत्रियस्य बिजितम्' ( गौ १०।४० ) इत्यत्राधिकमित्यनुबर्तते। क्षत्रियस्य विजयदण्डादिलब्धमसाधारणम्। निर्बिष्टं वैश्यशुद्रयोः' ( गौ० १०।४२ ) इत्यत्राप्यधिकमित्मनुवर्तते। वैश्यस्य कृषिगोरक्षादिलब्धं निर्बिष्टं तदसाधारणम्। शुद्रस्य द्विजशुश्रूषादिना भृतिरूपेन यल्लब्धं तदसाधारणम्। एवमनुलोमजानां प्रतिलोमजानां च लोकप्रसिद्धेषु स्वत्वहेतुषु यद्यदसाधारणमुक्तं 'सूतानामश्वसारथ्यम्' इत्यादि तत्तत्सर्वं निर्बिष्टशब्देनोच्यते सर्वस्यापि भृतिरूपत्वात्॥ 'निर्वेशो भृतिभोगयोः' ( नृ० ना० २१४ ) इति त्रिकाण्डीस्मरणात्। तत्तदसाधारणं वेदितव्यम्। यदपि "पत्नी दुहितरश्चैव' ( ऽl १३५ ) इत्यादिस्मरणं तत्रापि स्वामिसंबन्धितया वहुषु दायबिभागितया प्राप्तेषु लोकप्रसिद्धेऽपि स्वत्वे व्यामोहनिवृत्त्यर्थं स्मरणमिति सर्वमनवद्यम् ( ५ )। यदपि मम स्वमनेनापहृतमिति न ब्रूयात्स्वत्वस्य लौकिकत्व इति,—तदप्यसत्; स्वत्वहेतुभूतक्रयादिसंदेहात्स्वत्वसंदेहोपपत्तेः। बिचारप्रयोजनं तु—'यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम्। तस्योत्सर्गेण शुद्ध्यन्ति जप्येन तपसैव च ॥' इति। शास्त्रैकसमधिगम्ये स्वत्वे। गर्हितेनासत्प्रतिग्रहवाणि-



ज्यादिना लब्धस्य स्वत्वमेव नास्तीति तत्पुत्राणां तदविभाज्यमेव। यदा तु लौकिकं स्वत्वं तदाप्रतिग्रहादिलब्धस्यापि स्वत्वात्तत्पुत्राणां तद्विभाज्यमेव। 'तस्योत्सर्गेण शुद्ध्यन्ति' इति प्रायश्चित्तमर्जयितुरेव, तत्पुत्रादीनां तु दायत्वेन स्वत्वमिति न तेषां दोषसंबन्धः; 'सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः। प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥' इति दशमे मनुस्मरणात्॥ (६)

इदानीमिदं संदिह्यते—'किं बिभागात्स्वमुत स्वस्य सतो विभाग इति। तत्र विभागात्स्वमिति तावद्युक्तम्; जातपुत्रस्याधानविधानात्। यदि जन्मनैव स्वत्वं स्यात्तदोत्पन्नस्य पुत्रस्यापि तत्स्वं साधारणमिति द्रव्यसाध्येष्वाधानादिषु पितुरनधिकारः स्यात्। तथा बिभागात्प्राक् पितृप्रसादलब्धस्य बिभागप्रतिषेधो नोपपद्यते; सर्वानुमत्या दत्तत्वाद्विभागप्राप्त्यभावात्। यथाह—शौर्यभार्याधने चोभे यच्च विद्याधनं भवेत्। त्रीण्यैतान्यविभाज्यानि प्रसादो यश्च पैतृकः॥' ( नारद १३।६ ) इति॥ तथा "भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत्। सा यथाकाममश्नीयाद्दद्याद्वा स्थावराद्दते। इति प्रीतिदानबचनं च नोपपद्यते, जन्मनैव स्वत्वे। नच 'स्थावराद्दते यद्दत्तम्' इति संबन्धो युक्तः; व्यवहितयोजनाप्रसङ्गात्। यदपि—'मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः। स्थावरस्य तु सर्वस्य न पिता न पितामहः ॥' तथा—'पितृप्रसादाद्भुज्यन्ते वस्त्राण्याभरणानि च। स्थाबरं तु न भुज्येत प्रसादे सति पैतृके॥' इति स्थावरस्य प्रसाददानप्रतिषेधबचनं तत्पितामहोपात्तस्थाबरविषयम्। अतीते पितामहे तद्धनं पित्रापुत्रपुत्रयोः साधारणमपि मणिमुक्तादि पितुरेव, स्थावरं तु साधारणमित्यस्मादेव वचनादवगम्यते। तस्मान्न जन्मना स्वत्वं किंतु स्वामिनाशाद्विभागाद्वा स्वत्वम् ( 7 )॥ अत एव पितुरूर्ध्वं विभागात्प्राग्द्रव्यस्वत्वस्य प्रहीनत्वादन्येन गृह्यमाणं न निवार्यत इति चोद्यस्यानवकाशः। तथैकपुत्रस्यापि पितृप्रयाणादेव पुत्रस्य स्वमिति न विभागमपेक्षत इति (७)। अत्रोच्यते—लोकप्रसिद्धमेव स्वत्वमित्युक्तम्। लोके च पुत्रादीनां जन्मनैव

स्वत्वं प्रसिद्धतरं नापह्नवमर्हति। 'विभाग'शब्दश्च बहुस्वामिकधनविषयो लोकप्रसिद्धः, नान्यदीयविषयो न प्रहीनविषयः; तथा 'उत्पत्त्यैवार्थस्वामित्वं लभेतेत्यचार्याः' इति गौतमवचनाच्च। 'मणिमुक्ताप्रवालानाम्' इत्यादिवचनं च जन्मना स्वत्वपक्ष एवोपपद्यते। नच पितामहोपात्तस्थावरबिषयमिति युक्तम्; 'न पिता न पितामहः' इति वचनात्। पितामहस्य हि स्वार्जितमपि पुत्रे पौत्रे च सत्यदेयमिति वचनं जन्मना स्वत्वं गमयति। तथा परमते मणिमुक्ताप्रवालवस्त्राभरणादीनां पैतामहानामपि पितुरेव स्वत्वं; वचनात्, एवमस्मन्मतेऽपि पित्रार्जितानामप्येतेषां पितुर्दानाधिकारः, बचनादित्यविशेषः (८)॥ यत्तु भर्त्रा प्रीतेन' इत्यादिविष्णुवचनं स्थावरस्य प्रतिदानज्ञानं तत्स्वोपार्जितस्यापि पुत्राद्यभ्यनुज्ञयैवेति व्याख्येयम्; पूर्वोक्तैर्मणिमुक्तादिवचनैः स्थावरव्यतिरिक्तस्यैव प्रीतिदानयोग्यत्वनिश्चयात्॥ यदप्यर्थसाध्येषु वैदिकेषु कर्मस्वनधिकार इति, तत्र तद्विधानबलादेवाधिकारी गम्यते। तस्मात्पैतृके पैतामहे च द्रव्ये जन्मनैव स्वत्वम्, तथापि पितुरावश्यकेषु धर्मकृत्येषु वाचनिकेषु प्रसाददानकुटुम्बभरणापद्विमोक्षादिषु च स्थावरव्यतिरिक्तद्रव्यविनियोगे स्वातन्त्र्यमिति स्थितम्। स्थावरे तु स्वार्जिते पित्रादिप्राप्ते च पुत्रादिप्राप्ते च पुत्रादिपारतन्त्र्यमेव 'स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितम्। असंभूय सुतान्सर्वान्न दानं न च विक्रयः॥ ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः। वृत्तिं च तेऽभिकाङ्क्षन्ति न दानं न च विक्रयः॥' इत्यादिस्मरणात्। अस्यापवादः—'एकोऽपि स्थावरे कुर्याद्दानाधमनविक्रयम्। आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः॥' इति। अस्यार्थः—अप्राप्तव्यवहारेषु पुत्रेषु पौत्रेषु वाऽनुज्ञानादावसमर्थेषु भ्रातृषु वा तथाविधेष्वविभक्तेष्वपि सकलकुटुम्बव्यापिन्यामापदि तत्पोषणे वाऽवश्यं कर्तव्येषु च पितृश्राद्धादिषु स्थावरस्य दानाधानबिक्रयमेकोऽपि समर्थः कुर्यादिति (९)॥ यत्तु वचनम्—'विभक्ता वाऽबिभक्ता वा सपिण्डाः स्थावरे समाः। एको ह्यनीशः सर्वत्र दानाधानविक्रये॥' इति, तदप्यविभक्तेषु द्रव्यस्य मध्यस्थत्यादेकस्यानीश्वरत्वात् सर्वाभ्यनुज्ञाऽवश्यं कार्या। विभक्तेषु तूत्तरकालं विभक्ताविभक्तसंशयव्युदासेन व्यवाहरसौकर्याय सर्वाभ्यनुज्ञा न



पुनरेकस्यानीश्वरत्वेन; अतो विभक्तानुमतिव्यतिरेकेणापि व्यवहारः सिद्ध्यत्येवेति व्याख्येयम् (१०)। यदपि—"स्वग्रामज्ञातिसामन्तदायादानुमतेन च। हिरण्योदकदानेन षड्भिर्गच्छति मेदिनी॥' इति, तत्रापि ग्रामानुमतिः, 'प्रतिग्रहप्रकाशः स्यात्स्थावरस्य विशेषतः' ( व्य १७६ ) इति स्मरणात् व्यवहारप्रकाशनार्थमेवापेक्ष्यते, पुनर्ग्रामानुमत्या विना व्यवहारासिद्धिः। सामन्तानुमतिस्तु सीमाविप्रतिपत्तिनिरासाय। ज्ञातिदायादानुमतेस्तु प्रयोजनमुक्तमेव। 'हिरण्योदकदानेन' इति; स्थावरे विक्रयो नास्ति कुर्यादाधिमनुज्ञया' इति स्थावरस्य विक्रयप्रतिषेधात्, 'भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति। उभौ तौ पुण्यकर्माणौ नियतौ स्वर्गगामिनौ॥' इति दानप्रशंसादर्शनाच्च। बिक्रयेऽपि कर्तव्ये सहिरण्यमुदकं दत्वा दानरूपेण स्थावरविक्रयं कुर्यादित्यर्थः। पैतृके पैतामहे च धने जन्मनैव स्वत्वेऽपि विशेषं 'भूर्या पितामहोपात्ता' ( व्य० १२१ ) इत्यत्र वक्ष्यामः॥ इदानीं यस्मिन्काले येन च यथा विभागः कर्त्तव्यस्तद्दर्शयन्नाह—

बिभागञ्चेत्पिता कुर्य्यादिच्छया विभजेत् सुतान।<br>
जेष्ठं बा श्रेष्ठभागेन सर्वे बा स्युः समांशिनः॥ ११४॥

Mitakshara's elucidatory notes—1. human and divine proofs are already stated in various distinctions, now yanjnavalkya the image of yoga is going to explain in details the partition ( विभाग ) of heritage ( दाय )। Here the term दाय signifies "that wealth which goes to another only by reason of relation to the owner ( स्वामिन् )"। It is of two kinds (i) अप्रतिवन्ध ( having no obstruction in getting ) ( ii ) सप्रतिबन्ध ( having obstruction in getting. ) The wealth of father or grandfather becomes the property of sons and grandsons in right of their being sons and grandsons—this is अप्रतिबन्धदाय or obstructionless inheritance.

'शूद्रां द्विजातिभिर्जातो न भूमेर्भागमर्हति' इति। यदि क्रयादिप्राप्ता भूः क्षत्रियादिसुतानां न भवेत्तदा शूद्रापुत्रस्य विशेषप्रतिषेधो नोपपद्यते। यत्पुनः (मनुः)—'ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक्। यदेवास्य पिता दद्यात्तदेवास्य धनं भवेत्॥' इति, तदपि जीवता पित्रा यदि शूद्रापुत्राय किमपि प्रदत्तं स्यात्तद्विषयम्। यदा तु प्रसाददानं नास्ति. तदैकांशभागित्यविरुद्धम्॥ १२५॥

## CHARCHA

1. चतुस्त्रिद्व्येकभागाः—चतुस्त्रिद्व्येकाः भागाः येषाम् (वहु)। Q. ब्राह्मणात्मजाः। So expose—त्रिद्व्येकभागाः (qualifying क्षत्रजाः) etc.

2. वर्णशः—वर्ण should here be taken as a परिमाणशब्द=one unit (एकवचन)। Thus शस् to denote वीप्सा comes by the rule "संख्यैकवचनाच्च वीप्सायाम्"। It has here the sense of अधिकरण। See Mita.

126. Equal division is also advised on a द्रव्य if in previous division this द्रव्य is left out.

अन्योन्यापहृतंद्रव्यं विभक्ते यत्तु दृश्यते।
तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः॥ १२६॥

Prose—विभक्ते सति यत् (किञ्चित) अन्योन्यापहृतं द्रव्यं दृश्यते, तत् पुनस्ते (ते भागिनः) समैः अंशैः विभजेरन् इति स्थितिः (इति शास्त्रमर्य्यादा)।

Beng—বিভাগের পর যদি গোপনে অপহৃত কোন দ্রব্য বা সম্পত্তি কোন উত্তরাধিকারীর হস্তে দেখা যায়, তবে তাহা ও উত্তরাধিকারিগণ সমান অংশে ভাগ করিয়া লইবেন।



Eng.—If after partition, some property is seen or found out under another's custody or usurped by other cosharer, then too all the successors will get equal shares therefrom i. e. out of this.

Mita—अथ सर्वविभागशेषे किञ्चिदुच्यते—"परस्परापहृतं समुदायद्रव्यं विभागकाले च अज्ञातं "विभक्ते पितृधने यद् दृश्यते, तत् समैरंशैर्विभजेरन् इति स्थितिः शास्त्रमर्यादा।

अत्र "समैरंशैः" इति वदता उद्धारविभागो निषिद्धः (division of special विषम deduction or allotment (उद्धार) from a सम्पत्ति is not to be divided]। "विभजेरन्" इति वदता येन दृश्यते तेनैव न ग्राह्यमिति दर्शितम्। एवञ्च बचनस्य अर्थवत्त्वात् न समुदायव्यवहारे दोषाभावपरत्वम्॥

ननु मनुना जेष्ठस्यैव समुदाय व्यवहारे दोषो दर्शित न कनीयसाम्—" "यो ज्योष्ठो विनिकुर्वीत लोभाद्भ्रातॄन् यवीयसः। सोऽज्यैष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः"। इति वचनात्॥ नैतत् (but this is not so), यतः सम्भावितस्वातन्त्र्यस्य पितृस्थानीयस्य ज्येष्ठस्यापि दोषं बदता ज्येष्ठपरतन्त्राणां कनीयसां पुत्रस्थानीयानां दण्डापूपिकनीत्या सुतरां दोषो दर्शित एव तथा [दोष of ज्येष्ठ is specially mentioned, but it does not absolve दोष of कनीयम् by दण्डापूपिकन्याय। (यथा मूषिकेन दण्डोभक्षित इत्यनेन अपूप—(cake) भक्षणमपि आयाति तद्वत्)] अविशेषेणैव दोषो श्रूयते। गौतमः "यो वै भागिनं भागात् नुदते चवते चैनं स यदि चैनं न चयते अथ पुपुत्रमथ पौत्रं चयते" इति; यो भागिनं भागा भागात् नुदते भागात् अपकरोति भागं तस्मै न यच्छति, स भागान्नुन्न एनं नोत्तारं चयते नाशयति दोषिणं करोति। यदि तं न नाशयति तदातस्य पुत्रं पौत्रं वा नाशयति। ज्येष्ठविशेषमन्तरेणैव साधारणद्रव्याप-

हारिणो दोषः श्रुतः। अथ साधारणं द्रव्यमात्मनःस्वं भवति स्वत्वबुद्धया गृह्यमानं न दोषमावहति इति मतम। तदसत्। स्वबुद्धया गृहीतेऽपि अवर्जनीयतया परस्वमपि गृहीतमेव, इति निषधानुप्रवेशात् दोषमावहत्येव ॥ यथा मौद्गे चरौ विपन्ने सदृशतया माषेषु गृह्यमाणेषु "अयज्ञिया वैमाषाः" इति निषेधो न प्रविशति, मुद्गावयवबुद्धया गृह्यमाणत्वात् इति पूर्वपक्षिणा उक्ते मुद्गावयवेषु अवर्जनीयतया माषावयवा अपि गृह्यन्त एव इति निषेधः प्रविशत्येव इति राद्धान्तिना (सिद्धान्तिना) उक्तम्॥ तस्माद् वचनतो न्यायतश्च साधारणद्रव्यापहारे दोषोऽस्त्येव इति सिद्धम् ॥ १२६ ॥

## CHARCHA

1. अन्योन्यापहृतम्—Q. द्रव्यम्। द्रव्य is matter i. e, money or property. अन्येन अन्येन अपहृतम्। See the varttikas here "सर्वनाम्नः कर्मव्यतिहारे द्वे वाच्ये"। "समासवच्च बहुलम्"। "अन्यपरयोर्न समासवत्"। "असमासद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः"। Then अन्यः अन्येन=अन्योन्येन। अन्योन्येन अपहृतम् (गोपितम् इत्यर्थः), ततत्।

127. The share and right of नियोगपुत्र is being stated.

> अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः।
> उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥ १२७ ॥

Prose—अपुत्रेण (देवरादिना) परक्षेत्रे (परभार्य्यायां) नियोगोत्पादितः (गुरुनियोगात् उत्पादितः) असौ सुतः उभयोः (वीजिक्षेत्रिणोः उभयोः) रिक्थी (रिक्थभागी), धर्मतः पिण्डदाता च भवति।

Beng. কোন অপুত্রক দেবরাদি যদি গুরুজনের আজ্ঞানুযায়ী পরস্ত্রীতে পুত্র উৎপাদন করে তবে সেই পুত্রকে "দ্ব্যামুষ্যায়ণ" বলা হয়। এই দ্বিপিতৃক বা দ্ব্যামুষ্যায়ণ পুত্র, বীজী (দেবরাদি)



এবং ক্ষেত্রী (যার স্ত্রীতে পুত্রোৎপাদন হইতেছে) উভয়েরই রিক্থ বা ধনাদি ভাগী হয়। এবং ধর্মানুসারে পিণ্ডদাতাও হয়; [N. B—দ্ব্যামুষ্যায়ণ ছাড়া অন্য নিয়োগোৎপাদিত পুত্র বীজী পিতার ধনভাগী বা পিণ্ডদাতা বা শ্রাদ্ধকর্মকারী হইবে না।]।

Eng. If some sonless one begets at the order of some superior relation, a son in another's wife then this son having practically two fathers is called "द्व्यामुष्यायण"; this son is to inherit the property of both the begetter and that of the mother's own, and morally and legally he is offerer of Pinda in sradh ceremony to both.

Mita—द्व्यामुष्यायणस्य भागविशेषं दर्शयन् तस्य स्वरूपमाह—'अपुत्रां गुर्वनुज्ञातः' (आ० ६८) इत्याद्युक्तविधिना अपुत्रेण देवरादिना परक्षेत्रे परभार्यायां गुरुनियोगेनोत्पादितः पुत्रः उभयोर्वीजिक्षेत्रिणोरसौ रिक्थी रिक्थहारी पिण्डदाता च धर्मत इति। अस्यार्थः—यदाऽसौ नियुक्तो देवरादिः स्वयमप्यपुत्रोऽपुत्रस्य क्षेत्रे स्वपरपुत्रार्थं प्रवृत्तो यं जनयति, स द्विपितृको स्वयमप्यपुत्रोऽपुत्रस्य क्षेत्रे स्वपरपुत्रार्थं प्रवृत्तो यं जनयति, स द्विपितृको द्व्यामुष्यायणो द्वयोरपि रिक्थहारी पिण्डदाता च। यदा तु नियुक्तः पुत्रवान् केवलं क्षेत्रिणः पुत्रार्थं प्रयतते तदा तदुत्पन्नः क्षेत्रिण एव पुत्रो भवति, न वीजिनः। स चन नियमेन वीजिनो रिक्थहारी पिण्डदो वा। यथोक्तं मनुना—"क्रियाभ्युपगमात् क्षेत्रं वीजार्थं यत् प्रदीयते। तस्येह भागिनौ दृष्टौ वीजी क्षेत्रिक एव च"। इति॥ क्रियाभ्युपगमात् इति संविदङ्गीकरणात् क्षेत्रं क्षेत्रस्वामिना वीजवपनार्थं वीजिने दीयते तत्र तस्मिन्क्षेत्रे उत्पन्नस्यापत्यस्य वीजिक्षेत्रिणौ भागिनौ स्वामिनौ दृष्टौ महर्षिभिः। तथा (मनुः ९।५२)—'फलं त्वनभिसंधाय क्षेत्रिणां वीजिनां तथा। प्रत्यक्षं क्षेत्रिणामर्थो वीजाद्योनिर्बलीयसी॥' इति। फलं त्वनभिसंधा-

येति। अत्रोत्पन्नमपत्यमावयोरुभयोरस्त्वित्येवमनभिसंधाय परक्षेत्रे यदपत्यमुत्पाद्यते तदपत्यं क्षेत्रिण एव। यतो बीजाद्योनिर्बलीयसी; गवाश्वादिषु तथा दर्शनात्। अत्रापि नियोगो वाग्दत्ताविषय एव; इतरस्य नियोगस्य मनुना निषिद्धत्वात् (९।५९, ६०)—'देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया प्रजेप्सिताऽधिगन्तव्या सन्तानस्य परिक्षये॥ विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि। एकमुत्पादयेत्पुत्रं न द्वितीयं कथंचन॥' इत्येवं नियोगमुपन्यस्य मनुः स्वयमेव निषेधति (९।६४,६८)—'नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः। अन्यस्मिन्हि नियुञ्जाना धर्मं हन्युः सनातनम्॥ नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित्। न विवाहविधावुक्तं विधवावेदनं पुनः॥ अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः। मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति॥ स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा। वर्णानां संकरं चक्रे कामोपहतचेतनः॥ ततः प्रभृति यो मोहात्प्रमीतपतिकां स्त्रियम्। नियोजयत्यपत्यार्थे गर्हन्ते तं हि साधवः॥' इति॥ नच विहितप्रतिषिद्धत्वाद्विकल्प इति मन्तव्यम्; नियोक्तॄणां निन्दाश्रवणात्, स्त्रीधर्मेषु व्यभिचारस्य बहुदोषश्रवणात, संयमस्य प्रशस्तत्वाच्च। यथाह मनुरेव (५।१५७)—'कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः। नतु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु॥' इति जीवनार्थं पुरुषान्तराश्रयणं प्रतिषिद्धय (मनुः ५।१५८।१६१)—'आसीतामरणात्क्षान्ता नियता ब्रह्मचारिणी। यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम्॥ अनेकानि सहस्राणि कौमारब्रह्मचारिणाम्। दिवं गतानि विप्राणामकृत्वा कुलसंततिम्॥ मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता। स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः॥ अपत्यलोभाद्या तु स्त्री भर्तारमतिवर्तते। सेह निन्दामवाप्नोति परलोकाच्च हीयते॥' इति पुत्रार्थमपि पुरुषान्तराश्रयणं निषेधयति। तस्माद्विहितप्रतिषिद्धत्वाद्विकल्प इति न युक्तम्॥ एवं विवाहसंस्कृतानियोगे प्रतिषिद्धे कस्तर्हि धर्म्यो नियोग इत्यत आह (मनुः ९।६९।७०)—'यस्या म्रियते कन्याया वाचा सत्ये कृते पतिः। तामनेन विधानेन निजो विन्देत देवरः॥ यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम्। मिथो भजेताप्रसवात्सकृत्सकृदृतावृतौ॥'



इति। यस्मै वाग्दत्ता कन्या स प्रतिग्रहमन्तरेणैव तस्याः पतिरित्यस्मादेव वचनादवगम्यते। तस्मिन्प्रेते देवरस्तस्य ज्येष्ठः कनिष्ठो वा निजः सोदरो विन्देत परिणयेत्। यथाविधि यथाशास्त्रमधिगम्य परिणीय अनेन विधानेन घृताभ्यङ्गवानियमादिना शुक्लवस्त्रां शुचिव्रतां मनोवाक्कायसंयतां मिथो रहस्यागर्भग्रहणात्प्रत्यृत्वेकवारं गच्छेत्। अयं च विवाहो वाचनिको घृताभ्यङ्गादिनियमवत्, नियुक्ताभिगमनाङ्गमिति न देवरस्य भार्यात्वमापादयति। अतस्तदुत्पन्नमपत्यं क्षेत्रस्वामिन एव भवति, न देवरस्य संविदा तूभयोरपि॥ १२७॥

128. Twelve varieties of सवर्ण sons are enumerated to determine their shares and rights.

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा॥ १२८॥

गृहे प्रच्छन्नउत्पन्नो गूढजस्तुसुतःस्मृतः।
कानीनः कन्यकाजातो मातामहसुतोमतः॥ १२९॥

अक्षतायां-क्षतायां वा जातः पौनर्भवः सुतः।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्॥ १३०॥

क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयंकृतः।
दत्तात्मा तु स्वयंदत्तो गर्भेविन्नः सहोढजः॥ १३१॥

उत्सृष्टो गृह्यते यस्तु सोऽपविद्धः भवेत् सुतः।
पिण्डदोंशहरश्चैषां पूर्वाभावे परः परः॥ १३२॥

Prose—धर्मपत्नीजः (सुतः) औरसः (स्मृतः); पुत्रिका-सुतः तत्समः (स्मृतः); सगोत्रेण इतरेण (सपिण्डेन देवरेण) वा क्षेत्रजातः क्षेत्रजः स्मृतः; भर्तुंगृहे प्रच्छन्न उत्पन्न सुतः गूढजः स्मृतः; कन्यकाजातः कानीनः मातामहसुतः

मतः ; अक्षतायां क्षतायां वा जातः सुतः पौनर्भवः भवेत् ; माता पिता वा यं दद्यात् स पुत्रः दत्तको भवेत् ; ताभ्यां विक्रीतः सुतः क्रीतः स्यात्, कृत्रिमः स्यात् स्वयंकृतः ; दत्तात्मा तु स्वयं दत्तः स्यात्, गर्भे विन्नः सहोढजः स्यात् ; यस्तु मातापितृभ्याम् उतसृष्टः केनचित गृह्यते स अपविद्धः सुतः भवेत। एषां ( द्वादशप्रकारसुतानां मध्ये ) पूर्वाभावे परः परः पिण्डदः अंशहरः ( रिक्थभाग् ) भवेत्।

Beng—ধর্মপত্নীর গর্ভজাত সুতকে ( পুত্রকে ) ঔরসপুত্র বলা হয় ; ভ্রাতৃহীনা কন্যাকে দানকালে জনকপিতা যদি সর্ত্ত করাইয়া লন, যে এর গর্ভজাত পুত্র আমারই হইবে, তবে সেই পুত্রিকার পুত্রকে পুত্রিকা-পুত্র বলে—এও ঔরসপুত্র-তুল্য। সগোত্র বা সপিণ্ড দেবরাদি হইতে অপুত্রক ব্যক্তির পত্নীতে উৎপন্ন পুত্রকে ক্ষেত্রজ বলে ; স্বামীগৃহে প্রচ্ছন্ন উৎপন্ন সুতকে গূঢ়জ বলা হয় ; কুমারী অবস্থায় জাতপুত্রকে কানীন বলা হয়, সে মাতামহের পুত্র বলিয়া গণ্য হয়। অভুক্তা বা ভুক্তা নারীকে পুনরায় বিবাহ দিলে সে পূনর্ভূ হয়, তার যে পুত্র হয় তাকে পৌনর্ভব বলা হয়। মাতা বা পিতা যদি সজাতীয়ের হাতে পুত্রকে দান করে, তবে সে পুত্র দত্তকপুত্র হয় ; মাতা বা পিতা অভাবে পড়িয়া যে পুত্রকে বিক্রয় করে সে ক্রীতপুত্র ; পুত্রহীন যদি ধনাদিপ্রলোভনদ্বারা কাহাকেও পুত্র বলিয়া গ্রহণ করে, তবে সে স্বয়ংকৃতপুত্র। যে নিজেকে "আমি আপনার পুত্র বলিয়া" আত্মসমর্পণ করে তবে সে স্বয়ংদত্ত পুত্র ; গর্ভে অবস্থানকালে মাতার বিবাহের পর যে পুত্র হয় সে সহোঢ়জ নামে পরিচিত হয়। মাতা পিতা যাকে ত্যাগ কয়িয়াছে এমন পুত্র গ্রহণ করিলে, তাকে অপবিদ্ধ পুত্র বলা হয়। [ এই পুত্র গ্রাহীরই পুত্র। আর উক্ত অন্যান্য স্থলে সবর্ণ হইলেই পুত্ররূপে গণ্য হইয়া থাকে সবর্ণ না হইলে নয়। ]

ঔরসপুত্র, পুত্রিকাপুত্র ইত্যাদি দ্বাদশপ্রকার পুত্র যাহা ক্রমে ক্রমে





বলাহইল, ইহাদের মধ্যে পূর্ব পূর্ব পুত্রের অভাবে পর পর উল্লিখিত পুত্রই পিতার পিণ্ডদাতা হইবে এবং ধনাধিকারীও হইবে।

Eng.—A son born of a legally wedded wife is called "Aurasa Putra", the son of daughter (if she has no brother) is called "Putrikaputra" if there be a contract by the father during her marriage that her son will be the father's own ; this Putrikaputra is equal to an "Aurasa" one ; A "Kshetrajaputra" is one born in another's wife due to "Niyoga" by a "Devara" or aSagotra or a Sapinda ; a son born in husband's abode secretly by a "savarna" is known as "Gudaja-putra" ; son born in a maiden is called "Kanina—" she is regarded as son of grandmother ; a woman whether enjoyed or unenjoyed if married again is called "Punarbhu" and such a one's son is called "Paunarbhava" ; a "Dattaka-putra" ( adopted son ) is one who is given away by parents to kindreds ; a "Kritaputra" is one who is got after being sold by parents in dire straits ; a "Kritrima putra" is ( a parentless ) one who is taken in by showing prospective temptations by a sonless one ; a "Swayam-datta" son is one who comes and surrenders saying "I am yours" ; a "Sahodaja" son is one who was in the womb during his mother's marriage ; a "Apaviddha" son is one who is taken up when forlorn and given up by parents ; of these twelve Varieties of "Savarnajata" sons each subsequent ones will offer "Sradh Cakes" and will inherit

ancestral objects if there be no preceding ones. [अत्र मुख्यगौण-पुत्रानुसारेण दायग्रहणव्यवस्था ]।

Mita—समानासमानजातीयानां पुत्राणां विभागक्लृप्तिरुक्ता, अधुना मुख्यगौणपुत्राणां दायग्रहणव्यवस्थां दर्शयिष्यन् तेषां स्वरूपं तावदाह—उरसोजात औरसः पुत्रः (उरस्+अण्)। स च धर्मपत्नीजः—सवर्णा धर्मविवाहोढ़ा धर्मपत्नी, तस्यांजात औरसपुत्रः मुख्यः। "तत्समः पुत्रिकासुतः"—तत्समः औरससमः, पुत्रिकायाः सुतः पुत्रिकासुतः। अतएव औरससमः। यथाह वशिष्ठः—"अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम्। अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति"। अथवा पुत्रिकैव सुतः, सोप्यौरससमः एव पित्रवयवानाम् अल्पत्वात्, मातवयवानां बाहुल्याच्च। यथाह वशिष्ठः—"तृतीयः पुत्रिकैव"। तृतीयः पुत्रिकैव। द्वग्रामुष्यायणस्तु जनकस्यौरसादपकृष्टः, अन्यक्षेत्रोत्पन्नत्वात्।" "क्षेत्रजः क्षेत्रजातस्तु सगोत्रेण इतरेण वा"—इतरेण सपिण्डेन देवरेण वा उत्पन्नः पुत्रः क्षेत्रजः॥ १२८॥

गूढ़जःपुत्रो भर्त्तृगृहे प्रच्छन्न उत्पन्नः हीनाधिकजातीयपुरुषजत्वपरिहारेण पुरुषजत्वनिश्चयाभावेपि सवर्णनिश्चये सति बोध्यव्यः। कानीनस्तु कन्यकाया-मुत्पन्न पूर्ववत् सवर्णात्। स मातामहस्य पुत्रः। यद्यनूढा साभवेत् तथा पितृगृहे एव संस्थिता, अथोढ़ा वोढ रेव पुत्रः। यथाह मनुः—"पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः। तं कानीनं वदेत् नाम्ना वोढुः कन्यासमुद्भवम्" इति॥ १२९॥

पौनर्भवस्तु पुत्रो अक्षतायां क्षतायां वा पूनर्भ्वां सवर्णादुत्पन्नः। मात्राभर्त्तुरनुज्ञया प्रोषिते प्रेते वा भर्त्तरि पित्रा वोभाभ्यां वा सवर्णाय यस्मै दीयते, सतस्य दत्तकः पुत्रः। यथाह मनुः—"माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः" इति। आपद्ग्रहणाद् अनापदि न देयः, दातुरयं प्रतिषेधः। तथा एकपुत्रो न देयः। "न त्वेवैकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा" इति वसिष्ठस्मरणात् (वशिष्ठः-वसिष्ठ इत्यपि)।



तथानेकपुत्रसद्भावेपि ज्येष्ठो न देयः। "ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः" (मनुः)—इति तस्यैव पुत्रकार्य्यकरणे मुख्यत्वात्। पुत्रप्रतिग्रहप्रकारश्च "पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि चावेद्य निवेशनमध्ये व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसन्निकृष्ट एव प्रतिगृह्णीयात्" इति वसिष्ठेनोक्तः। "अदूरबान्धवम्" इत्यत्यन्तदेशभाषाविप्रकृष्टस्य प्रतिषेधः। एवं क्रीतस्वयंदत्तकृतिमेष्वपि योजनीयम्। सामान्यन्यायत्वात्॥ १३०॥

क्रीतस्तु पुत्रस्ताभ्यां मातापितृभ्यां मात्रा पित्रा वा बिक्रीतः पूर्ववत्। तथैकं ज्येष्ठं पुत्रं च वर्जयित्वा आपदि सवर्ण इत्येव॥ यत्तु मनुनोक्तम्—"क्रीणीयाद यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्। स क्रीतकः सुतस्तस्य सदृशोऽसदृशोपि वा"। तद्गुणैः सदृशोऽसदृशो वेति व्याख्येयम्, न जात्या। "सजातयेष्वयं प्रोक्तस्तनयेषु" इत्युपसंहारात॥ कृत्रिमः स्यात् स्वयंकृतः—कृत्रिमस्तु पुत्रः स्वयं पुत्रार्थिना धमक्षेप्रदर्शनादिप्रलोभनैः पुत्रीकृतः मातापितृहीनः ताभ्यां त्यक्तो वा "तवाहं पुत्रो भवामीति स्यंदत्तत्वमुपगतः। सहोढजस्तु गर्भे स्थितो गर्भिण्यां परिणीतायां यः परिणीतः स बोढुः पुत्रः॥ १३१॥

अपविद्धो मातापितृभ्यामुत्सृष्टः यो गृह्यते स ग्रहीतुः पुत्रः। सर्वत्र सवर्ण इत्येव॥ एवं मुख्यामुख्यपुत्राननुक्रम्य एतेषां दायग्रहणे क्रममाह—एतेषां पूर्वोक्ताणां द्वादशानां पूर्वस्य पूर्वस्याभावे उत्तर उत्तरः श्राद्धदोंऽशहरो धनहरो वेदितव्यः। ओरसपौत्रिकेयसमवाये औरसस्यैव धनग्रहणे प्राप्ते मनुरपवादमाह (९।१३४)—'पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते। समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः॥' इति। तथा अन्येषामपि पूर्वस्मिन्पूर्वस्मिन्सत्यप्युत्तरेषां पुत्राणां चतुर्थांशभागित्वमुक्तं वसिष्ठेन। 'तस्मिंश्चेत्प्रतिगृहीते औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तकः' (१५।९) इति। 'दत्तक'ग्रहणं क्रीतकृत्रिमादीनां प्रदर्शनार्थम्; पुत्रीकरणा-विशेषात्। तथा च कात्यायनः—'उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः। सवर्णा असवर्णास्तु ग्रासाच्छदनभाजनाः॥' इति। सवर्णा दत्तकक्षेत्रजादयस्ते

-सत्यौरसे चतुर्थांशहराः। असवर्णाः कानीनगूढोत्पन्नसहोढजपौनर्भवास्ते त्वौरसे सति न चतुर्थांशहराः, किंतु ग्रासाच्छदनभाजनाः। यदपि विष्णुवचनम्—'अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः। पौनर्भवश्च नैवैते पिण्डरिक्थांशभागिनः॥' इति, तदप्यौरसे सति चतुर्थांशनिषेधपरमेव; औरसाद्यभावे तु कानीनादीनामपि सकलपित्र्यधनग्रहणमस्त्येव। 'पूर्वाभावे परः परः' इति वचनात्॥ यदपि मनुवचनम् (९।१६३)—'एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः। शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम्॥ इति, तदपि दत्तकादीनामौरसप्रतिकूलत्वे निर्गुणत्वे च वेदितव्यम्। तत्र क्षेत्रजस्य विशेषो दर्शितस्तेनैव (मनुना)—'षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात्। औरसो विभजन्दायं पित्र्यं पञ्चममेव वा॥' इति प्रतिकूलत्वनिर्गुणत्वसमुच्चये षष्ठमंशम्, एकतरसद्भावे पञ्चममिति विवेक्तव्यम्॥ यदपि मनुना पुत्राणां षट्कद्वयमुपन्यस्य पूर्वषट्कस्य दायादवान्धवत्वमुक्तम् उत्तरषट्कस्यादायादवान्धवत्वमुक्तम् (मनुना)—'औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट्॥ कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा। स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः॥' इति, तदपि स्वपितृसपिण्डसमानोदकानां सनिहितरिक्थहरान्तराभावे पूर्वषट्कस्य तद्रिक्थहरत्वम्, उत्तरषट्कस्य तु तन्नास्ति। बान्धवत्वं पुनः समानगोत्रत्वेन चोदकप्रदानादिकार्यकरत्वं वर्गद्वयस्यापि सममेवेति व्याख्येयम्॥ (मनुः आह)—'गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः। गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा॥' इत्यत्र 'दत्रिम'ग्रहणस्य पुत्रप्रतिनिधिप्रदर्शनार्थत्वात्। पितृधनहारित्वं तु पूर्वस्य पूर्वस्याभावे सर्वेषामविशिष्टम्। (मनुः)—'न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः।' इत्यौरसव्यतिरिक्तानां पुत्रप्रतिनिधीनां सर्वेषां रिक्थहारित्वप्रतिपादनपरत्वात्। औरसस्य तु (मनुः वदति)—'एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः।' इत्यादौ पुत्रव्यतिरिक्तरिक्थभागिविषयत्वेन प्रसिद्धत्वाच्च। वासिष्ठादिषु वर्गद्वयेऽपि कस्यचिद्व्यत्ययेन पाठो गुणवदगुणवद्विषयो वेदितव्यः। गौतमीये तु 'पौत्रिके यस्य दशमत्वेन



पाठो विजातीयविषयः। तस्मात्स्थितमेतत्पूर्वपूर्वाभावे परः परोंऽशभागिति॥ यत्तु (९।१८२)—'भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत्। सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत्॥' इति, तदपि भ्रातृपुत्रस्य पुत्रीकरणसंभवेऽन्येषां पुत्रीकरणनिषेधार्थम्, न पुनः पुत्रत्वप्रतिपादनाय। 'तत्सुता गोत्रजा बन्धुः—' (sl १३५) इत्यनेन विरोधात्॥ १३२॥

## CHARCHA

1. तत्समः—तेन समः, ३या तत्। तस्य समः=तत्समः, शेषषष्ठीतत is also correct. See also our "न तितिक्षासममस्ति साधनम्"—Kirata II.

2. स्वयंकृतः—"स्वयं क्तेन" इति ३तत। So also स्वयंदत्तः।

3. कानीनः—कन्याया अपत्यम इति कानीन by कन्यायाः कनीन च" इति अण् प्रत्ययसन्नियोगेन कनीनादेशश्च।

4. अंशहरः—अंशं हरतीति कर्त्तरि अच् प्रत्ययः by the rule "हरतेरनुद्यमनेऽच्"। Note समान+वर्ण=सवर्ण with स for समान, similarly सगोत्र, etc.

133-134 – Now shares of विजातीय पुत्र are being said.

> सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः।
> जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत्॥ १३३॥
> मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिकम्।
> अभ्रातृको हरेत्सर्वं दुहितॄणां सुताद्दते॥ १३४॥

Prose – अयं विधिः (पूर्वश्लोकोक्तविधिः) मया सजातीयेषु एव तनयेषु प्रोक्तः। शूद्रेण दास्यामुत्पन्नः पुत्रः कामतः (पितुरिच्छया) अंशहरः भवेत्।

पितरि मृते भ्रातरः तं (दासीपुत्रम्) अर्धभागिकम् (अर्धभागयुक्तम्) कुर्य्युः। अभ्रातृकः (दासीपुत्रः), दुहितॄणां सुतात्‌ऋते (दुहितृ-सुताभावे) सर्वं हरेत्।

Beng. পূর্বশ্লোকোক্ত বিধি যাহা উক্ত হইয়াছে তাহা সজাতীয় বা সবর্ণ পুত্র বিষয়েই প্রযোজ্য। শূদ্রপিতা যদি সেবা দাসীতে পুত্র উৎপাদন করে, তবে ঈদৃশ পুত্র পিতার ইচ্ছানুসারে সম্পত্তির ভাগ পাইবে বা ধনভাগী হইবে। আর পিতার মৃত্যুর পর পরিণীতা স্ত্রীর পুত্রগণ, (অর্থাৎ দাসী পুত্রের ভাইয়েরা) নিজ প্রাপ্য অংশের অর্দ্ধেক দিবে। আর পরিণীতা স্ত্রীর পুত্র না থাকিলে দাসী পুত্রই সব পাইবে। তবে দৌহিত্র থাকিলে, দাসীপুত্র কিছু অংশ পাইবে মাত্র।

Eng. This procedure as said by me in the previous sloka is for सवर्ण-सजातीय sons ; if however a sudra begets a son in his maidservant, then this son will get share in property according to father's will ; the father being dead, he having other legal sons that are brothers to this maid's son, will give him share half of their own ; but father having no legal sons, this दासीपुत्र (maid's son) will inherit everything ; this last rule will hold good if dead father's have no daughter's sons ; in this case दासीपुत्र will get a share as before ( see Mita ).

Mita—इदानीमुक्तोपसंहारव्याजेन तत्रैव नियममाह—"समानजातीयेषु एव पुत्रेषु अयं—" पूर्वाभावे परः परः इत्युक्तो विधि", न भिन्नजातीयेषु। तत्र च कानीन गूढोत्पन्नसहोढजपौनर्भवाणां सवर्णत्वं जनकद्वारेण, न स्वरूपेण; तेषां वर्णजातिलक्षणाभावस्य उक्तत्वात्। तथानुलोमजानां मूर्धावसिक्तादीनाम् औरसेषु अन्तर्भावात् तेषामप्यभावे क्षेत्रजादीनां दायहरत्वं बोध्यव्यम्।



शूद्रपुत्रस्तु औरसोपि कृत्स्नं भागं अन्याभावेपि न लभते। यथाह मनुः—"यद्यपि स्यात्तु सत्पुत्रो यद्यपुत्रोपि वा भवेत्। नाधिकं दशमात् दद्यात् शूद्रापुत्राय धर्मतः।" यदि सत्पुत्रः विद्यमानद्विजातिपुत्रः यद्यपुत्रः अविद्यमान-द्विजातिपुत्रो वा स्यात्, तस्मिन् मृते क्षेत्रजादिर्वा अन्यो वा सपिण्डः शूद्रापुत्राय तद्धनात् दशमांशादधिकं न दद्याद् इति अस्मादेव क्षत्रियावैश्यापुत्रयोः सवर्णापुत्राभावे सकलधनग्रहणं गम्यते ॥

अधुनाशूद्रधनविभागे विशेषमाह—"शूद्रेण दास्यामुत्पन्नः पुत्रः", "कामतः" पितुरिच्छया भागं लभते। पितुरूर्ध्वं तु यदि परिणातापुत्राः सन्ति तदा तेभ्रातरस्तं दासीपुत्रं अर्धभागिनं कुर्य्युः, स्वभागात् अर्द्धं दद्युः इत्यर्थः। अथ परिणीताः पुत्रा न सन्ति तदा कृत्स्नं धनं दासीपुत्रो गृह्णीयात्। यदि परिणीतात् दुहितरः तत्पुत्रा वा न सन्तित् तत्सद्भावे अर्धभागिक एव दासीपुत्रः। अत्र च शूद्रग्रहणात् द्विजातिना दास्यामुत्पन्नः पितुरिच्छयाप्यंशं न लभन्ते नाप्यर्धम्। दुहितर एव कृत्स्नम्। किन्तु अनुकूलश्चेत् जीवनमात्रं (ग्रासाच्छादनं) लभते॥ १३४॥

CHARCHA

1. अर्धभागिकम्—अर्धं भागस्य इति अर्धभागः by the rule "अर्धं नपुंसकम् ("समांशवाची अर्धशब्दो नित्यं क्लीबे" इत्येकदेशितत्)। अर्धभागः अस्ति अस्य इति अस्त्यर्थे ठन् by the rule "अत इतिठनौ"। तम्। Qual. तम्।

2. सुतात्—ऋतेशब्दयोगे ५मी। see ante.

135-136—दायविधि in order of मुख्यगौणसुत is stated now general दायादक्रम is stated.

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।
तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः॥ १३५॥
एषामभावेपूर्वस्य धनभागुत्तरोत्तरः।
स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः॥ १३६॥

Prose—( अपुत्रस्य स्वर्यातस्य मरणात् परं ) पत्नी दुहितरश्च पितरौ ( मातापितरौ ) भ्रातरस्तथा तत्सुताः „ ( भ्रातृसुताः ) गोत्रजाः बन्धु-शिष्य-सब्रह्मचारिणः धनभाजः भवन्ति। एषाम पूर्वस्य अभावे उत्तरोत्तरः धनभाग् भवति। सर्ववर्णेषु अयं विधिः।

Beng. কেহ অপুত্রক হইয়া পরলোকগমন করিলে, তার সম্পত্তিব ( ধনাদির প্রথমে পত্নী, তদভাবে দুহিতা, তদভাবে পিতা ও মাতা, তদভাবে ভ্রাতৃগণ, তদভাবে ভ্রাতৃপুত্রগণ, তদভাবে গোত্রজ কেহ, তদভাবে বন্ধুবর্গ ( আত্মবন্ধু, পিতৃবন্ধু, ও মাতৃবন্ধু ), তদভাবে শিষ্য ( সৎশিষ্য ), তদভাবে সব্রহ্মচারী অর্থাৎ সহাধ্যায়ী, ( যথাক্রমে পূর্বাভাবে পরবর্ত্তীগণ ) অধিকারী হইবে। সর্ববর্ণের পক্ষেই এই বিধি বলবৎ থাকিবে।

Eng. If some one dies sonless, then after his death his property will devolve in order—first on—wife, daughter, parents, brothers, nephews, गोत्रज kindreds, his related friends ( friends of self, of father, of mother ) his good disciple or his schoolfellow ( pupils of the same "acharyya" ); the preceding ones being not available succeeding ones will in order get the property ; this is the rule for all persons of all बर्ण or caste.

[ N. B.—By पत्नी is meant legally religiously married wife ; if wives are many then this share will be by allotment among सजातीय and विजातीय पत्नी। Note sloka 132 has said of दायग्रहण of 12 varieties of sons in order ; here it says दायग्रहण of an अपुत्रक in order of पत्नी, दुहितृ etc. ]



Mita—मुख्यगौणसुता दायं गृह्णन्ति इति निरूपितं, तेषामभावे सर्ववर्णानां दायादक्रम उच्यते—पूर्वोक्ता द्वादशपुत्रा यस्य न सन्ति असावपुत्रः, तस्यापुत्रस्य स्वर्यातस्य परलोकं गतस्य धनभाक् धनग्राही, एषां पत्न्यादीनामनुक्रान्तानां मध्ये पूर्वस्य पूर्वस्याभाव उत्तर उत्तरो धनभागिति संबन्धः। सर्वेषु मूर्धावसिक्तादिषु अनुलोमजेषु सुतादिषु प्रतिलोमजेषु वर्णेषु च ब्राह्मणादिषु अयं दायग्रहणविधिर्दायग्रहणक्रमो वेदितव्यः। तत्र प्रथमं पत्नी धनभाक्। [ पत्नी विवाहसंस्कृता 'पत्युर्नो यज्ञसंयोगे' ( अये ४।१।३३ ) इति स्मरणात्। एकवचनं च जात्यभिप्रायेण ]। ताश्च बह्वयश्चेत्सजातीया विजातीयाश्च तदा यथांशं विभज्य धनं गृह्णन्ति। [ वृद्धमनुरपि पत्न्याः समग्रधनसंबन्धं वक्ति—'अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता। पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च॥ इति। वृद्धविष्णुरपि—'अपुत्रधनं पत्न्यभिगामि, तदभावे दुहितृगामि, तदभावे पितृगामि, तदभावे मातृगामि' इति। कात्यायनोऽपि—पत्नी पत्युर्धनहरी या स्यादव्यभिचारिणी। तदभावे तु दुहिता यद्यनूढा भवेत्तदा॥' इति। तथा 'अपुत्रस्याथ कुलजा पत्नी दुहितरोऽपि वा। तदभावे पिता माता भ्रातापुत्राश्च कीर्तिताः॥' इति। वृहस्पतिरपि ( वृद्ध २५।४८ )—'कुल्येषु विद्यमानेषु पितृभ्रातृसनाभिषु। असुतस्य प्रमीतस्य पत्नी तद्भागहारिणी॥' ] एतद्विरुद्धानीव वाक्यानि लक्ष्यन्ते ( ना० १३।२४–२६ )–'भ्रातॄणामप्रजाः प्रेयात्कश्चिच्चेत्प्रव्रजेत वा। विभजेरन्धनं तस्य शेषास्ते स्त्रीधनं विना॥ भरणं चास्य कुर्वीरन्स्त्रीणामाजीवनक्षयात्। रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु तु॥ इति पत्नीसद्भावेऽपि भ्रातॄणां धनग्रहणं पत्नीनां च भरणमात्रं नारदेनोक्तम्। मनुना तु (९।१८५ )—'पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा' इत्यपुत्रस्य धनं पितुर्भ्रातुर्वेति दर्शितम्। तथा ( मनुः ९।२१३ )–'अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्। मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम्॥' इति मातुः पितामह्याश्च धनसंबन्धो दर्शितः। शङ्खेनापि–'स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा वा पत्नी' इति भ्रातॄणां पित्रोर्ज्येष्ठायाश्च पत्न्याः क्रमेण धनसंबन्धो दर्शितः।

कात्यायनेनापि — 'विभक्ते संस्थिते द्रव्यं पुत्राभावे पिता हरेत्। भ्राता वा जननी वाऽथ माता वा तत्पितुः क्रमात्॥' इत्येवमादीनां विरुद्धार्थानां वाक्यानां धारेश्वरेण व्यवस्था दर्शिता — 'पत्नी गृह्णीयात्' इत्येतद्वचनजातं विभक्तभ्रातृस्त्रीविषयम्। सा च यदि नियोगार्थिनी भवति। कुत एतत् नियोगसव्यपेक्षायाः पत्न्या धनग्रहणं न स्वतन्त्रायां इति। 'पिता हरेदपुत्रस्य' (मनुः ९।१८५) इत्यादिवचनात्तत्र व्यवस्थाकरणं वक्तव्यम्। नान्यद्व्यवस्थाकारणमस्ति इति गौतमवचनाच्च (२९।६।६) 'पिण्डगोत्रर्षिसंबन्धा रिक्थं भजेरन् स्त्री वाऽनपत्यस्य बीजं लिप्सेत' इति। अस्यार्थः — पिण्डगोत्रर्षिसंबन्धा अनपत्यस्य रिक्थं भजेरन्स्त्री वा रिक्थं भजेत् यदि वीजं लिप्सेतेति। मनुरपि (९।१४६)—'धनं यो विभृयाद्भ्रातुर्मृतस्य स्त्रियमेव वा। सोऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम्॥' इति। अनेनैतद्दर्शयति विभक्तधनेऽपि भ्रातर्युपरतेऽपत्यद्वारेणैव पत्न्या धनसंबन्धो नान्यथेति। तथाऽविभक्तधनेऽपि (मनुः ९।१२०) — 'कनीयाञ्ज्येष्ठभार्यायां पुत्रमुत्पादयेद्यदि। समस्तत्र विभागः स्यादिति धर्मो व्यवस्थितः॥' इति। तथा वसिष्ठोऽपि (१७।४८) 'रिक्थलोभान्नास्ति नियोगः' इति रिक्थलोभान्नियोगं प्रतिषेधयन् नियोगद्वारक एव पत्न्याः धनसंबन्धो नान्यथेति दर्शयति। नियोगाभावेऽपि पत्न्या भरणमात्रमेव नारदवचनात् 'भरणं चास्य कुर्वीरन्स्त्रीणामाजीवनक्षयात्' इति। योगीश्वरेणापि किल वक्ष्यते (व्य० १४२)—'अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः। निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च॥' इति। अपि च, द्विजातिधनस्य यज्ञार्थत्वात्स्त्रीणां च यज्ञेऽनधिकाराद्धनग्रहणमयुक्तम्। यथा च केनापि स्मृतम् — 'यज्ञार्थं द्रव्यमुत्पन्नं तत्रानधिकृतास्तु ये। अरिक्थभाजस्ते सर्वे ग्रासाच्छादनभाजनाः॥ यज्ञार्थं विहितं वित्तं तस्मात्तद्विनियोजयेत्। स्थानेषु धर्मजुष्टेषु न स्त्रीमूर्खविधर्मिषु॥' इति,—तदनुपपन्नम्; 'पत्नी दुहितरः' (व्य० १३५) इत्यत्र नियोगस्याप्रतीतेरप्रस्तुतत्वाच्च। अपि चेदमत्र वक्तव्यम्,— पत्न्याः धनग्रहणे नियोगो वा निमित्तं तदुत्पन्नमपत्यं वा। तत्र नियोगस्यैव निमित्तत्वे अनुत्पादितपुत्राया अपि धनसंबन्धो न प्राप्नोति। अथ तदपत्यस्यैव



निमित्तत्वं, तथा सति पुत्रस्यैव धनसंबन्धात्पत्नीति नारब्धव्यम्॥

अथ स्त्रीणां पतिद्वारको धनसंबन्धः पुत्रद्वारको वा नान्यथेति मतम्,— तदप्यसत्; (मनुः ९।१९४)—'अध्यग्न्यध्यावाहनिकं दत्तं च प्रीतिकर्मणि। भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम्॥' इत्यादिविरोधात्। किंच; सर्वथा पुत्राभावे 'पत्नी दुहितरः' इत्यारब्धम्। तत्र नियुक्ताया धनसंबन्धं वदता क्षेत्रजस्यैव धनसंबन्ध उक्तो भवति। स च प्रागेवाभिहित इति 'अपुत्रप्रकरणे पत्नी'ति नारब्धव्यम्। अथ पिण्डगोत्रर्षिसंबन्धा रिक्थं भजेरन्स्त्री वाऽनपत्यस्य वीजं लिप्सेत' (गौ० २८।१९) इति गौतमवचनान्नियुक्ताया धनसंबन्ध इति। तदप्यसत्,—नहि यदि बीजं लिप्सेत तदाऽनपत्यस्य स्त्री धनं गृह्णीयादित्ययमर्थोऽस्मात्प्रतीयते। किंतु 'अनपत्यस्य धनं पिण्डगोत्रर्षिसंबन्धा भजेरन्स्त्री वा सा स्त्री बीजं वा लिप्सेत संयता वा भवेत्' इति तस्या धर्मान्तरोपदेशः; 'वा'शब्दस्य पक्षान्तरवचनत्वेन यद्यर्थाप्रतीतेः। अपि च संयताया एव धनग्रहणं युक्तं, न नियुक्तायाः स्मृतिलोकनिन्दितायाः। 'अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता। पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत॥' इति संयताया एव धनग्रहणमुक्तम्॥

तथा नियोगश्च निन्दितो मनुना (९।६४)—'नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः। अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम्॥' इत्यादिना। यत्तु वसिष्ठवचनम् (१७।६५) 'रिक्थलोभान्नास्ति नियोगः' इति, तदविभक्ते संसृष्टिनि वा भर्तरि प्रेते तस्या धनसंबन्धो नास्तीति स्वापत्यस्य धनसंबन्धार्थं नियोगो न कर्तव्य इति व्याख्येयम्। यदपि नारदवचनम् (१३।२३) — 'भरणं चास्य कुर्वीरन्स्त्रीणामाजीवनक्षयात्' इति, तदपि 'संसृष्टानां तु यो भागस्तेषामेव स इष्यते' इति संसृष्टानां प्रस्तुतत्वात्तत्स्त्रीणामनपत्यानां भरणमात्रप्रतिदानपरम्। नच 'भ्रातृणामप्रजाः प्रेयात्' (ना० १३।२४) इत्येतस्य संसृष्टिविषयत्वे 'संसृष्टानां तु यो भाग' (ना० १३।२४) इत्येनेन पौनरुक्त्यमाशङ्कनीयम्। यतः पूर्वोक्तविवरणेन स्त्रीधनस्याविभाज्यत्वं तत्स्त्रीणां च भरणमात्रं विधीयते। यदपि 'अपुत्रा योषितश्चैषाम्' (व्य० १४०)

इत्यादिवचनं, तत् क्लीवादिस्त्रीविषयमिति वक्ष्यते। यत्तु 'द्विजातिधनस्य यज्ञार्थत्वात्स्त्रीणां च यज्ञेऽनधिकाराद्धनग्रहणमयुक्त'मिति,—तदसत्; सर्वस्य द्रव्यजातस्य यज्ञार्थत्वे दानहोमाद्यसिद्धेः। अथ यज्ञशब्दस्य धर्मोपलक्षणत्वाद्दान-होमादीनामपि धर्मत्वात्तदर्थत्वमविरुद्धमिति मतम्। एवं तर्ह्यर्थकामयोर्धन-साध्ययोरसिद्धिरेव स्यात्। तथा सति 'धर्मार्थकामान्स्वे काले यथाशक्ति न हापयेत्' (आ० ११५)। तथा 'न पूर्वाह्णमध्यन्दिनापराह्णानफलान्कुर्याद्यथाशक्ति धर्मार्थकामेभ्यः' (गौ० ९।२४)। तथा 'न तथैतानि शक्यन्ते संनियन्तुमसेवया' (मनुः २।९६) इत्यादियाज्ञवल्क्यगौतममनुवचनविरोधः। अपि च धनस्य यज्ञार्थत्वे 'हिरण्यं धार्यम्' इति हिरण्यसाधारणस्य क्रत्वर्थतानिराकरणेन पुरुषार्थत्वमुक्तं तत्प्रत्युद्धृतं स्यात्। किंच यज्ञशब्दस्य धर्मोपलक्षणपरत्वे स्त्रीणामपि पूर्तधर्माधिकाराद्धनग्रहणं युक्ततरम्। यत्तु पारतन्त्र्यवचनं 'न स्त्री स्वातन्त्र्यमर्हति' (मनुः ९।३) इत्यादि तदस्तु पारतन्त्र्यं, धनस्वीकारे तु को विरोधः॥ कथं तर्हि 'यज्ञार्थं द्रव्यमुत्पन्नम्' इत्यादिवचनम्? उच्यते—'यज्ञार्थमेवार्जितं यद्धनं तद्यज्ञ एव नियोक्तव्यं पुत्रादिभिरपी'त्येवं परं तत्।—'यज्ञार्थं लब्धमददद्भासः काकोऽपि वा भवेत्' (आ० १२७) इति दोषश्रवणस्य पुत्रादिष्वप्यविशेषात्। यदपि कात्यायनेनोक्तम्—'अदायिकं राजगामि योषिद्भृत्यौर्ध्वदेहिकम्। अपास्य श्रोत्रियद्रव्यं श्रोत्रियेभ्यस्तदर्पयेत्॥' इति। अदायिकं दायादरहितं यद्धनं तद्राजगामि राज्ञो भवति, योषिद्भृत्यौर्ध्व-दैहिकमपास्य, तत्स्त्रीणामशनाच्छादनोपयुक्तं और्ध्वदेहिकं धनिनः श्राद्धाद्युपयुक्तं चापरस्य परिहृत्य राजगामि भवतीति संबन्धः। अस्यापवाद उत्तरार्धे। श्रोत्रियद्रव्यं च योषिद्भृत्यौर्ध्वदेहिकमपास्य 'श्रोत्रियायोपपादये'दिति, तदप्यवरुद्धस्त्रीविषयम्; योषिद्ग्रहणात्। नारदवचनं च (१३।५२)—'अन्यत्र ब्राह्मणात्किंतु राजा धर्मपरायणः। तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः॥' इत्यवरुद्धस्त्रीविषयमेव स्त्रीशब्दग्रहणात्। इह तु 'पत्नी'शब्दादूढायाः संयताया धनग्रहणमविरुद्धम्। तस्माद्विभक्तासंसृष्टिन्यपुत्रे स्वर्याते पत्नी धनं प्रथमं गृह्णातीत्ययमर्थः सिद्धो भवति। विभागस्योक्तत्वात्संसृष्टिनां तु वक्ष्यमाणत्वात्।



एतेनाल्पधनविषयत्वं श्रीकरादिभिरुक्तं निरस्तं वेदितव्यम्। तथा चौरसेषु पुत्रेषु सत्स्वपि जीवद्विभागे अजीवद्विभागे च पत्न्याः पुत्रसमांशग्रहणमुक्तम् (व्य० ११५)—'यदि कुर्यात्समानंशान् पत्न्यः कार्याः समांशिकाः' इति। तथा—'पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत्' इति च, तथासत्यपुत्रस्य स्वर्यातस्य धनं पत्नी भरणादतिरिक्तं न लभत इति व्यामोहमात्रम्। अथ 'पत्न्यः कार्याः समांशिका' (व्य० ११५) इत्यत्र 'माताप्यंशं समं हरेत्' (व्य० १२३) इत्यत्र च जीवनोपयुक्तमेव धनं स्त्री हरतीति मतं,—तदसत्; 'अंश'शब्दस्य 'सम'शब्दस्य चानर्थक्यप्रसङ्गात्। स्यान्मतम्—बहुधने जीवनोपयुक्तं धनं गृह्णाति अल्पे तु पुत्रांशसमांशं गृह्णातीति। तच्च न विधिवैषम्यप्रसङ्गात्। तथा हि 'पत्न्यः कार्याः समांशिकाः' 'माताप्यंशं समं हरेत्' इति च बहुधने जीवनमात्रोपयुक्तं वाक्यान्तरमपेक्ष्य प्रतिपादयति, अल्पधने तु पुत्रांशसमंशं प्रतिपादयतीति। यथा चातुर्मास्येषु 'द्वयोः प्रणयन्ति' इत्यत्र पूर्वपक्षिणा सौमिकप्रणयनातिदेशे हेतुत्वेन प्राप्ताया उत्तरवेद्या 'न वैश्वदेवे उत्तरवेदिमुपकिरन्ति न शुनासीरीये' इत्युत्तरवेदिप्रतिषेधे दर्शिते राद्धान्तैकदेशिना 'न सौमिकप्रणयनाति-देशप्राप्ताया उत्तरवेद्याः प्रथमोत्तमयोः पर्वणोरयं प्रतिषेधः किंतूपात्र वपन्तीति प्राकरणिकेन वचनेन प्राप्ताया उत्तरवेद्याः प्रतिषेधोऽयमित्यभिहिते पुनः पूर्वपक्षिणा 'उपात्र वपन्ति' इति प्रथमोत्तमयोः पर्वणोः प्रतिषेधमपेक्ष्य पाक्षिकीमुत्तरवेदिं प्रापयति। मध्यमयोस्तु निरपेक्षमेव नित्यवदुत्तरवेदिं प्रापयति' (जै० ७।३।२३-२४) इति विधिवैषम्यं दर्शितम्। राद्धान्तेऽपि विधिवैषम्यभयात्प्रथमोत्तमयोः पर्वणोरुत्तरवेदिप्रतिषेधो नित्यानुवादो 'द्वयोः प्रणन्ति' इत्याद्यर्थवादपर्यालोचनया 'उपात्र वपन्ति' इति मध्यमयोरेव वरुणप्रघाससाकमेधपर्वणोरुत्तरवेदिं विधत्त इति दर्शितम्। यदपि मतम् (मनुः ९।१८५)—'पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा' इति मनुस्मरणात्, तथा—'स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा वा पत्नी' इति शङ्खस्मरणाच्च अपुत्रस्य धनं भ्रातृगामीति प्राप्तं, 'भरणं चास्य कुर्वीरन्स्त्रीणामाजीवनक्षयात्' (ना० १३।२६) इत्यादिवचनाच्च भरणोपयुक्तं धनं पत्नी लभत इत्यपि स्थितम्। एवं स्थिते

बहुधने अपुत्रे स्वर्याते भरणोपयुक्तं पत्नी गृह्णाति, शेषं च भ्रातरः। यदा तु पत्नीभरणमात्रोपयुक्तमेव द्रव्यमस्ति ततो न्यूनं वा तदा किं पत्न्येव गृह्णात्युत भ्रातरोऽपीति विरोधे पूर्वबलीयस्त्वज्ञापनार्थं 'पत्नी दुहितर' इत्यारब्धमिति, तदप्यत्र भगवानाचार्यो न मृष्यति। यतः ( मनुः ९।१८५ )—'पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा' इति विकल्पस्मरणान्नेदं क्रमपरं वचनम्, अपि तु धनग्रहणेऽधिकारप्रदर्शनमात्रपरम्। तच्चासत्यपि पत्न्यादिगणे घटत इति व्याचचक्षे। शङ्खवचनमपि संसृष्टभ्रातृविषयमिति। अपि चाल्पविषयत्वमस्माद्वचनात्प्रकरणाद्वा नावगम्यते। 'धनभागुत्तरोत्तरः' ( व्य० १३६ ) इत्यस्य च 'पत्नी दुहितर' इति विषयद्वये वाक्यान्तरमपेक्ष्याल्पधनविषयत्वम्, पित्रादिषु तु धनमात्र-विषयत्वमिति पूर्वोक्तं विधिवैषम्यं तदवस्थमेवेति यत्किंचिदेतत्। यत्तु हारीतवचनम्—विधवा यौवनस्था चेन्नारी भवति कर्कशा। आयुषः क्षपणार्थं तु दातव्यं जीवनं तदा॥' इति,—तदपि शङ्कितव्यभिचारायाः सकलधन-ग्रहणनिषेधपरम्। अस्मादेव वचनादनाशङ्कितव्यभिचारायाः सकलधनग्रहणं गम्यते। एतदेवाभिप्रेत्योक्तं शङ्खेन 'ज्येष्ठा वा पत्नी' इति। ज्येष्ठा गुणज्येष्ठा अनाशङ्कितव्यभिचारा, सा सकलं धनं गृहीत्वाऽन्यां कर्कशामपि मातृवत्पालयतीति सर्वमनवद्यम्॥ तस्मादपुत्रस्य स्वर्यातस्य विभक्तस्यासंसृष्टिनो धनं परिणीता स्त्री संयता सकलमेव गृह्णातीति स्थितम्।

यदभावे दुहितरः। 'दुहितर' इति बहुवचनं समानजातीयानामसमान-जातीयानां च समविषमांशप्राप्त्यर्थम्। तथा च कात्यायनः—'पत्नी भर्तुर्धनहरी या स्यादव्यभिचारिणी। तदभावे॥ दुहिता यद्यनूढा भवेत्तदा॥' इति। बृहस्पतिरपि ( २५।५५-५६ )—'भर्तुर्धनहरी पत्नी तां विना दुहिता स्मृता। अङ्गादङ्गात्संभवति पुत्रवद्दुहिता नृणाम्। तस्मात्पितृधनं त्वन्यः कथं गृह्णीत मानवः॥ इति। तत्र चोढानूढासमवाये तु दुहिता यद्यनूढा भवेत्तदा' इति विशेषस्मरणात्। तथा प्रतिष्ठिताप्रतिष्ठितानां समवाये अप्रतिष्ठितैव तदभावे प्रतिष्ठिता; 'स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च' ( गौ. २९।६ ) इति गौतमवचनस्य पितृधनेऽपि समानत्वात्। न चैतत्पुत्रिकाविषयमिति



मन्तव्यम्। 'तत्समः पुत्रिकासुतः' इति पुत्रिकायास्तत्सुतस्य चौरससमत्वेन पुत्रप्रकरणेऽभिधानात्। 'च'शब्दाद्दुहित्रभावे दौहित्रो धनभाक्। यथाह विष्णुः—'अपुत्रपौत्रसंताने दौहित्रा धनमाप्नुयुः। पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रिका मताः॥' इति। मनुरपि ( ९।१३६ )—अकृता वा कृता वाऽपि यं विन्देत्सदृशात्सुतम्। पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम्॥' इति॥

तदभावे पितरौ मातापितरौ धनभाजौ। यद्यपि युगपदधिकरणवचनतायां द्वन्द्वस्मरणात् तदपवादत्वादेकशेषस्य धनग्रहणे पित्रोः क्रमो न प्रतीयते, तथापि विग्रहवाक्ये 'मातृ'शब्दस्य पूर्वनिपातादेकशेषाभावपक्षे च मातापितराविति 'मातृ'शब्दस्य पूर्वं श्रवणात् पाठक्रमादेवार्थक्रमावगमाद्धनसंबन्धेऽपि क्रमापेक्षायां, प्रतीतक्रमानुरोधेनैव प्रथमं माता धनभाक्, तदभावे पितेति गम्यते। किंच पिता पुत्रान्तरेष्वपि साधारणः; माता तु न साधारणीति प्रत्यासत्त्यतिशयात् 'अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्' ( मनुः ९।१८७ ) इति वचनान्मा-तुरेव प्रथमं धनग्रहणं युक्तम्। नच सपिण्डेष्वेव प्रत्यासत्तिर्नियामिका, अपि तु समानोदकादिष्वप्यविशेषेण धनग्रहणे प्राप्ते प्रत्यासत्तिरेव नियामिकेत्यस्मादेव वचनादवगम्यत इति। मातापित्रोर्मातुरेव प्रत्यासत्त्यतिशयाद्धनग्रहणं युक्ततरम्। तदभावे पिता धनभाक्।

पित्रभावे भ्रातरो धनभाजः। तथा च ( मनुः ९।१८५ )—'पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा' इति। यत्पुनर्धारेश्वरेणोक्तम् ( ९।२१७ )—'अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्। मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम्॥' इति मनुवचनाज्जीवत्यपि पितरि मातरि वृत्तायां पितुर्माता पितामही धनं हरेन्न पिता। यतः पितृगृहीतं धनं विजातीयेष्वपि पुत्रेषु गच्छति, पितामहीगृहीतं तु सजातीयेष्वेव गच्छतीति पितामह्येव गृह्णातीति। एतदप्याचार्यो नानुमन्यते। विजातीयपुत्राणामपि धनग्रहणस्योक्तत्वात्, 'चतुस्त्रिद्व्येकभागाः स्युः' ( व्य० १२५ ) इत्यादिनेति। यत्पुनः ( मनुः ९।१८९ )—'अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः' इति मनुस्मरणं तन्नृपाभिप्रायं,

ननु पुत्राभिप्रायम् । भ्रातृष्वपि सोदराः प्रथमं गृह्णीयुः भिन्नोदराणां मात्रा विप्रकर्षात् । 'अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्' ( मनुः ९।१८७ ) इति स्मरणात् ।

सोदराणामभावे भिन्नोदरा धनभाजः, भ्रातॄणामप्यभावे तत्पुत्राः पितृक्रमेण धनभाजः । भ्रातृभ्रातृपुत्रसमवाये भ्रातृपुत्राणामनधिकारः ; भ्रात्रभावे भ्रातृपुत्राणामधिकारवचनात् ; यदा त्वपुत्रे भ्रातरि स्वर्याते तद्भ्रातॄणामविशेषेण धनसंबन्धे जाते भ्रातृधनविभागात्प्रागेव यदि कश्चिद्भ्राता मृतस्तदा तत्पुत्राणां पितृतोऽधिकारे प्राप्ते तेषां भ्रातॄणां च विभज्य धनग्रहणे 'पितृतो भागकल्पना' ( व्य० १२० ) इति युक्तम् ॥

भ्रातृपुत्राणामप्यभावे गोत्रजा धनभाजः । गोत्रजाः पितामही सपिण्डाः समानोदकाश्च । तत्र पितामही प्रथमं धनभाक् । 'मातर्यपि च वृत्तायां पितुर्माता धनं हरेत्' ( मनुः ९।२१३ )—इति मात्रनन्तरं पितामह्या धनग्रहणे प्राप्ते पित्रादीनां भ्रातृसुतपर्यन्तानां वद्धक्रमत्वेन मध्येऽनुप्रवेशाभात्, 'पितुर्माता धनं हरेत्' इत्यस्य वचनस्य धनग्रहणाधिकारप्राप्तिमात्रपरत्वादुत्कर्षे तत्सुतानन्तरं पितामही गृह्णातीत्यविरोधः ॥ पितामह्याश्चाभावे समानगोत्रजाः सपिण्डाः पितामहादयो धनभाजः ; भिन्नगोत्राणां सपिण्डानां 'बन्धु'शब्देन ग्रहणात् । तत्र च पितृसन्तानाभावे पितामही पितामहः पितृव्यास्तत्पुत्राश्च क्रमेण धनभाजः । पितामहसन्तानाभावे प्रपितामही प्रपितामहस्तत्पुत्रास्तत्सूनवश्चे त्येवमासप्तमात्समानगोत्राणां सपिन्डानां धनग्रहणं वेदितव्यम् । तेषामभावे समानोदकानां धनसंबन्धः । ते च सपिण्डानामुपरि सप्त वेदितव्याः । जन्मनामज्ञानावधिका वा । यथाऽऽह बृहन्मनुः—'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते । समानोदकभावस्तु निवर्तेताचतुर्दशात् ॥ जन्मनाम्नोः स्मृतेरेके तत्परं गोत्रमुच्यते ॥' इति ।

गोत्रजाभावे बन्धवो धनभाजः । बन्धवश्च त्रिविधाः—आत्मबन्धवः, पितृबन्धवः, मातृबन्धवश्चे ति । यथोक्तम्—'आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः । आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥ पितुः पितृष्वसुः पुत्राः





पितुर्मातृष्वसुः सुताः । पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥ मातुः पितृष्वसुः पुत्रा । मातुर्मातृष्वसुः सुताः । मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः इति ॥ तत्र चान्तरङ्गत्वात्प्रथममात्मबन्धवो धनभाजस्तदभावे पितृबन्धवस्तदभावे मातृबन्धव इति क्रमो वेदितव्यः । बन्धुनामभावे आचार्यः, तदभावे शिष्यः—'पुत्राभावे यः प्रत्यासन्न सपिण्डः तदभावे आचार्यः, आचार्याभावेऽन्तेवासी' इत्यापस्तम्बस्मरणात् ॥

शिष्याभावे सब्रह्मचारी धनभाक् । येन सहैकस्मादाचार्यादुपनयनाध्ययनतदर्थज्ञानप्राप्तिः, स सब्रह्मचारी । तदभावे ब्राह्मणद्रव्यं यः कश्चित् श्रोत्रियो गृह्णीयात् ; 'श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन्' ( २५।४१ ) इति गौतमस्मरणात् । तदभावे ब्राह्मणमात्रम् । यथाऽऽह मनुः ( ९।१८८ )—'सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः । त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयते ॥' इति । न कदाचिदपि ब्राह्मणद्रव्यं राजा गृह्णीयात् ; 'अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः' ( ९।१८९ ) इति मनुवचनात् । नारदेनाप्युक्तम्—'ब्राह्मणार्थस्य तन्नाशे दायादश्चेन्न कश्चन । ब्राह्मणायैव दातव्यमेनस्वी स्यान्नृपोऽन्यथा ॥ इति ॥ क्षत्रियादिधनं सब्रह्मचारिपर्यन्तानामभावे राजा हरेत् । न ब्राह्मणः । यथाऽऽह मनुः ( ९।१८९ )—'इतरेषां तु वर्णानां सर्वाभावे हरेन्नृपः' इति ॥ १३५-१३६ ॥

## CHARCHA

1. पत्नी—By पत्नी is meant शास्त्रानुसारेण विवाहिता साध्वी धर्मपत्नी, "पत्युर्नो यज्ञसंयोगे" इति पाणिनिसूत्रात् । See Mita.

2. पितरौ—By एकशेष, the word means both father and mother.

3. तत् सुताः—means भ्रातृसुत mainly. See Mita.

4. बन्धु etc—बन्धु is आत्मबन्धु, पितृबन्धु and मातृबन्धु i. e, पिसतुत मासतुत मामात relation of each. See Mita.

5. सब्रह्मचारिणः—ब्रह्म is वेद। तदध्ययनार्थं व्रतमपि ब्रह्म। तच्चरतीति ब्रह्मचारी, समानः सः इति सब्रह्मचारी=those reading ब्रह्म with ब्रह्मचर्य्य to one and the same आचार्य्य। Here समान becomes स in this sense by the rule "चरणे ब्रह्मचारिणि"। Comp. also "येन सह एकस्मात् आचार्य्यात् उपनयनवेदाध्ययन-तदर्थज्ञानप्राप्तिः, स सब्रह्मचारी—in Mita here. The reading बन्धुः शिष्यः सब्रह्मचारिणः is also seen here.

137. But properties of वानप्रस्थी, यति etc will be in order to आचार्य्य, सच्छिष्य, धर्मभ्राता and सतीर्थ।

वानप्रस्थ-यति-ब्रह्मचारिणां रिक्थभागिनः।
क्रमेणाचार्य्य-सच्छिष्य-धर्मभ्रातृ-एकतीर्थिनः ॥१३७॥

Prose—वानप्रस्थ-यति-ब्रह्मचारिणां क्रमेण आचार्य्य-सच्छिष्य-धर्मभ्रातृ-एकतीर्थिनः रिक्थभागिनः भवन्ति। (Mita takes क्रमेण as प्रतिलोमक्रमेण)।

Beng. কিন্তু বানপ্রস্থাবলম্বী, যতি অর্থাৎ সন্ন্যাসী ও নৈষ্ঠিক (আত্যন্তিক) ব্রহ্মচারীদের সম্পত্তি যথাক্রমে বা প্রতিক্রমে আচার্য্য, সৎশিষ্য (অনুগত সমর্থশিষ্য) ধর্মভ্রাতা (একদীক্ষাগুরুর শিষ্য বা ধর্মতঃ ভ্রাতৃরূপে গৃহীত ব্যক্তি) এবং সতীর্থ্য বা একগুরুর ছাত্র পাইবে।

Eng. But property of one adopting वानप्रस्थाश्रमव्रत, of a sannyasin, of one espousing whole-life ब्रह्मचर्य्य will in reverse order devolve on the preceptor (आचार्य्य), on a religiously able disciple, on a religiously related brother or on a person who once studied with—him under the same professor. [N. B.—For further details see Mitakshara ].



Mita.—पुत्राः पौत्राश्च दायं गृह्णन्ति, तदभावे पत्न्यादय इत्युक्तम्, इदानीं तदुभयापवादमाह—वानप्रस्थस्य, यतेर्ब्रह्मचारिणश्च क्रमेण प्रतिलोमक्रमेणाचार्यः सच्छिष्यः, धर्मभ्रात्रेकतीर्थी च, रिक्थस्य धनस्य भागिनः। ब्रह्मचारी नैष्ठिकः। उपकुर्वाणस्य तु धनं मात्रादय एव गृह्णन्ति। नैष्ठिकस्य तु धनं तदपवादत्वेनाचार्यो गृह्णातीत्युच्यते। यतेस्तु धनं सच्छिष्यो गृह्णाति। सच्छिष्यः पुनरध्यात्मशास्त्रश्रवणधारणतदर्थानुष्ठानक्षमः; दुर्वृत्तस्याचार्यादेरपि भागानर्हत्वात्। वानप्रस्थस्य धनं धर्मभ्रात्रेकतीर्थो गृह्णाति। धर्मभ्राता प्रतिपन्नो भ्राता, एकतीर्थो एकाश्रमी, धर्मभ्राता चासावेकतीर्थो च=धर्मभ्रात्रेकतीर्थो। एतेषामाचार्यादीनामभावे पुत्रादिषु सत्यस्वप्येकतीर्थ्येव गृह्णाति। ननु 'अनंशास्त्वाश्रमान्तरगताः' इति वसिष्टस्मरणादाश्रमान्तरगतानां रिक्थसंवन्ध एव नास्ति कुतस्तद्विभागः? नच नैष्ठिकस्य स्वार्जितधनसंबन्धो युक्तः; प्रतिग्रहादिनिषेधात्। 'अनिचयो भिक्षुः' (३।७) गौतमस्मरणात्इति। भिक्षोरपि न स्वार्जितधनसंवन्धसंभवः। उच्यते—वानप्रस्थस्य तावत्—'अह्नो मासस्य षण्णां वा तथा संवत्सरस्य वा। अर्थस्य निचयं कुर्यात्कृतमाश्वयुजे त्यजेत्॥' (प्राय० ४७) इति वचनाद्धनसंवन्धोऽस्त्येव। यतेरपि—'कौपीनाच्छादनार्थं वा वासोऽपि विभृयात्तथा। योगसंभारभेदांश्च गृह्णीयात्पादुके तथा॥ इत्यादिवचनाद्वस्त्र-पुस्तकसंवन्धोऽस्त्येव; नैष्ठिकस्यापि शरीरयात्रार्थं वस्त्रादिसंवन्धोऽस्त्येवेति तद्विभागकथनं युक्तमेव। १३७॥

## CHARCHA

1. वानप्रस्थ etc—4 ashramas are—ब्रह्मचर्य्य, गार्हस्थ्य, वानप्रस्थ, सन्न्यास; of these 3rd is वानप्रस्थ, 4th is सन्न्यास वा यतिधर्म। Here by ब्रह्मचारी is meant lifelong नैष्ठिकता or आत्यन्तिक ब्रह्मचारिन्। These having no issues, their रिक्थ is to good आचार्य्य &c. By तीर्थ is meant सतीर्थ्यः=एकगुरुकः student of one selfsame professor. एकतीर्थः (एकगुरुः) अस्ति अस्य इति एकतीर्थिन्। Def.

of an आचार्य्य is "उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः सकल्पं सरहस्यञ्च तमाचार्य्यं प्रचक्षते"।

Sl. 138. Details of संसृष्टिधनविभाग is spoken here.

संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः।
दद्याच्चापहरेच्चांशं जातस्य मृतस्य च ॥ १३८ ॥

Prose—मृतस्य संसृष्टिनस्तु धनं अन्यसंसृष्टी तत्पुत्रम् दद्यात्, सोदरस्य मृतस्य संसृष्टिनः, अन्यः सोदरः संसृष्टी जातस्य अनुजातस्य पुत्रस्य (सम्बन्धे) अंशं दद्यात्। तदभावे स्वयम् अपहरेत् (गृह्णीयात्)।

Beng. পূর্ব্বেই ধনবিভাগ করিয়া পরে ঐ বিভক্ত ধনকে, যদি পিতা ভ্রাতা বা পিতৃব্যের সহিত মিশ্রিত করিয়া অবিভক্তভাবে ব্যবহার করা হয়, তবে সেই ধনকে সংসৃষ্টধন বলা হয়। সেই সংসৃষ্ট-ধনের কোন অধিকারী সংসৃষ্টী, মৃত হইলে তাহার অংশ বিভাগকালে তদীয় জাতপুত্রকে দিবেন। যদি সহোদর সংসৃষ্টী মৃত হয় তবে অন্যসংসৃষ্টী সহোদর ভ্রাতা, অনুজাতপুত্রকে ঐ সংসৃষ্টীর ধন দিবেন; পুত্র না থাকিলে সহোদরসংসৃষ্টী নিজেই তার অংশ গ্রহণ করিবেন। [ N. B.—বৈমাত্রেয় ভ্রাতা সংসৃষ্টী হইলেও মৃত সংসৃষ্টীর ধন পাইবে না ]।

Eng. If one after proper partition, mixes and uses his धन (money etc) with his father, brothers or uncles, then this present mixed money वा धन is called संसृष्ट (or mixed) धन; and one having such धन is called संसृष्टी। If such संसृष्टी dies then his share of money will be given to his son; he having no son then other संसृष्टी will get it; if a सहोदर संसृष्टी dies then his wealth will be given to his son born, or he being sonless then this will be taken by this other संसृष्टी सहोदर। [ N. B.—This shows—after संसृष्टिन्'s death his money will not go to his stepbrother ].



Mita—इदानीं "स्वर्यातस्य पत्न्यादयो धनभाज" इत्युक्तस्यापवादमाह—विभक्तं धनं पुनर्मिश्रीकृतं संसृष्टं, तदस्यास्तीति "संसृष्टी"। संसृष्टत्वञ्च न येन केनापि, किन्तु पित्रा भ्रात्रा पितृव्येन वा। यथाह बृहस्पतिः—"विभक्तो यो पुनः पित्रा भ्रात्रैकत्र संस्थितः। पितृव्येणाथ वा प्रीत्या स तत्संसृष्टयुच्यते"॥ तस्य संसृष्टिनो मृतस्य अंशं बिभागं विभागकाले अविज्ञातगर्भायां भार्य्यायां पश्चादुत्पन्नस्य पुत्रस्य संसृष्टी दद्यात्। पुत्राभावे संसृष्टी एवापहरेत् गृह्णीयात्। न पत्न्यादिः॥ "संसृष्टिनस्तु संसृष्टी" इत्यस्यापवादमाह—"संसृष्टिनस्तु संसृष्टी" इत्यनुवर्त्तते। अतश्च सोदरस्य संसृष्टिनः मृतस्य अंशं सोदरः संसृष्टी अनुजातस्य सुतस्य दद्यात्। तदभावे अपहरेदिति पूर्ववत् सम्बन्धः। एवं च सोदरासोदरसंसर्गे सोदरसंसृष्टिनो धनं सोदर एव संसृष्टी गृह्णाति न भिन्नोदरः संसृष्टी अपि इति पूर्वोक्तस्यापवादः॥ १३८॥

## CHARCHA

1. In जातस्य…दद्यात् we have विवक्षावशात् ४र्थी अर्थे=षष्ठी।

139. The inheritance of संसृष्टी stepbrother in a sonless संसृष्टी is enjoined here.

अन्योदर्य्यस्तु संसृष्टी नान्योदर्यो धनं हरेत्।
असंसृष्टयपि वादद्यात् संसृष्टो नान्यमातृजः॥ १३९ ॥

Prose—अन्योदर्य्यस्तु संसृष्टी चेत् धनं हरेत्, असंसृष्टी अन्योदर्यो धनं न हरेत्। सोदरः असंसृष्टी अपि संसृष्टः (एकोदरसंसृष्टः सन्) आदद्यात्; अन्यमातृजः असंसृष्टी न आदद्यात्।

Beng বৈমাত্রেয় ভাই যদি সংসৃষ্টী হয় তবে মৃত এই অপুত্রকের ধন পাইবে। অসংসৃষ্টী হইলে ধন পাইবে না। কিন্তু সোদর অসংসৃষ্টী হইলেও সংসৃষ্টত্বহেতু (একোদরজাতত্বহেতু) ধন পাইবে, অন্যমাতৃজ হইলে পাইবে না। অর্থাৎ সংসৃষ্টী বৈমাত্রেয় এবং অসংসৃষ্টী সহোদর দুই জনই ধনভাগ পাইবে।

Eng. A stepr-bother if he is a संसृष्टी then he will inherit his संसृष्टी brother's wealth after his death ; but if this stepbrother is असंसृष्टी then he will not get this one's wealth ; but a सोदर ( uterine brother ) even if असंसृष्टी will get this share and not a mere stepbrother ( i. e, संसृष्टी stepbrother and असंसृष्टी सहोदर both will get the said share) [ N. B—संसृष्टत्व is the cause of प्राप्ति here ].

Mita—इदानीं संसृष्टिनि अपुत्रे स्वर्याते संसृष्टिनो भिन्नोदरस्य, सोदरस्य च असंसृष्टिनः सद्भावे, कस्य धनग्रहणमिति विपक्षायां द्वयोर्विभज्य ग्रहणे कारणमाह—अन्योदर्यः सापत्नो भ्राता संसृष्टी धनं हरेत्, न पुनरन्योदर्यो धनं हरेदसंसृष्टी। अनेनान्वयव्यतिरेकाभ्यामन्योदर्यस्य संसृष्टित्वं धनग्रहणे कारणमुक्तं भवति ( अन्वय=positive instance ; व्यतिरेक=negative one )। असंसृष्टीत्येतदुत्तरेणापि संबध्यते। अतश्चासंसृष्ट्यपि संसृष्टिनो धनमाददीत। कोऽसावित्यत आह—संसृष्ट इति। संसृष्टः एकोदरसंसृष्टः। सोदर इति यावत्। अनेनासंसृष्टस्यापि सोदरस्य धनग्रहणे सोदरत्वं कारणमुक्तं, 'संसृष्ट' इत्युत्तरेणापि संबध्यते। तत्र च संसृष्टः संसृष्टीत्यर्थः। नान्यमातृजः। अत्र 'एव'शब्दाध्याहारेण व्याख्यानं कार्यम्, संसृष्ट्यप्यन्यमातृज एव संसृष्टिनो धनं नाददीतेति एवं चासंसृष्ट्यपि बाऽऽदद्यादित्यपिशब्दश्रवणात् 'संसृष्टो नान्यमातृज एव' इत्यवधारणनिषेधाच्चासंसृष्टसोदरस्य संसृष्टभिन्नोदरस्य च विभज्य ग्रहणं कर्त्तव्यमित्युक्तं भवति। द्वयोरपि धनग्रहणकारणस्यैकैकस्य सद्भावात्। एतदेव



स्पष्टीकृतं मनुना ( ९।२१० )—'विभक्ताः सह जीवन्तो विभजेरन्पुनर्यदि' इति संसृष्टिविभागं प्रक्रम्य 'येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः। म्रियेतान्यतरो वाऽपि तस्य भागो न लुप्यते॥ सोदर्या विभजेयुस्तं समेत्य सहिताः समम्। भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः॥ इति वदता। येषां भ्रातॄणां संसृष्टिनां मध्ये ज्येष्ठः कनिष्ठो मध्यमो वांशप्रदानतोऽंशप्रदाने। ( सार्वविभक्तिकस्तसिः )। विभागकाल इति यावत्। हीयेत स्वांशात् भ्रश्येत आश्रमान्तरपरिग्रहेण ब्रह्महत्यादिना वा म्रियेत वा तस्य भागो न लुप्यते। अतः पृथगुद्धरणीयो न संसृष्टिन एव गृह्णीयुरित्यर्थः। तस्योद्धृतस्य विनियोगमाह—सोदर्या विभजेयुस्तमिति। तमुद्धृतं भागं सोदर्याः सहोदरा असंसृष्टा अपि समेत्य देशान्तरगता अपि समागम्य सहिताः संभूय समं न न्यूनाधिकभावेन ; ये च भ्रातरो भिन्नोदराः संसृष्टाः, ते च सनाभयो भगिन्यश्च समं विभजेयुः। समं विभज्य गृह्णीयुरिति तस्यार्थः॥ १३९॥

CHARCHA—अन्योदरे भव इति अन्योदर+साध्वर्थे, भवार्थे वा यप्रत्ययः=अन्योदर्यः। So सतीर्थ्य is with य।

140-42. The following are ineligible to take दाय, they will get maintaince only.

क्लीवोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जड़ः।
अन्धोऽचिकित्स्यरोगाद्या भर्त्तव्या स्युर्निरंशकाः॥ १४०॥
औरसाः क्षेत्रजास्तेषां निर्दोषा भागहारिणः।
सुताश्चैषां प्रभर्त्तव्या यावद्वै भर्त्तृसात्कृताः॥ १४१॥
अपुत्रायोषितश्चैषां भर्त्तव्याः साधुवृत्तयः।
निर्वास्याः व्यभिचारिण्यः प्रतिकूलास्तथैव च॥ १४२॥

Prose—अथ क्लीवः, पतितः, ( ब्रह्महत्याकारी ), तज्जः ( पतितोत्पन्नः ), पङ्गुः, उन्मत्तकः, जड़ः ( विकलान्तःकरणः ), अन्धः, 'अचिकित्स्यरोगाद्याः

(अचिकित्स्यरोगयुक्ताः, एवम्भूता आश्रमत्यागिपितृद्वेष्यादयः) निरंशकाः (किन्तु) भर्त्तव्याः स्युः (केवलं ग्रासाच्छादनेन पोषणीया, न तु रिक्थभागिनः)। एतेषां औरसाः क्षेत्रजा निर्दोषा पुत्रा भागहारिणः भवन्ति, एषां सुताः (दुहितरः) यावद् वै भर्त्तृसात्कृताः तावत् प्रभर्त्तव्याः। एषां अपुत्रा योषितः साधुवृत्तयः चेत् भर्त्तव्याः (किन्तु) व्यभिचारिण्यः तथा प्रतिकूलाश्च निर्वास्याः स्युः।

Beng যারা ক্লীব (শুক্রহীন বা নপুংসক), যারা ব্রহ্মহত্যাদি পাপকারী, যারা এতাদৃশ পতিতের (পাতিত্যকালের) পুত্র, যারা পঙ্গু অর্থাৎ চলনশক্তিরহিত, যারা উন্মত্ত এবং যারা জড় বা বিকলান্তঃকরণযুক্ত, যারা অন্ধ এবং যক্ষাদি অচিকিৎস্য রোগগ্রস্ত, আশ্রমত্যাগী বা পিতৃদ্বেষী—তারা ঔরস হইলেও পৈতৃকধনের অংশ পাইবে না, কেবল গ্রাসাচ্ছাদন পাইবে। কিন্তু এদের ঔরস ও ক্ষেত্রজপুত্র নির্দোষ হইলে ভাগ পাইবে। এদের কন্যাগণ পাত্রস্থ না হওয়া পর্য্যন্ত ভরণীয়। এদের অপুত্র স্ত্রীগণও সাধুচরিত হইলে ভরণপোষণ পাইবে। তবে এরা ব্যভিচারিণী ও প্রতিকূলা হইলে এদের নির্বাসন দিবে।

Eng. The impotent or the eunuch, the fallen one (due to ब्रह्महत्यापाप) or son of such a fallen one or outcaste, the paralytic, the insane, the dull-witted, or suffering from incurable diseases, and such like will not get or inherit father's property even if "Aurasha son"; these are entitled to maintenance only; but Aurasha or Kshetraja sons of these if guiltless will inherit ancestral property; their daughters are to be maintained till they are married to a suitable groom; and sonless wives of these if of good conduct should be maintained; if adulterated and running



counter to family and society should be banished from their places.

Mita.—पुत्रपत्न्यादिसंसृष्टिनां यद्दायग्रहणमुक्तं तस्यापवादमाह—क्लीवः—तृतीया प्रकृतिः (a third natural eunuch), पतितः ब्रह्महादि, तज्जः पतितोत्पन्नः, पङ्गुः पादविकलः, उन्मत्तकः वातिकपैत्तिक-श्लैष्मिक-सान्निपातिक-ग्रहावेशलक्षणैरुन्मादैरभिभूतः, जड़ः विकलान्तःकरणः, हिताहितावधारणक्षम इति यावत्। अन्धो नेत्रेन्द्रियविकलः, अचिकित्स्यरोगः अप्रतिविधेय-यक्ष्मादिरोगग्रस्तः, आद्यशब्देन आश्रमान्तरगत-पितृद्वेषि-उपपातकिवधिरमूक-निरिन्द्रियाणां ग्रहणम्। यथाह वशिष्ठः—"अनंशास्त्वाश्रमान्तरगताः" [नारदोपि—"पितृद्विट् पतितःषण्ढो यश्चस्यादौपपातिकः औरसा अपि नैते अंशंलभेरन् क्षेत्रजाः कुतः"॥ इति। मनुरपि "अनंशौ क्लीवपतितौ जात्यन्ध-बधिरस्तथा। उन्मत्तजड़मूकाश्च ये च केचिन्निरिन्द्रियाः" इति। निरिन्द्रियो-निर्गतम् इन्द्रियं यस्मात् व्याध्यादिना स निरिन्द्रियः]। एते क्लीवादयो अनंशा रिक्थभाजोन भवन्ति। केवलमशनाच्छादानादिना पोषणीया भवेयुः। अभरणे पतितत्वदोषः। "सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा। ग्रासाच्छादनमत्यन्तं पतितो ह्यददद् भवेत्"—इति मनुस्मरणात्। अत्यन्तं यावज्जीवमित्यर्थः। एतेषां विभागात् प्रागेव दोषप्राप्तौ अनंशत्वम् उपपन्नं न तु पुनर्विभक्तस्य। "जातः भवर्णायां विभागभाक्"—इत्यस्य सामान्यन्यायत्वात्। (पतितादिषु तु पुंलिङ्गत्वमविवक्षितम्। अतश्च पत्नीदुहितृमात्रादीणाम् अपि उक्तदोषदुष्टानां अनंशित्वं वेदितव्यम्)॥ १४० ॥ क्लीवादिनामनंशित्वात् तत्पुत्राणामपि अनंशित्वे प्राप्ते इदमाह—एतेषां क्लीवादीनाम् औरसाः क्षेत्रजा वा पुत्रा निर्दोषा अंशग्रहणविरोधिक्लैव्यादिदोषरहिता भागहारिणः अंश-ग्राहिणो भवन्ति। तत्र क्लीवस्य क्षेत्रजः पुत्रः सम्भवति, अन्येषामौरसा अपि। (औरसक्षेत्रजयोर्ग्रहणात् इतरपुत्रव्युदासार्थम्॥ क्लीवादिदुहितॄणां विशेषमाह—तथा क्लीवादीनां सुता दुहितरो यावद् विवाहसंस्कृता भवन्ति, तावद् भरणीयाः। (कन्यात्वात् संस्कार्याश्च)। १४२॥ क्लीवादिपत्नीनां विशेषमाह—एषां

क्लीबादीनाम् "अपुत्राःपत्न्यः साधुवृत्तयः" सदाचारश्चेद् भरणीयाः, व्यभिचारिण्यस्तु निर्वास्याः। प्रतिकूलाः तथा च निर्वास्या भवन्ति। भरणीया अव्यभिचारिण्यश्चेत्। नपुनः प्रातिकूल्यमात्रेण भरणमपि न कर्त्तव्यम् ॥ १४२ ॥

## CHARCHA

1. अचिकित्स्यरोगाद्याः—अचिकित्स्यरोग like Phthisis etc; अचिकित्स्यरोगः येषाम्। बहु। अचिकित्स्यरोगाः आद्याः प्रमुखा येषाम्, बहु। These suffering from some incurable disease or such of this line—as आश्रमत्यागी, पितृद्वेषी etc.

2. प्रभर्त्तव्याः—प्र here implies प्रकर्ष (excess); these should be well (honourably) maintained and kept chaste.

3. भर्त्तृसात् &c—भर्त्तधीनं देयं करोति (कृतः) भर्त्तृसात्कृताः। ताः। Here साति comes by the rules "तदधीनवचने and "देयेत्राच"। It is either compounded or uncompounded.

4. व्यभिचारिण्यः—It should be taken along with प्रतिकूलाः। व्यभिचारित्व is mainly the निर्वासनकारण। See Mita.

143-44. Varieties of स्त्रीधन—Their inheritance stated.

पितृ-मातृ-पति-भ्रातृदत्तमध्यग्न्युपागतम्।
आधिवेदनिकाद्यञ्च स्त्रीधनं परिकीर्त्तितम् ॥ १४३ ॥

वन्धुदत्तं तथाशुल्कमन्वाधेयकमेव वा
अतीतायामप्रजसि वान्धवास्तदवाप्नुयुः ॥ १४४ ॥

Prose—पितृमातृ-पति-भ्रातृदत्तम्, अध्यग्न्युपागतम् (विवाहे गार्हपत्याग्न्याधानकाले मातुलादिभिः दत्तं धनम् अध्यग्न्युपागतम्),



आधिवेदनिकाद्यं (द्वितीयविवाहकाले पत्नीतोषाय दत्तम् धनम् आधिवेदनिकम् तदाद्यं) धनं स्त्रीधनं परिकीर्त्तितम्। एवं बन्धुदत्तं (आत्मपितृपक्षमातृपक्ष-सम्बन्धिदत्तं धनं, (शुल्कं) कन्यार्पणकाले वरपक्षात् गृहीतं धनम्), अन्वाधेयम् च (विवाहात् परं स्वामिकुले प्राप्तं) धनं स्त्रीधनम् स्यात्। अतीतायां अप्रजसि तस्याम् तत् स्त्रीधनं वान्धवाः अवाप्नुयुः।

Beng—পিতা মাতা পতি বা ভ্রাতা স্নেহবশতঃ যে ধন দেন, বিবাহকালে গার্হপত্য অগ্নির আধান করিয়া যজ্ঞকালে, মাতুলাদি যে ধন দেন, সেই অধ্যগ্নি-উপাগত ধন, দ্বিতীয়বার দারপরিগ্রহণকালে পতি পূর্বপত্নীকে তুষ্ট করার জন্য যে আধিবেদনিক ধন দেন, বন্ধুদত্ত ধন (অর্থাৎ নিজ পিতা ও মাতার মাসতুত, পিসতুত ও মামাত ভাই যে ধন দেন), মেয়েদের বিবাহ ঠিক হইলে বিবাহের পূর্বেই বরপক্ষ যে শুল্কধন দেন, এবং বিবাহের পর স্বামিকুলে লব্ধ অন্বাধেয়ক ধন, স্ত্রীদিগের স্ত্রীধন বলিয়া কথিত হয়। এরূপ স্ত্রীধন নিঃসন্তান স্ত্রীলোক মৃত হইলে ভর্ত্তা প্রভৃতি আত্মীয়গণ তাহা পাইবে।

Eng. That which is given by father, mother, husband or brother out of affection; that which near-relations give during marriage-ceremony with गार्हपत्यअग्नि enkindled (named as अध्यग्न्युपागतधन), that which one gives to his first wife to please her while marrying a second time called आधिवेदनिकधन, that which is given by one's own cousins, aunts etc. that which is given to a woman before marriage from husband's side called शुल्क, and that which a woman gets from husband's side after marriage called अन्वाधेयक, are known in shastras of Manu etc. as स्त्रीधन। Now if a woman dies issueless then her husband and relations will

inherit this—( she having no daughter, दौहित्र or son or पौत्र )।

Mita—"विभजेरन् सुताः पित्रोः" इत्यत्र स्त्रीपुंधनविभागं संक्षेपणाभिधाय पुरुषधनविभागो विस्तरेणाभिहितः इदानीं स्त्रीधनविभागं अभिधास्यन् तत्स्वरूपं तावदाह—पित्रामात्रा पत्याभ्रात्रा च यद्दत्तं, यच्च विवाहकाले अग्नावधिकृत्य मातुलादिभिर्दत्तम् ; "आधिवेदनिकम्"—अधिवेदननिमित्तं—"अधिविन्नस्त्रियै दद्यात्" इति वक्ष्यमाणम् ( sl. 148 )। [ आद्यशब्देन रिक्थक्रयसंविभाग-परिग्रहाधिगमप्राप्तम् मन्वादिभिरुक्तम्। स्त्रीधन-शब्दश्च योगिको न पारिभाषिकः। योगसम्भवे परिभाषाया अयुक्तत्वात्। यत् पुनर्मनुनोक्तम्—"अध्यग्नि-अध्यावहनिकं दत्तं च प्रीतिकर्मणि। भ्रातृपितृमातृप्राप्तं षड्विधं स्त्रीधनं स्मृतम्" इति स्त्रीधनस्य षड्विधत्वम्, तत् न्यूनसंख्याव्यवच्छेदार्थं नाधिकसंख्याव्यवच्छेदाय ( 6 स्त्रीधन in Manu is to do away with less than 6 and not to restrict more than six ) ]॥ अध्यग्न्यादिस्वरूपं तु कात्यायनेनाभिहितम्—"विवाहकाले यत् स्त्रीभ्यो दीयते ह्यग्निसन्निधौ। तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्त्तितम्॥ यत् पुनर्लभते नारी नीयमाना पितुर्गृहात्। अध्यावहनिकं नाम स्त्रीधनं तदुदाहृतम्॥ प्रीत्यादत्तन्तु यत्किञ्चित् श्वश्र्वा वा श्वशुरेण वा। पादवन्दनिकंचैव प्रीतिदत्तं तदुच्यते॥ ऊढया कन्यया वापि पत्युः पितृगृहेपिवा। भ्रातुः सकाशात् पित्रोर्वालब्धं सोदायिकं स्मृतम्"॥ १४३॥

किञ्च वन्धुभिः कन्यायाः मातृवन्धुभिः पितृवन्धुभिः यद् दत्तम्, शुल्कं यद् गृहीत्वा कन्या दीयते। "अन्वाधेयकम्"—परिणयनात् अनुपश्चादाहितं दत्तम्। [उक्तं च कात्यायनेन—"विवाहात् परतो यच्च लब्धं भर्त्तृकुलात् स्त्रिया। अन्वाधेयं तु तद्द्रव्यं लब्धं पितृकुलात्तथा॥" इति स्त्रीधनं परिकीर्त्तितम् इति गतेन सम्बन्धः॥ एवं स्त्रीधनमुक्तं, तद्विभागमाह—तत्पूर्वोक्तं "स्त्रीधनम् अप्रजसि" अनपत्यायां—दुहितृ-दौहित्री-दौहित्र-पुत्र-पौत्ररहितायां स्त्रियामतीतायां" बान्धवा भर्त्राद्यो वक्ष्यमाणा गृह्णन्ति॥ १४४॥



## CHARCHA

1. पितृमातृ···दत्तम्—Qual. स्त्रीधनम्। First द्वन्द्व, then ३तत्।

2. अध्यग्नि-उपागतम्—अग्नौ (=अग्निम् अधिकृत्य विषयीकृत्य विवाहकालयज्ञाग्निम् अधिकृत्य, अर्थात् विवाहकाले ) इति अध्यग्नि, विभक्त्यर्थे अव्ययीभावः। अध्यग्नि उपागतम् ( प्राप्तम् ), सुपसुपा। Q. स्त्रीधनम्।

3. आधिवेदनिकाद्यम्—वेदने i. e, वेदनमधिकृत्य इति अधिवेदनम् विभक्त्यर्थे अव्ययी। अधिवेदने भवम् इति आधिवेदनिकम् with अध्यात्मादित्वात् ठञ्। तत् आद्यं ( प्रधानं, प्रभृति ) यस्मिन् तत्, वहु। Qual स्त्रीधनम्। See also our notes on अध्यात्म in Gita XI and X "अध्यात्मविद्या विद्यानाम्।" अधिविन्नास्त्री is first wife of one who marries a second time.

4. अन्वाधेयकम्—अनुपश्चात् आधेयम् इति अन्वाधेयम्। तदेव इति संज्ञायां कन्। See the rules "इवे प्रतिकृतौ" and "संज्ञायां च"। Qual. स्त्रीधनम्। See also Mita. here. For शुल्क, Comp. यन्मूल्यं कन्यार्पणोपाधित्वेन वरादिभ्यः कन्याभरणरूपेण गृह्यते तत् शुल्कम्" in वीरमित्रोदय॥ All refer to स्त्रीधनम्।

5. अप्रजसि—अविद्यमाना प्रजा ( सन्ततिः। "प्रजास्यात् सन्ततौजने" ) अस्या इति अप्रजस् with समानान्त असिच् in वहु—by the rule "नित्यमसिच् प्रजामेधयोः"। Qual. स्त्रियाम् ( wh. has भावे ७मी )॥ here बान्धवाः means भर्त्तृ-बान्धवाः॥

145. अप्रजःस्त्रीधन will go to a दुहितुः दुहिता ( daughter ); otherwise usually it is भर्त्तृगामि or पितृगामि etc, acc. to forms of marriage.

अप्रजःस्त्रीधनं भर्तुर्ब्राह्मादिषु चतुर्ष्वपि।
दुहितॄणां प्रसूताचेत् शेषेषु पितृगामि तत्॥ १४५॥

Prose—अप्रजःस्त्रीधनं ब्राह्मादिषु चतुर्षु (विवाहेषु) भर्तुः भवति। शेषेषु विवाहेषु तत् पितृगामि भवति। दुहितॄणां मध्ये काचित् प्रसूता चेत्, तदा सर्वविवाहेषु तस्या कन्यायाः तत् स्त्रीधनं भवति।

Beng. ব্রাহ্ম, দৈব, আর্ষ ও প্রাজাপত্য এই চারিপ্রকারে বিবাহিতা নিঃসন্তান নারীর মৃত্যুর পর স্ত্রীধন স্বামী বা স্বামীর নিকটাত্মীয় পাইবে। কিন্তু আসুর, গান্ধর্ব, রাক্ষস ও পৈশাচ বিবাহে পরিণীতা স্ত্রীর সন্তান না থাকিলে, মৃত্যুর পর স্ত্রীধন তার মাতা পরে পিতা পাইবে। মাতা পিতা না থাকিলে তাদের নিকটাত্মীয় পাইবে। আর মৃতাস্ত্রীর কন্যাদের কেহ অপত্যবতী হইলে, সর্বক্ষেত্রে সেই কন্যাই এই স্ত্রীধন পাইবে।

Eng. The स्त्रीधन of a woman dying childless, but married in the first four modes of marriage (ब्राह्म, दैव, आर्ष, प्राजापत्य) will go to her husband or any one nearest to the husband; स्त्रीधन of a woman so dying but married in the other four modes of marriage (as आसुर, गान्धर्व, राक्षस and पैशाच) will go to her mother and then to her father; but if any of her daughter is quick with a female child, then this issue will get her grand-mother's स्त्रीधन।

[Note—"मातृधनं मातरि वृत्तायां प्रथमं दुहितरो गृह्णन्ति (see sl. 117), तत्र ऊढा-अनूढासमवाये अनूढैव गृह्णाति, तदभावे परिणीता, तत्रापि प्रतिष्ठिता-अप्रतिष्ठिता-समवाये अप्रतिष्ठिता गृह्णाति, तदभावे प्रतिष्ठिता—in Mitakshara; here also note "एतच्च शुल्कव्यतिरेकेन, तत्र सोदर्य्याणामेवाधिकारः" etc there]।



Mita.—सामान्येन बान्धवा धनग्रहणाधिकारिणो दर्शिताः। इदानीं विवाहभेदेन अधिकारिभेदमाह—अप्रजसः स्त्रियाः पूर्वोक्ताया ब्राह्मदैवार्षप्राजापत्येषु चतुर्षु विवाहेषु भार्यात्वं प्राप्ताया अतीतायाः पूर्वोक्तं धनं प्रथमं भर्तुर्भवति। तदभावे तत्प्रत्यासन्नानां भवति। शेषेष्वासुरगान्धर्वराक्षसपैशाचेषु विवाहेषु तदप्रजःस्त्रीधनं पितृगामि। माता च पिता च पितरौ तौ गच्छतीति पितृगामि। एकशेषनिर्दिष्टाया अपि मातुः प्रथमं धनग्रहणं पूर्वमेवोक्तम्। तदभावे तत्प्रत्यासन्नानां धनग्रहणम्। सर्वेष्वेव विवाहेषु प्रसूतापत्यवती चेद्दुहितॄणां तद्धनं भवति। अत्र 'दुहितृ'शब्देन दुहितृदुहितर उच्यन्ते। साक्षाद्दुहितॄणां 'मातुर्दुहितरः शेषम्' (व्य० ११७) इत्यत्रोक्तत्वात्। अतश्च मातृधनं मातरि वृत्तायां प्रथमं दुहितरो गृह्णन्ति, तत्र चोढानूढासमवायेऽनूढैव गृह्णाति, तदभावे च परिणीता; तत्रापि प्रतिष्ठिताऽप्रतिष्ठितासमवायेऽप्रतिष्ठिता गृह्णाति, तदभावे प्रतिष्ठिता, यथाह गौतमः (२८।२२)—'स्त्रीधनं दुहितॄणामप्रत्तानाम-प्रतिष्ठितानां च' इति। तत्र 'च'शब्दात्प्रतिष्ठितानां च। अप्रतिष्ठिता अनपत्या निर्धना वा। एतच्च शुल्कव्यतिरेकेण। शुल्कं तु सोदर्याणामेव, 'भगिनीशुल्कं सोदर्याणामूर्ध्वं मातुः' (२८।२३) इति गौतमवचनात्। सर्वासां दुहितॄणामभावे दुहितृदुहितरो गृह्णन्ति, 'दुहितॄणां प्रसूता चेत्' इत्यस्माद्वचनात्। तासां भिन्नमातृकाणां विषमाणां समवाये मातृद्वारेण भागकल्पना, प्रतिमातृ वा स्ववर्गे भागविशेषः' (२८।१५) इति गौतमस्मरणात्॥ दुहितृदौहित्रीणां समवाये दौहित्रीणां किंचिदेव दातव्यम्; यथाह मनुः (९।१९३)—'यास्तासां स्युर्दुहितरस्तासामपि यथाऽर्हतः। मातामह्या धनात्किंचित्प्रदेयं प्रीतिपूर्वकम्॥' इति॥ दौहित्रीणामप्यभावे दौहित्रा धनहारिणः, यथाह नारदः—(१३।२) 'मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः' इति। तच्छब्देन संनिहितदुहितृपरामर्शात्॥ दौहित्राणामभावे पुत्रा गृह्णन्ति। 'ताभ्य ऋतेऽन्वय' (व्य० ११७) इत्युक्तत्वात्। मनुरपि दुहितणां पुत्राणां च मातृधनसंबन्ध

( ६।१९२ )—'जनन्यां संस्थितायां तु सर्वे सहोदराः। समं

रन्मातृकं रिक्थं भगिन्यश्च सनाभयः॥' इति। मातृकं रिक्थं सर्वे

सहोदराः समं भजेरन्, सनाभयो भगिन्यश्च समं भजेरन्निति संवन्धः, न पुनः

सहोदरा भगिन्यश्च संभूय भजेरन्निति इतरेतरयोगस्य द्वन्द्वैकशेषाभावादप्रतीतेः।

कर्तृत्वान्वयेनापि 'च'शब्दोपपत्तेः ; यथा देवदत्तः कृषिं कुर्याद्यज्ञदत्तश्चेति।

'ग्रहणमुद्धारविभागनिवृत्त्यर्थम्। 'सोदर'ग्रहणं भिन्नोदरनिवृत्त्यर्थम्।

अनपत्यहीनजातिस्त्रीधनं तु भिन्नोदराप्युत्तमजातीयसपत्नीदुहिता गृह्णाति, तदभावे

तदपत्यम् ; यथाऽऽह मनुः ( ९।१९८ )—'स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं

थंचन। ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत्॥' इति।

ब्राह्मणी'ग्रहणमुत्तमजात्युपलक्षणम्। अतश्चानपत्यवैश्याधनं क्षत्रियाकन्या गृह्णाति।

पुत्राणामभावे पौत्राः पितामहीधनहारिणः। 'रिक्थभाज ऋणं प्रतिकुर्युः' ( २८।७ )

इति गौतमस्मरणात्, 'पुत्रपौत्रैॠणं देयम' ( व्य ५० ) इति पौत्राणामपि

पितामह्यृणापाकरणेऽधिकारात्। पौत्राणामप्यभावे पूर्वोक्ता भर्त्रादयो वान्धवा

धनहारिणः॥ १४५॥

CHARCHA—Easy See Mita. first portion. In पितृगामि, पितृ by एकशेष means both मातृ and पितृ ( see ante ).

116. A वाग्दत्ता dying before marriage, the शुल्क with respect to this should be squared up etc

दत्त्वा कन्यां हरन् दण्ड्यो व्ययं दद्याच्च सोदयम्।

मृतायां दत्तमादद्यात् परिशोध्योभयव्ययम्॥ १४६

Prose—कन्या ( वाचा ) दत्त्वा पश्चात् अपहरन् अन्यस्मै ददन् जनः राज्ञा [दण्ड्य]ः। स सोदयं व्ययं दद्यात्। वाग्दत्तायां मृतायां, बरपक्षः दत्तं शुल्कं [उभय]व्ययं परिशोध्य आदद्यात्।





Beng কন্যা বাগ্‌দত্তা হইবার পর প্রতিশ্রুত পাত্র ভিন্ন অন্য কাহাকে যদি তাকে উপযুক্তকারণাভাবে বিবাহ দেওয়া হয়, তবে এই অপহর্তা রাজাকর্তৃক দণ্ডার্হ হইবে। এই ব্যক্তি সুদসহ পূর্ব প্রতিশ্রুত বরকে সমস্ত খরচ দিবে। বাগ্‌দত্তা বিবাহের পূর্বেই মৃতা হইলে, বরপক্ষ, উভয়পক্ষের খরচ শোধবোধ করিয়া বাকি শুল্কার্থ আদায় করিয়া লইবে।

Eng. If after betrothal, a girl is not given to the promised groom but to some one else without sufficient reason, then this "Apaharta" is to be punished and he is to pay all costs of the promised groom with interest ; if a वागदत्ता dies before marriage, then the bridegroom's party will take back all sums of "sulka" after squaring up all expenses incurred by both the parties

Mita—स्त्रीधनप्रसङ्गेन वागदत्ताविषयं किञ्चिदाह—"कन्यां वागदत्त्वा अपहरन्" द्रव्यानुबन्धाद्यनुसारेण राज्ञा दण्डनीयः। एतच्च अपहरणकारणाभावे। सति तु कारणे "दत्तामपि हरेत् पूर्वान् श्रेयांश्चेद्वर आव्रजेत्" इति अपहाराभ्यनुज्ञानात् न दण्ड्यः। यच्च वाग्दाननिमित्तं वरेण स्वसम्बन्धिनां कन्यासम्बन्धिनां चोपचारार्थं धनं व्ययीकृतं तत्सर्वं "सोदयं" सवृद्धिकं कन्यादाता वराय दद्यात्॥ अथ कथंचिद्वागदत्ता संस्कारात् प्राक् म्रियते, तदा किंकर्त्तव्यमित्यत आह—यदि वागदत्ता मृता तदा यत् पूर्वमङ्गुलीयकादि शुल्कं वरेण दत्तं, तद्वर आददीत, परिशोध्य उभयव्ययम्। उभयो आत्मनः कन्यादातुश्च यो व्ययः, तं परिशोध्य विगमय्य अवशिष्टमाददीत। यत्तु कन्यायै मातामहादिभिर्दत्तं शिरोभूषणादिकं वा क्रमायातं, तत् सहोदरा भ्रातरो गृह्णीयुः। "रिक्थं मृतायाः कन्याया गृह्णीयुः सोदरास्तदभावे मातुस्तदभावे पितुः" इति बौधायनस्मरणात्॥ १४६॥

## CHARCHA

1. हरन्=It means अपहरन्। adj. used substantively That is, one who after betrothal gives his वागदत्ता कन्या to another ; such a promise-breaking person is an अपहरन् वा अपहारक। He is दण्ड्य if there be no sufficient reason. In this case he is to pay all costs with interest ( सोदय ) to the पूर्व प्रतिश्रुत वर वा वरपक्ष।

2 आदद्यात्—Better say आददीत। कर्त्रभिप्रायविवक्षाभावात परस्मैपदम् इति वा समाधेयम्।

3. परिशोध्य—परि+शुध+णिच् ल्यप्।

147. Even in जीवितकाल, husband may take स्त्रीधन in dire distresses etc

दुर्भिक्षे धर्मकार्ये च व्याधौ संप्रतिरोधके।
गृहीतं स्त्रीधनं भर्त्ता नस्त्रियै दातुमर्हति ॥ १४७ ॥

Prose—दुर्भिक्षे, धर्मकार्य्ये, संप्रतिरोधके ( कार्य्यानुष्ठानबाधके ) व्याधौ गृहीतं स्त्रीधनं भर्त्ता स्त्रियै दातुं न अर्हति।

Beng দুর্ভিক্ষের সময়, কুটুম্বভরণজন্য এবং অবশ্য কর্ত্তব্য ধর্ম্মকার্য্যের নিমিত্ত, কার্য্যবাধক ব্যাধিনিমিত্ত( বা ব্যাধির জন্য এবং কারারোধজন্য ) স্ত্রীধন গৃহীত হইলে, ভর্ত্তা তাহা স্ত্রীকে আর ফিরাইয়া দিবেন না।

Eng. During famine, in compulsory religious rites, in diseases, in imprisonment ( or in diseases standing in the way of doing any work), husband may take and expend स्त्रीधन, and this is not to be paid back.



Mita—मृतप्रजःस्त्रीधनं भर्त्तृगामीत्युक्तम्, इदानीं जीवन्त्याः सप्रजाया अपि स्त्रिया धनग्रहणे क्वचिद्भर्त्तुरभ्यनुज्ञामाह—दुर्भिक्षे कुटुम्बभरणार्थं, धर्मकार्ये अवश्यकर्त्तव्ये, व्याधौ च संप्रतिरोधके—बन्दिग्रहणनिग्रहादौ, द्रव्यान्तररहितः स्त्रीधनं गृह्णन् भर्त्ता न पुनर्दातुमर्हति किन्तु प्रकारान्तरेण अपहरन् दद्यात्। भर्त्तृव्यतिरेकेण जीवन्त्या स्त्रिया धनं केनापि दायादेन न ग्रहीतव्यम्। "जीवन्तीनां तासां ये तद्धरेयुः स्वबान्धवाः। तान् शिष्यात् चौरदण्डेन धार्मिकः पृथिवीपतिः" ( मनुः ) इति दण्डविधानात्। तथा— "पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत्। न तं भजेरन् दायादा भजमानाः पतन्ति ते" इति ( मनौ ) दोषश्रवणाच्च ॥

## CHARCHA

1 संप्रतिरोधके व्याधौ—Mita takes it as two words ; संप्रतिरोध एव इति संप्रतिरोधकः-imprisonment ; वा-सप्रतिरोधक ( with ण्वुल् ) means that which obstructs or stands against working i e. an invalidating diseases Now सप्रतिरोधके qualifies व्याधौ। Thus वाचस्पति says 'सप्रतिरोधके इति व्याधिविशेषणम्। कार्य्यानुष्ठानबाधक इति च तदर्थः"। In such dire distresses only husband can take स्त्रीधन।

148 Equal or proportionate sum is to be given to a अधिविन्ना स्त्री।

अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम्।
न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्धं प्रकल्पयेत् ॥ १४८ ॥

Prose—यस्यै स्त्रीधनं न दत्तं तस्यै अधिविन्नस्त्रियै आधिवेदनिकं समं धनं

दद्यात्। दत्ते तु अर्धं प्रकल्पयेत्। [ N. B.—The reading प्रकीर्त्तितम् here is unsound for here Mitakshara's synonym is दद्यात् ]

Beng—যাকে স্ত্রীধন দেওয়া হয় নাই, এমন পূর্বপত্নীকে, দ্বিতীয়বার দারপরিগ্রহের সময়, দ্বিতীয় দারপরিগ্রহে যত ব্যয় হইবে তার সমান ধন দিবে। আর যদি স্ত্রীধন এই পূর্বপত্নীকে আগেই দেওয়া হইয়া থাকে, তাহা হইলে অধিবেদনের (দ্বিতীয় দারপরিগ্রহের) সময় যাহা ব্যয়িত হইয়াছে, তার অর্ধ পরিমাণ দিবে। [ N B—এখানে বিজ্ঞানেশ্বরের মতে অর্ধশব্দ সমঅংশ অর্থে প্রযুক্ত হয় নাই। অর্থাৎ যতটা দিলে আধিবেদনিক ব্যয়ের সমান হয়, ততটা দিবে ]।

Eng. If one is to marry a second time, then he is to pay to his first wife as much money as is expended during this second marriage, provided any स्त्रीधन is not given to her; if however स्त्रीधन is given already to her, then this first wife will get as much portion as will cover and equal to his expenses of second marriage or अधिवेदन।

Mita—आधिवेदनिकं स्त्रीधनमुक्तं, तदाह—यस्याः उपरि विवाहः सा अधिविन्ना (स्त्री)। साचासौ स्त्री च। तस्मै "अधिविन्नस्त्रियै"—"आधिवेदनिकम्" अधिवेदननिमित्तं धनं समं यावदधिवेदनाय व्ययीकृतं तावत् दद्यात्। यस्यै भर्त्रा श्वशुरेण वा स्त्रीधनं न दत्तम्। दत्ते पुनः स्त्रीधने 'आधिवेदनिकस्य अर्धं दद्यात्'। [अर्धशब्दश्चात्र समविभागवचनः न भवति, अतश्च यावता तत् पूर्वदत्तम् आधिवेदनिकसमं भवति तावद्देयम् इत्यर्थः ] ॥ १४८ ॥

## CHARCHA

1. अधिविन्नस्त्री—अधि+विद्+क्त स्त्रियाम्=अधिविन्ना one (wife),



against whom a second marriage is done. अधिविन्ना स्त्री, कर्मधा। तस्यै। सम्प्रदाने ४र्थी॥ अधिवेदने भवम् इति आधिवेदनिकम् (ठञ् अध्यात्मादि) Q. समम्॥ Here समम् means by लक्षणा समपरिमितं धनम्॥ अर्ध also here means "portion" and not समांश portion i. e. that portion whereby स्त्रीधन will be equal to second marriage's expenditure

N. B.—By the rule "नुदविद-उन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्"—विद विचारणे रुधादि gives विन्न and वित्त। अदादि विद (to know) gives विदित and, दिवादिविद however gives विन्न &c.

149. The procedure of partition in cases of doubt due to surreptition by some party.

विभागनिह्नवे ज्ञातिवन्धुसाक्ष्यभिलेखितैः।
विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः॥ १४৯॥

Prose—विभागनिह्नवे (सति) ज्ञातिवन्धु-साक्षि-अभिलेखितैः विभागभावना ज्ञेया, यौतकैः (पृथक्कृतैः) गृहक्षेत्रैश्च (विभागभावना ज्ञेया)।

Beng. যদি বিভাগবিষয়ে কোন অপলাপ সন্দেহ হয়, তখন জ্ঞাতিগণ, মাতৃ-পিতৃবন্ধু এবং আত্মবন্ধুগণ যাহা বলিবে, সাক্ষিগণ যাহা বলিবে তদ্দ্বারা এবং লিখিত দলিলাদি দ্বারা বিভাগ নির্ণয় করিবে। এবং পৃথককৃত গৃহক্ষেত্রাদি বিচার করিয়াও বিভাগ নির্ণয় করিবে।

Eng. If any suspicion arises with regard to partition of property, then it is to be decided by kindreds, maternal paternal relations, witnesses and written documents, and also by separated fields or lands.

Mita—एवं विभागमुक्त्वा इदानीं तत्सन्देहे निर्णयहेतुमाह—"विभागस्य निह्नवे" अपलापे सति ज्ञातिभिः पितृबन्धुभिः मातृबन्धुभिः मातुलादिभिः साक्षिभिः—पूर्वोक्तलक्षणैः साक्षिभिः लेख्येन च विभागपत्रेण विभागभावना विभागनिर्णयो ज्ञातव्यः। तथा "यौतकैः" पृथक्कृतैः गृहक्षेत्रैश्च ॥ पृथक्कृष्यादिकार्य्य प्रवर्त्तनं पृथकपञ्चमहायज्ञादि-धर्मानुष्ठानं च। नारदेन विभागलिङ्गमुक्तम्— "विभागधर्मसन्देहे दायादानां विनिर्णयः। ज्ञातिभिर्भागलेख्येन पृथक्कार्य्य-प्रवर्त्तनात्। भ्रातृणामविभक्तानाम् एको धर्मः प्रवर्त्तते। विभागे सति धर्मोपि भवेत्तेषां पृथक् पृथक्॥" तथा अपराण्यपि विभागलिङ्गानि तेनैवोक्तानि— "साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च। विभक्ता भ्रातरः कुर्युर्नाविभक्ताः कथञ्चन" इति ॥ ( इति दायविभागप्रकरणम् ) ॥

CHARCHA

1. विभागनिह्नवे—निह्नव is अपलाप=denial and surreptition. विभागस्य निह्नवः, तस्मिन्। भावे ७मी।

2. ज्ञाति &c—अभिलेखित ( भावे क्त ) means written documents, तैः। करणे ३या॥ यौतक is पृथकक्कृत। तैः। Qual. गृहक्षेत्रैः। गृहाणि च क्षेत्राणि च, गृहक्षेत्राणि, द्रव्यविवक्षायाम् न समाहारः by "जातिरप्राणिमाम्"। use of पृथकक्कृत क्षेत्र and गृह may erase suspicions. See Mita.

## अथ सीमाविवाद-प्रकरणम्

( The section on boundary-dispute )

Sl. 150-151. In fundamental disputes over boundary of fields etc. the vassals the peasants etc there will determine this.



सीम्नो विवादे क्षेत्रस्य सामन्ताः स्थविरादयः।
गोपाः सीमाकृषाणा ये सर्वे च वनगोचराः॥ १५० ॥
नयेयुरेते सीमानं स्थलाङ्गारतुषद्रुमैः।
सेतु-वल्मीक-निम्नास्थि-चैत्याद्यैरुपलक्षिताम्॥ १५१ ॥

Prose—क्षेत्रस्य सीम्नः विवादे ( सति ) सामन्ताः स्थविरादयः गोपाः सीमाकृषाणाः ये सर्वे च वनगोचराः ( भवन्ति )—एते स्थलाङ्गारतुषद्रुमैः सेतुवल्मीक-निम्नास्थि चैत्याद्यैः उपलक्षितां सीमानं नयेयुः ( निश्चिनुयुः )।

Beng দুই গ্রামের মধ্যে, বা একগ্রামেই গৃহ, জমি, উদ্যানাদি সীমাবিষয়ক বিবাদ ঘটিলে সামন্তগণ ( অর্থাৎ চতুষ্পার্শ্বস্থ গ্রামস্থ-প্রান্ত ব্যক্তি ), সেখানকার বৃদ্ধ ও নিবাসিগণ, গোচারণকারিগণ, সেখানকার ক্ষেত্রকর্ষকগণ, এবং বনচারী কিরাতাদিগণ বা সীমা নির্দেশ করিয়া দিবে। সেই সীমার চিহ্ন হইবে—স্থল ( তত্রস্থ কোন উচ্চস্থল ), অঙ্গার ( কয়লা ), তুষ অথবা তত্রস্থ কোন অশ্বত্থাদিবৃক্ষ, সেতু, উইএর ঢিবি, নিম্নস্থল ( নিম্নভূমি ), অস্থি ( প্রস্তরচূর্ণ ) চৈত্য ( পাষাণাদিদ্বারাবদ্ধ উচ্চস্থান ) প্রভৃতি। এ দ্বারা সীমা চিহ্নিত করিবে।

Eng—In case of disputes over lands, gardens etc. in the same village or in different village, the villagers in the outskirts, the old person, the peasants, the tillers there and the foresters there will decide this ; and the demarcation line should be by some raised land, by coal-marks, by husks of grains, by some trees, by bridge, by ant-hills, or low land, by stone-powder or by some stone-mounds etc there.

Mita—अधुना सीमाविवादनिर्णय उच्यते—ग्रामद्वयसंबन्धिनः क्षेत्रस्य सीम्नो विवादे तथैकग्रामान्तर्वर्तिक्षेत्रमर्यादाविवादे च सामन्तादयः स्थलाङ्गारादिभिः पूर्वोक्तैः सीमालक्षणैरुपलक्षितां चिह्नितां सीमां नयेयुर्निश्चिनुयुः। सीमा क्षेत्रादिमर्यादा; सा चतुर्विधा—जनपदसीमा, ग्रामसीमा, गृहसीमा चेति। सा च यथासंभवं पञ्चलक्षणा। तदुक्तं नारदेन—'ध्वजिनी मत्स्यिनी चैव नैधानी भयवर्जिता। राजशासननीता च सीमा पञ्चविधा स्मृता॥' इति॥ ध्वजिनी वृक्षादिलक्षिता; वृक्षादीनां प्रकाशकत्वेन ध्वजतुल्यत्वात्। मत्स्यिनी सलिलवती; मत्स्य'शब्दस्य स्वाधारजललक्षकत्वात। नैधानी निखात-तुषाङ्गारादिमती; तेषां निखातत्वेन निधानतुल्यत्वात्। भयवर्जिता अर्थिप्रत्यर्थिपरस्परसंप्रतिपत्तिनिर्मिता। राजशासननीता ज्ञातृचिह्नाभावे राजेच्छया निर्मिता। एवंभूतायां षोढा विवादः संभवति। यथाऽऽह कात्यायनः—'आधिक्यं न्यूनता चांशे अस्तिनास्तित्वमेव च। अभोगभुक्तिः सीमा च षड् भूवादस्य हेतवः॥' इति॥ तथा हि—'ममात्र पञ्चनिवर्तनाया भूमेरधिका भूरस्ति' इति केनचिदुक्ते पञ्चनिवर्तनैव नाधिकेत्याधिक्ये विवादः। 'पञ्चनिवर्तना मदीया भूमिः' इत्युक्ते न ततो न्यूनैवेति न्यूनतायाम्। 'पञ्चनिवर्तनो ममांश' इत्युक्ते अंश एव नास्तीत्यस्तिनास्तित्वविवादः संभवति। 'मदीया भूः प्रागविद्यमानभोगैव भुज्यते' इत्युक्ते न मंतता चिरंतन्येव मे 'भुक्ति'-रित्यभोगभुक्तौ विवादः। इयं मर्यादेयं वेति सीमाविवाद इति षट्प्रकार एव विवादः संभवति। षट्प्रकारेऽपि भूविवादे श्रुत्यर्थाभ्यां सीमाया अपि निर्णेय-मानत्वात्सीमानिर्णयप्रकरणे तस्यान्तर्भावः॥ समन्ताद्भवाः सामन्ताः। चतसृषु दिक्ष्वनन्तरग्रामादयस्ते च प्रतिसीमं व्यवस्थिताः; 'ग्रामो ग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्तितम्। गृहं गृहस्य निर्दिष्टं समन्तात्परिरभ्य हि॥' इति कात्यायनवचनात्. 'ग्रामादि'शब्देन तत्स्थाः पुरुषा लक्ष्यन्ते। ग्रामः पलायित इति यथा। 'सामन्त'ग्रहणं च तत्संसक्तादुपलक्षणार्थम्। उक्तं च कात्यायनेन—'संसक्तकास्तु सामन्तास्तत्संसक्तास्तथोत्तराः। संसक्तसक्तसंसक्ताः पद्माकाराः प्रकीर्तिताः॥' इति॥ स्थविरा वृद्धाः। 'आदि'ग्रहणेन



मौलोद्धृतयोर्ग्रहणम्। वृद्धादिलक्षणं च तेनैवोक्तम्—'निष्पद्यमानं यैर्दृष्टं तत्कार्यं तद्गुणान्वितैः। वृद्धा वा यदि वाऽवृद्धास्ते तु वृद्धाः प्रकीर्तिताः॥ ये तत्र पूर्वं सामन्ताः पश्चाद्देशान्तरं गताः। तन्मूलत्वात्तु ते मौला ऋषिभिः परिकीर्तिताः॥ उपश्रवणसंभोगकार्याख्यानोपचिह्निताः। उद्धरन्ति पुनर्यस्मा-दुद्धृतास्ते ततः स्मृताः॥' इति॥ गोपा गोचारकाः। सीमाकृषाणाः सीमासंनिहितक्षेत्रकर्षकाः। सर्वे च वनगोचरा वनचारिणो व्याधादयः। ते च मनुनोक्ताः (८।२६०)—'व्याधाञ्शाकुनिकान्गोपान्कैवर्तान्मूलखातकान्। व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनगोचरान्॥' इति॥ स्थलमुन्नतो-भूप्रदेशः, अङ्गारोऽग्नेरुच्छिष्टम्, तुषा धान्यत्वचः, द्रुमा न्यग्रोधादयः, सेतुर्जलप्रवाहबन्धः, चैत्यं पाषाणादिबन्धः, आदिशब्देन वेणुवालुकादीनां ग्रहणम्, एतानि च प्रकाशाप्रकाशभेदेन द्विप्रकाराणि। यथाऽऽह मनुः (८।२४६-२४८) 'सीमावृक्षांश्च कुर्वीत न्यग्रोधाश्वत्थकिंशुकान्। शाल्मलीशालतालांश्च क्षीरिणश्चैव पादपान्॥ गुल्मान्वेणूंश्च विविधाञ्शमीवल्लीस्थलानि च। शारान्कुब्जकगुल्मांश्च यथा सीमा न नश्यति॥ तडागान्युदपानानि वाप्यः प्रस्रवणानि च। सीमासंधिषु कार्याणि देवतायतनानि च॥ इति प्रकाशरूपाणि। (मनुः ८।२४९-२५२)—'उपच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत्। सीमाज्ञाने नृणां वीक्ष्य नित्यं लोके विपर्ययम्॥ अश्मनोऽस्थीनि गोवालांस्तुषान्भस्म कपालिकाः। करीषमिष्टकाङ्गारशर्करावालुकास्तथा॥ यानि चैवंप्रकाराणि कालाद्भूमिर्न भक्षयेत्। तानि संधिषु सीमायामप्रकाशानि कारयेत्॥ एतैर्लिङ्गैर्नयेत्सीमां राजा विवदमानयोः॥' इति प्रच्छन्नलिङ्गानि॥ एतैः प्रकाशाप्रकाशरूपैर्लिङ्गैः सामन्तादिप्रदर्शितैः सीमां प्रति विवदमानयोः सीमानिर्णयं कुर्याद्राजा॥ १५०-१५१॥

## CHARCHA

1. **स्थलाङ्गार &c—करणे ३या।** **स्थल** is some raised land; **अङ्गार** coal; **तुष** husks of grain; **द्रुम** is any big tree;

सेतु bridge, वल्मीक ant hill, निम्न is some low land or pool &c near by, अस्थि is पाषाणचूर्ण representing presentday chalk powder, चैत्य is here a raised boundary mound by stones; चैत्य also means बौद्धमन्दिर or विहार (see sl 228), also big secared trees as in Meghadutam "नीड़ारम्भैगृहपक्षिभिराकुलग्रामचैत्या" etc Compare "एतैः प्रकाशाप्रकाशरूपैः लिङ्गैः सामन्तादिप्रदर्शितैः सीमां प्रतिविवदमानयोः सीमानिर्णयं कुर्य्याद्राजा"—Mitakshara. By आद्य here वेणु वालुका markings are meant. स्थल, द्रुम, सेतु, वल्मीक, निम्न and चैत्य are open clearly (प्रकाश) marked permanent boundaries; others less marked are अप्रकाश। white अस्थिचूर्ण, पाषाणचूर्ण will ack like chalk powders as in popping crease in cricket.

152. The procedure to erect boundary lines where they are unmarked.

सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशापि वा ।
रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः ॥ १५२ ॥

Prose—सामन्ताः (प्रान्तवासिनः; ग्रामान्तवासिनः) समग्रामाः (एकग्रामवासिनः) चत्वारः अष्टौ दश अपि वा रक्तस्रग्वसनाः (तथा) क्षितिधारिणः (मूर्ध्नि धृतक्षितिखण्डाः सन्तः) सीमां नयेयुः (चिह्नितां कुर्य्युः)।

Beng. যেখানে সীমাচিহ্ন নাই, বা অস্পষ্ট সন্দিগ্ধ চিহ্নমাত্র আছে, তথায় গ্রামান্তবাসিগণ বা এক গ্রামবাসী চারিজন, আটজন বা দশজন মিলিত হইয়া, রক্তমাল্য ও রক্তবসন পরিধান করিয়া মাথায় ভূখণ্ডধারণ করিয়া সীমা চিহ্নিত করিবে।

Eng. In case of want of clear boundary line it is to



be marked by some four, eight or ten vassals or territory--end residers or selfsame villagers wearing red garlands, red cloths and keeping a piece of earth on the head.

Mita—यदा पुनश्चिह्नानि न सन्ति, विद्यमानानि वा लिङ्गालिङ्गतया सन्दिग्धानि, तदा निर्णयोपायमाह--इति। सामन्ताः पूर्वोक्तलक्षणाः, समग्रामाश्चत्वारोऽष्टौ दशापि वेत्येवं समसंख्याः प्रत्यासन्नग्रामीणाः। रक्तस्रग्विणो रक्ताम्बरधराः मूर्ध्न्यारोपितक्षितिखण्डाः सीमानं नयेयुः प्रदर्शयेयुः। 'सामन्ता वा' इति विकल्पाभिधानं स्मृत्यन्तरोक्तसाक्ष्यभिप्रायम्। यथाऽऽह मनुः (८।२५३)—'साक्षिप्रत्यय एव स्यात्सीमावादविनिर्णये' इति॥ तत्र च साक्षिणां निर्णेतृत्वं मुख्यम्; तदभावे सामन्तानाम्। तदुक्तम् (मनुः ८।२५८)—'साक्ष्यभावे तु चत्वारो ग्राम्याः सीमान्तवासिनः। सीमान्तवासिनः सीमाविनिर्णयं कुर्युः प्रयता राजसंनिधौ; तदभावे तत्सक्तादीनां निर्णेतृत्वम्। यथाऽऽह कात्यायनः—'स्वार्थसिद्धौ प्रदुष्टेषु सामन्तेष्वर्थगौरवात्। तत्संसक्तैस्तु कर्तव्य उद्धारो नात्र संशयः॥ संसक्तसक्तदोषे तु तत्संसक्ताः प्रकीर्तिताः। कर्त्तव्या न प्रदुष्टास्तु राज्ञा धर्मं विजानता।' इति। सामन्ताद्यभावे मौलादयो ग्राह्याः, 'तेषामभावे सामन्तमौलवृद्धोद्धृतादयः। स्थावरे षट्प्रकारेऽपि कार्या नात्र विचारणा॥' इति कात्यायनेन क्रमविधानात्। एते च सामन्तादयः संख्यागुणातिरेकेण संभवन्ति। "सामन्ता साधनं पूर्वं निर्दोषाः स्युर्गुणान्विताः। द्विगुणास्तूत्तरा ज्ञेयास्ततोऽन्ये त्रिगुणा मताः" ॥ इति स्मरणात्॥ ते च साक्षिणः सामन्तादयश्च स्वैः स्वैः शपथैः शापिताः सन्तः सीमां नयेयुः; (मनुः ८।२५६)—'शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः। सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समंजसम्॥' इति स्मरणात्। नयेयुरिति बहुवचनं द्वयोर्निरासार्थं नैकस्य। 'एकश्चेदुन्नयेत्सीमां सोपवासः समुन्नयेत्। एकमाल्याम्बरधरो भूमिमादाय मूर्धनि॥' (ना० ११।१०६) इति नारदेनैकस्याभ्यनुज्ञानात्॥ योऽयं—'नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि। गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु स्थिता॥' इत्येकस्य निषेधः स उभयानुमतधर्मविद्व्यतिरिक्तविषय इत्यविरोधः॥

स्थलादिचिह्नाभावेऽपि साक्षिसामन्तादीनां सीमाज्ञाने उपायविशेषो नारदेनोक्तः—'निम्नगापहृतोत्सृष्टनष्टचिह्नासु भूमिषु। तत्प्रदेशानुमानाच्च प्रमाणाद्भोगदर्शनात्॥' इति। निम्नगाया नद्या अपहृतेनापहरणेनोत्सृष्टानि स्वस्थानत्प्रच्युतानि नष्टानि वा लिङ्गानि यासु मर्यादाभूमिषु तत्र तत्प्रदेशानुमानादुत्सृष्टनष्टचिह्नानां प्राचीनप्रदेशानुमानात् ग्रामादारभ्य सहस्रदण्डपरिमितं क्षेत्रमस्य ग्रामस्य पश्चिमे भागे इत्येवंविधात्प्रमाणाद्वा प्रत्यर्थिसमक्षम-विप्रतिपन्नाया अस्मार्तकालोपलक्षितभूक्तेर्वा निश्चिनुयुः॥ बृहस्पतिना चात्र विशेषो दर्शितः—'आगमं च प्रमाणं च भोगं कालं च नाम च। भूभागलक्षणं चैव ये विदुस्तेऽत्र साक्षिणः॥' इति। एते च साक्षिसामन्तादयः शपथैः श्राविताः सन्तः कुलादिसमक्षं राज्ञा प्रष्टव्याः। यथाह मनुः (८।२५४)—'ग्रामेयककुलानां तु समक्षं सीम्नि साक्षिणः। प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोः॥' इति। ते च पृष्टाः साक्ष्यादयः समस्ता ऐकमत्येन सीम्नि निर्णयं ब्रूयुः। तैर्निर्णीतां सीमां तत्प्रदर्शितसकललिङ्गयुक्तां साक्ष्यादिनामान्वितां चाविस्मरणार्थं पत्रे समारोपयेत्। उक्तं च मनुना (८।२६१)—'ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निर्णयम्। निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामतः॥' इति एतेषां साक्षिसामन्तप्रभृतीनां सीमाचङ्क्रमणदिनादारभ्य यावत्त्रिपक्षं राजदैविकव्य-सनाव्यसनं चेन्नोत्पद्यते तदा तत्प्रदर्शनात्सीमानिर्णयः। अयं च राजदैविकव्य-सनावधिः कात्यायनेनोक्तः—'सीमाचङ्क्रमणे कोशे पादस्पर्शे तथैव च। त्रिपक्षपक्षसप्ताहं दैवराजिकमिष्यते॥' इति॥ १५२॥

## CHARCHA

1. रक्तस्रक्वसनाः—स्रक् च वसनञ्च न स्रग्वसनं समाहार द्वन्द्व। वा द्रव्य विवक्षायां स्रग्वसनानि। रक्तानि स्रग्वसनानि एषाम्, बहु। Pred to सामन्ताः and समग्रामाः (समः एकः ग्रामः वासत्वेन येषां ते-बहु)। रक्तस्रक् धारण, and रक्तवसनधारण is imperative, for these are to undergo शपथ to be impartial and just in सीमाचिह्नीकरण। Compare



Manu—"साक्षिप्रत्यय एव स्यात् सीमाविवादे" and "ते साक्षिणः सामन्तादयश्च स्वैः शपथैः शापिताः सन्तः सीमां नयेयुः" (ch. viii)।

2. क्षितिधारिणः—क्षितिं धरन्ति इति क्षितिधारिणः (णिनि)। Pred. to सामन्ताः etc. This is also by way of शपथ and धर्मानुसरण॥ नयेयुः—नी+लिङ् युस्॥

153. Punishmentby the king in case of partiality and falsehood of boundary markers.

अनृते तु पृथक्दण्ड्या राज्ञा मध्यमसाहसम्।
अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्त्तिता॥ १५३॥

Prose—अनृते (सीमानिर्णयविषये अनृतव्यवहारे सति) सामन्तादयः राज्ञा पृथक् मध्यमसाहसं (यथा तथा, मध्यमसाहसोपयुक्तदण्डेन इत्यर्थः) दण्ड्याः (दण्डप्रयोग्याः भवन्ति)। सीम्नः ज्ञातृचिह्नानां अभावे (सति) राजा एव सीम्नः प्रवर्त्तिता (प्रवर्त्तयिता इत्यर्थः)।

Beng. সীমানির্ণয় বিষয়ে কোন সামন্তাদি পক্ষপাতিত্বহেতু অনৃতবাক্য ব্যবহার করিলে, রাজা কর্ত্তৃক পৃথগ্‌ভাবে মধ্যমসাহসকার্য্যকারীর উপযুক্ত বা যোগ্য দণ্ডে (যথা পাঁচশত পণ জরিমানা ইত্যাদি) দণ্ডিত হইবে। সীমার জ্ঞাতা বা সীমার চিহ্ন পর্য্যন্ত না থাকিলে রাজা নিজেই সীমা প্রবর্ত্তন করিয়া দিবেন। [N. B—এ ক্ষেত্রে সমবিভাগই সাধারণতঃ রাজা প্রবর্ত্তন করিবেন]।

Eng. If falsehood is detected among Samantas (vassals etc) while marking boundary lines, then such men are to be punished with fines as is seen in Madhyama-Sahasa Karma; when there will be no knower or sign

f any boundary line there the king himself will do this.
[ N. B.—(i) usually समविभाग is enjoined in such cases. (ii) साहसकर्म is पूर्व, मध्यम and उत्तम (see ahead sl. 230 etc.) ]

Mita—यदात्वमोषाम् उक्तसाद्यवचसां त्रिपक्षाभ्यन्तरे रोगादि दृश्यते, अथवा प्रतिवादिनिर्दिष्टाभ्यधिकसंख्यागुणसाद्यन्तरविरुद्धवचनता, तदा ते मृषाभाषितया दण्डनीयाः, तदाह—अनृते मिथ्यावदने निमित्तभूते सति सर्वे सामन्ताः प्रत्येकं मध्यमसाहसेन चत्वारिंशदधिकेन पणपञ्चशतेन दण्डनीयाः। सामन्तविषयता चास्य साक्षिमौलादीनां स्मृतत्यन्तरे दण्डान्तरविधानादवगम्यते। यथाऽऽह मनुः ( ८।२५७ )—'यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः। विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम् ॥' इति ॥ नारदोऽपि ( ११।७ )—'अथ चेदनृतं ब्रूयुः सामन्ताः सीमनिर्णये। सर्वे पृथक्पृथग्दण्ड्या राज्ञा मध्यमसाहसम् ॥' इति सामन्तानां मध्यमसाहसं दण्डमभिधाय—'शेषाश्चेदनृतं ब्रूयुर्नियुक्ता भूमिकर्मणि। प्रत्येकं तु जघन्यास्ते विनेयाः पूर्वसाहसम् ॥' इति, तत्संसक्तादिषु प्रथमं साहसमुक्तवान्। मौलादीनामपि तमेव दण्डमाह—'मौलवृद्धादयस्त्वन्ये दन्डगत्या पृथक् पृथक्। विनेयाः प्रथमेनैव साहसेनानृते स्थिताः ॥' ( ना० ११।८ ) इति। 'आदि'शब्देन गोपशाकुनिकव्याधवनगोचराणां ग्रहणम्। यद्यपि शाकुनिकादीनां पापतरत्वाल्लिङ्गप्रदर्शन एवोपयोगो न साक्षात्सीमानिर्णये तथाऽपि लिङ्गदर्शन एव मृषाभाषित्वसंभवाद्दण्डविधानमुपपद्यत एव। 'अनृते तु पृथक् दण्ड्या' इत्येतद्दण्डविधानमज्ञानविषयम्; 'बहूनां तु गृहीतानां न सर्वे निर्णयं यदि। कुर्युर्भयाद्वा लोभाद्वा दण्ड्यास्तूत्तमसाहसम् ॥' इति साद्यादीनां कात्यायनेन दण्डान्तरविधानात्। तथा साक्षिवचनभेदेऽप्ययमेव दण्डस्तेनैवोक्तः—कीर्तिते यदि भेदः स्याद्दण्ड्यास्तूत्तमसाहसम्' इति। एवमज्ञानादिनानृतवदने साद्यादीन्दण्डयित्वा पुनः सीमाविचारः प्रवर्तयितव्यः। 'अज्ञानोक्तौ दण्डयित्वा पुनः सीमां विचारयेत्' इत्युक्त्वा 'त्यक्त्वा दुष्टांस्तु सामन्तानन्यान्मौलादिभिः सह। संमिश्र्य कारयेत्सीमामेवं धर्मविदो विदुः ॥' इति निर्णयप्रकारस्तेनैवोक्तः।—



यदा पुनः सामन्तप्रभृतयो ज्ञातारश्चिह्नानि च न सान्ति, तदा कथं निर्णय आह—ज्ञातॄणां सामन्तादीनां लिङ्गादीनां च वृक्षादीनामभावे राजैव सीम्नः वर्तिता प्रवर्तयिता। अन्तर्भावितोऽत्र ण्यर्थः। ग्रामद्वयमध्यवर्तिनीं विवादादीभूतां भुवं समं प्रतिभज्य 'अस्येयं भूरस्येयम्' इत्युभयोः समर्प्य तन्मध्ये ऽमालिङ्गानि कुर्यात। यदा तस्यां भूमावन्यतरस्योपकारातिशयो दृश्यते, तदा ग्रामस्य सकला भूः समर्पणीया। यथाऽऽह मनुः ( ८।२६५ )—सीमायामविषह्यायां स्वयं राजैव धर्मवित्। प्रदिशेद्भूमिमेतेषामुपकारादिति स्थितिः ॥' इति ॥ १५३ ॥

## CHARCHA

1. मध्यमसाहसम्—साहसकर्म is daring act and outrage; it is of 3 kinds (1) पूर्व साहस or अधमसाहस where nominal final and warning is punishment, (2) मध्यमसाहस—where coins are usually fined; (3) उत्तमसाहस as outrage etc. worst crime; here heavy fine etc is enjoined The word is adverb here So Mita says "मध्यमसाहसेन चत्वारिंशदधिकेन पञ्चशतेन दण्डनीयाः"। This is for सामन्तs; others are fined otherwise with पूर्वसाहस etc or construe सामन्ता राज्ञा मध्यमसाहसं दण्ड्याः। Here मध्यमसाहस is अनुक्तकर्म of दण्ड्याः।

2. प्रवर्तिता—It is अन्तर्भावितण्यर्थ। It means प्रवर्त्तयिता। तृ, and not तृन्। So सीम्नः takes कर्मणि षष्ठी। see the rule "न लोकाव्यय…तृनाम्" where तृन् is mentioned and not तृ। सीम्नः may be उभयान्वयि। सीम्नः ज्ञातृचिह्नानाम् अभावे राजा सीम्नः वर्त्तयिता।

254. This is the general procedure with respect to villages, fields, gardens, pools etc.

आरामायतनग्रामनिपानोद्यानवेश्मसु।
एषएव विधिर्ज्ञेयो वर्षाम्बुप्रवाहादिषु ॥ १५४ ॥

Prose— आरामायतनग्रामनिपानोद्यानवेश्मसु वर्षाम्बुप्रवाहादिषु च एषएव (उक्तप्रकार) एव विधिः ज्ञेयः।

Beng. আরাম (ফলপুষ্পযুক্ত ভূমি), আয়তন (শস্যের তুষাদি ছড়াইবার জন্য রক্ষিত জমি), গ্রাম, নিপান (পানীয় জলের আধার বাপী তড়াগাদি), উদ্যান (বাগানবাড়ী), বেশ্মন্ (বাসগৃহ) এবং বর্ষাকালের জলপ্রবাহ প্রভৃতি বিষয়ে বিবাদ উপস্থিত হইলে উপরোক্ত বিধি অনুসারে সীমাদি বিবাদ মিটাইবে।

Eng This is also the procedure to make up disputes over gardens, lands, pieces of paddy-preparing places, villages, pools (ponds), pleasure-gardens, residences, and rain-water flows etc

Mita— अनन्यामपि अतद्भावाशङ्कायाम् अस्याः स्मृतेः न्यायमूलतां दर्शयितुम् आह- "आराम" पुष्पफलोपचयहेतुर्भूभागः, 'आयतन" निवेशनं पलालकूटाद्यर्थं विभक्तो भूभागः, "ग्रामः" प्रसिद्धः (ग्रामग्रहणं न गवादुपलक्षणार्थम्) निपान" पानीयस्थानं वापीकूपप्रभृतिकम्; "उद्यान" क्रीडार्थाभूमिः, 'वेश्म" गृहम्- एषु आरामादिषु अयमेव विधिः सामन्तसाक्ष्यादिलक्षणो विविज्ञातव्यः। तथा वर्षणोद्भुत जलप्रवाहेषु--अनयोर्गृहयर्मध्येन जलौघ प्रवहति अनयोर्वा अन्यैवं प्रकारे विवादे [ आदिग्रहणात प्रासादादिष्वपि प्राचीन एव विधिर्वेदितव्यः। तथा च कात्यायनः—"क्षेत्रकूपतड़ागानां केदारारामयोरपि। गृहप्रासादावसथनृपदेवगृहेषु च" ॥ १५४ ॥ N B.— See Mita for notes here.





155. Punishment when boundary lines are transgressed.

**मर्यादायाः प्रभेदेतु सीमातिक्रमणे तथा।**
**क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः ॥ १५५ ॥**

Prose—मर्य्यादायाः (सीमायाः) प्रभेदे (भेदने) तथा सीमातिक्रमणे (सीमामतिलङ्घ्य गमने) क्षेत्रस्य (भयादिप्रदर्श्य) हरणे च (यथाक्रमेण) अधमोत्तममध्यमाः दण्डाः ज्ञेयाः।

Beng—আলি প্রভৃতি সীমা ভাঙ্গিলে, অন্যের সীমায় লংঘন করিয়া গেলে, বা ভয়প্রদর্শনাদি দ্বারা অন্যের ভূমি হরণ করিলে যথাক্রমে অধমসাহস, উত্তমসাহস ও মধ্যমসাহস বিষয়ক দণ্ড ধার্য্য হইবে।

Eng—If one breaks open boundary borders of others or transgresses on other's fields, or forcibly usurps others lands then he is in order to be punished with fines as in lowest outrageons acts, in highest outrageous acts or as in middle outrageous acts

Mita—सीक्षानिर्णयमुक्त्वा तत्प्रसङ्गेन मर्य्यादाप्रभेदनादौ दण्डमाह—अनेकक्षेत्रव्यवच्छेदिका साधारणा भूमर्य्यादा, तस्याः प्रकर्षेण भेदने, सीमातिक्रमणेसीमामतिलंघ्य कर्षणे, क्षेत्रस्य च भयादिप्रदर्शनेन हरणे यथाक्रमेण "अधमोत्तममध्यमसाहसा दण्डा वेदितव्याः। [ क्षेत्रग्रहणं चात्रगृहारामाद्युपलक्षणार्थम्। यदा पुनः स्वीयभ्रान्तया क्षेत्रादिकमपहरति तदा द्विशतो दमो वेदितव्यः। यथाह मनुः—"गृहं तड़ागमारामं क्षेत्रं वा भीषया हरन्। शतानिपञ्च दण्डयः स्याद अज्ञानात् द्विशतो दमः"। इति अपह्रियमाणक्षेत्रभूयस्तपर्य्यालोचनया कदाचित् उत्तमोपि दण्डः प्रयोक्तव्यः। अतएवाह—

"কথঃ সর্বস্বহরণং পুরান্নির্বাসনাঙ্কনে। তদঙ্গচ্ছেদ ইত্যুক্তো দণ্ড উত্তমসাহসঃ" ॥ ইতি ॥ ১৫৫ ॥

CHARCHA—1. মর্য্যাদায়াঃ প্রভেদ=is breaking of boundary line ; সীমাতিক্রমণ is transgression of boundary line ক্ষেত্রহরণ is forcible usurpation of other's lands here. The punisments are respectively as in অধমসাহস, as in মধ্যমসাহস and as in উত্তমসাহস। প্রভেদে etc has ভাবে ৭মী বা বিষয়াধি ৭মী।

156. welfare works like erection of mounds to regulate flow of water etc done with permission cant be later on objected to

न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः।
परभूमिं हरन् कूपः स्वल्पक्षेत्रो बहूदकः॥ १५६ ॥

Prose—परभूमिं हरन् ( नाशयन् ) अल्पबाधः ( स्वल्पपीड़ाकरः ) किन्तु कल्याणकारकः ( सर्वजनोपकारकः ) सेतुः ( जलप्रवाहबन्धः ) न निषेध्यः ( भूस्वामिना न निवार्य्यः )। एवं परभूमिं हरन् स्वल्पक्षेत्रः कूपः बहूदकः अतश्च कल्याणकारकः ( भूस्वामिना न पश्चात् निषेध्यः )। or as in Mita.

Beng অন্যের ভূমিতে ( অবশ্য অনুমতি লইয়া ? ) ভূস্বামীর সামান্য পীড়াকর কিন্তু বহুলোকের কল্যাণকারক জলনিয়ন্ত্রণজন্য সেতু বা বাঁধ করিতে থাকিলে ভূস্বামী পরে তাহা নিষেধ করিতে পারিবে না। এইরূপ অনুমতি প্রাপ্ত অন্যের জমির স্বল্পস্থানব্যাপি কূপ যদি বহূদক হইয়া বহুর কল্যাণকারী হয়, তবে তাহাও ভূস্বামী পরে নিষেধ করিতে পারিবেন না।

Eng. If in other's lands, some one (with permission ?) erects some mound to regulate water flow for the welfare of many, then though painful, later on the owner can't object to it ; similarly erecting and establishing an well in another's land if benefactory to all around, can't be later on objected to or stopped ( See Mita. for details ).



Mita यः पुनः परक्षेत्रे सेतुकूपादिकं प्रार्थनया अर्थदानेन वा लब्धानुज्ञः निर्मातुमिच्छति तन्निषेधतः क्षेत्रस्वामिन एव दण्डः ( स्यात् ) इत्याह—"परकीयां भूमिमपहरन्" नाशयन्नपि, सेतुर्जलप्रवाहबन्धः क्षेत्रस्वामिना न प्रतिषेध्यः, स चेत् ईषत् पीडाकरः बहूपकारश्च भवति। कूपश्चाल्पक्षेत्रव्यापित्वेन अल्पबाधः, ( अल्पपीडाकरः ) बहूदकत्वेन कल्याणकारकश्च इति बहूदको नैव निवारणीयः। [ कूपग्रहणं च वापीपुष्करिण्याद्युपलक्षणार्थम्। यदा पुनरसौ सर्वक्षेत्रवर्त्तितया बहुबाधः, नद्यादिक्षेत्रसमीपवर्त्तितया वा अल्पोपकारकस्तदासौ निषेध्य इत्यर्थात् उक्तं भवति। सेतोश्च द्वैविध्यमुक्तं नारदेन—"सेतुश्च द्विविधो ज्ञेयः खेयो बन्धस्तथैव च। तोयप्रवर्त्तनात् खेयः बन्धः स्यात्तन्निवर्त्तनात्"॥ यदा तु अन्यनिमित्तं सेतु भेदनादिना नष्टं स्वयं संस्करोति तदा पूर्वस्वामिनं तद्वंश्यं नृपं वा पृष्ट्वैव संस्कुर्य्यात। यथाह नारदः—"पूर्वप्रवृत्तमुत्सन्नम् अपृष्ट्वा स्वामिनं तु यः। सेतुं प्रवर्त्तयेत कश्चित् न तत् फलभाग् भवेत। मृते तु स्वामिनि पुनस्तद्वंश्येवापि मानवे। राजानमामन्त्र्य ततःकुर्य्यात् सेतुप्रवर्त्तनम् ]॥" १५६ ॥

## CHARCHA

1. अल्पबाधः, कल्यणकारकः—Q. सेतुः। The सेतु, अल्पक्षेत्रत्वहेतु, भूस्वामिनः अल्पपीड़ाकरश्चेत्, ..तदा न पश्चात् निषेध्यः। So with regard to an well ; but if otherwise, then the owner may object to it. In case of later संस्कार of these सेतु and कूप it will require permission of क्षेत्रस्वामी वा तद्वंश्य वा of the king

See Mita. Here हरन् does tally with लब्धानुज्ञः of Mita; it shows forcible doing. So we suggest खनन् for हरन।

157. Doing of सेतु without permission of क्षेत्रस्वामी will in produce go to the use of either क्षेत्रस्वामी or the king.

स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्त्तयेत्।
उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः ॥ १५७ ॥

Paose—यः स्वामिने अनिवेद्य, क्षेत्रे (परक्षेत्रे इत्यर्थः) सेतुं प्रवर्त्तयेत, तत्र उत्पन्ने (फले द्रव्ये वा) स्वामिनः भोगः स्यात, तदभावे महीपतेः भोगः स्यात।

Beng. কোন ক্ষেত্রে ক্ষেত্রস্বামীকে নিবেদন না করিয়া যদি কেহ কিছু সেতু নির্মাণ করে তবে সেই ক্ষেত্রে উৎপন্ন শস্যাদিতে ক্ষেত্রস্বামীরই ভোগ হইবে অথবা তদভাবে রাজাই উহা ভোগ করিবেন। [N B—অতএব অনুজ্ঞা লইয়া তবে সেতু নির্মাণ করাইতে হয়]।

Eng If one erects bridges in some other's fields without first obtaining his permission, then the produce of paddy etc in the field there, will go to the क्षेत्रस्वामी, or in his absence it will go to the king—[N. B—So first have क्षेत्रस्सामी's permission to erect bridge etc for better irrigation and tilling; otherwise produce will go to others. See Mita]

Mita—क्षेत्रस्वामिनं प्रत्युपदिष्टम्, इदानीं सेतोः प्रवर्त्तयितारं प्रत्याह—क्षेत्रस्वामिनम अनभ्युपगम्य, तदभावे राजानं वा, यः परक्षेत्रे सेतुं प्रवर्त्तयेत, असौ फलभाक् न भवति। अपितु तदुत्पतन्ने क्षेत्रस्वामिनो भागः, तदभावे



राज्ञः। तस्मात् प्रार्थनया अर्थदानेन वा क्षेत्रस्वामिनं तदभावे राजानं वा अनुज्ञाप्यैव परक्षेत्रे सेतुः प्रवर्त्तयितव्य इति तात्पर्य्यार्थः॥

N. B—CHARCHA—easy. स्वामिने has क्रियायोगे वा सम्प्रदाने ४र्थी॥

158. When one does not till a field or keep it partly ploughed though taken on promise, he has to give compensation

फालाहतमपि क्षेत्रं न कुर्य्याद्यो न कारयेत्।
स प्रदाप्यः कृष्टफलं क्षेत्रमन्येन कारयेत्॥ १५८॥

Prose—यः (स्वामिनः गृहीत्वा) क्षेत्रं फालाहतमपि न कुर्य्यात, न कारयेत् वा, सः राज्ञा कृष्टफलं प्रदाप्यः, अन्येन च क्षेत्रं कारयेत्।

Beng. যদি কেহ, "আমি চাষ করিব" বলিয়া স্বামীর নিকট হইতে কোন ক্ষেত্রের কর্ষণ ভার নেন্, এবং পরে তাহা লাঙ্গলদ্বারা চাষ নিজেও করেন না, বা অন্যকে দিয়াও কর্ষণ করান্ না, তখন রাজা কর্ত্তৃক, সেভূমিচাষ করিলে যতটা আন্দাজ ফল হইবে ততপরিমাণ মূল্য ক্ষেত্রস্বামীকে দিতে বাধ্য করিতে হইবে। এবং রাজা ঐ ক্ষেত্র পূর্ব্বকর্ষকের নিকট হইতে কাড়িয়া লইয়া অন্যদ্বারা চাষ বা কর্ষণ করাইবেন।

Eng. If one first takes charge of ploughing a land himself from the owner, but does not do the same nor make others till the same, then he is to be ordered by the king to pay to the owner as much sum as is equivalent to the produce of the land if tilled; the land is also to be

snatched from him by the king and have it tilled by others (expert in the line).

Mita—क्षेत्रस्वामिना सेतुर्नप्रतिषेध्य इत्युक्तम्, इदानीं तस्यैव प्रसक्तानुप्रसक्तयाकचिद्विध्यन्तरमाह—यः पुनः क्षेत्रस्वामिपार्श्वे—अहमिदं क्षेत्रं कृषामि" इत्यङ्गीकृत्य पश्चात् उत्सृजति, न चान्येन कर्षयति, तच्च क्षेत्रं यद्यपि फालाहतम् ईषद्धलेन विदारितं न सम्यग् बीजावापार्हं तथापि तस्य आकृष्टस्य फलं यावत् तत्रोतपत्त्यर्हं सामन्तादिकल्पितं "तावदसौ कर्षको दापनीयः"। तच्च क्षेत्रं पूर्वकर्षकादाच्छिद्य अन्येन कारयेत्॥ १५८॥ इति सीमाविवाद-प्रकरणं समाप्तम्॥

CHARCHA—1. फालाहतम्—फाल is plough. तेन आहतं विदारितं i e, partly ploughed but not fully ploughed. Qual क्षेत्रम्॥ Note स कृष्टफलं ददाति, in णिच् becomes राजा तं कृष्टफलं दापयति। In voice change it becomes—राज्ञा सः कृष्टफलं दाप्यते वा प्रदाप्यः (with णिच् यत्); see ante also.

### अथ स्वामिपालविवाद प्रकरणम्।

(Section on disputes done by cattle due to negligence of owner or पालक i. e. विवाद of क्षेत्रस्वामी and महिष्यादिस्वामी वा पालक &c.)

159. Fine of cattle-holders if some she-buffalo etc destroy other's paddy, corns etc.

माषानष्टौ तु महिषी शस्यघातस्यकारिणी।
दण्डनीया तदर्द्धन्तु गौस्तदर्द्धमजाविकम्॥ १५६॥



Prose—शस्यघातस्य कारिणी महिषी तु अष्टौमाषान् दन्डनीया, तादृशी गौः तदर्द्धं दण्डनीया, अजाविकं तदर्द्धं दण्डनीयम्।

Beng কোন মহিষী যদি পালকের অনবধানতার জন্য অন্যক্ষেত্রে শস্যনাশ করে, তবে মহিষীপালকের আট মাষা (পরিমাণ মুদ্রা) দণ্ড হইবে। কোন গাভী ঐরূপ করিলে পালকের তদর্দ্ধ বা চারিমাষা দণ্ড হইবে, ছাগল বা ভেড়া একরূপ করিলে পালকের তারও অর্দ্ধেক বা দুইমাষা দণ্ড দিতে হইবে।

Eng If a she-buffalo through carelessness of the of the owner or protector destroys corns in a field then the holder of this shebuffalo is to pay a fine of eight masha, if a cow does so then her owner or protector is to pay fine half as much; if a goat or ram do this then the owner or protector thereof is to pay fine of a further half i. e, two mashas only (as the case may be).

Mita—व्यवहारपदानां परस्परहेतुहेतुमद्भावाभावात "तेषामाद्यमृणादानम् इत्यादि पाठपरिक्रमो न विवक्षित इति व्युतक्रमेण स्वामिपालविवादोभिधीयते—[The subjects of litigations are not causally related to each other, so Manu's declaration of order of व्यवहारपद in his sloka "तेषामाद्यमृणादानम्" etc is not adhered to in order here. so after सीमाविवाद we have here स्वामिपालविवाद]। परशस्यविनाशकारिणी महिषी अष्टौमाषान् दण्डनीया। गौस्तदर्द्धं चतुरो माषान् दण्डनीया। अजामेषाश्च माषद्वयं दण्डनीयाः। महिष्यादीनां दण्डसम्बन्धाभावात् तत्स्वामी पुरुषोपलक्ष्यते। माषश्चात्र ताम्रिकपणस्य विंशतितमोभागः। [माषो विंशतितमोभागः पणस्य परिकीर्त्तितः" इति नारदस्मरणात्। एतच्च अज्ञानविषयम् [this fine is in cases when

cattle destroys corns without knowledge of पालक ]। ज्ञानपूर्वे तु "पणस्य पादौ द्वौगां तु द्विगुणं महिषीं तथा। तथाजाविकवत्सानां पादो दण्डः प्रकीर्त्तितः॥ इति च स्मृत्यन्तरोक्तं द्रष्टव्यम्। यत् पुनर्नारदेनोक्तम्—"माषं गां दापयेत् दण्डं द्वौ माषौ महिषीं तथा। तथाजाविकवत्सानां दण्डः स्यादर्धमाषिकः" इति, तत् पुनः प्ररोहयोग्य-मूलाविशेपभक्षणविषयम्॥ १५९॥

## CHARCHA

1 अजाविकम्—अज वा अजा is goat. अवि is sheep. तत्र भवम्, तदधिकृतम् नियुक्तं वा इति अवि+ठञ् वा ठक्=आविकम्। वा अविरेव आविकम्। स्वार्थे ठक्। अजश्च आविकश्च अजाविकम्, समाहार द्वन्द्व। वा better—अजश्च अविश्च इति अजाविकम् निपातने सिद्ध with क at the end of द्वन्द्व by the very rule "गवाश्वप्रभृतीनि च" (एतानि यथोच्चारितानि साधूनि स्युः)। Similarly we get गवाश्वम्, गवाविकम्, उष्ट्रखरम् &c अजाविकम्···i. e, here तत्स्वामी is दण्डनीय।

N, B.—Vijnaneshwara's "महिष्यादीनां धनसम्बन्धाभावात् तत्स्वामीपुरुषोलक्ष्यते" shows that fine goes to स्वामी, sometimes to गोप the पालक during pasture.

160. Fine may be twice acc. to gravity of fault here.

भक्षयित्वोपविष्टानां यथोक्ताद् द्विगुणोदमः।
सममेषां विवीतेऽपि खरोष्ट्रं महिषीसमम्॥ १६०॥

Prose—भक्षयित्वा उपविष्टानां (महिष्यादीनां सम्बन्धे) यथोक्तात् द्विगुणः दमः (दण्डः) स्यात्। विवीते (तृणकाष्ठयुक्तरक्षितभूभागः विवीतः, तस्मिन्) एषां (महिष्यादीनां) समम् (क्षेत्रदण्डेन समं यथा स्यात् तथा



दण्डनीयम्)। खरोष्ट्रं (सर्वविषये) महिषीसमं दण्डनीयम् (वा दण्ड जानीयात्)।

Beng—যদি শস্য খাইয়া মহিষী, গাভী, অজা মেষী সেই ক্ষেত্রেই উপবিষ্ট থাকে, তবে পালকের দণ্ড দ্বিগুণ হইবে। বিবীতক্ষেত্রে (বা তৃণকাষ্ঠযুক্ত বিস্তৃত ভূমিতে) মহিষ্যাদি অনিষ্ট করিলে তবে ক্ষেত্রনাশকারিণী মহিষ্যাদির পালকের পূর্বোক্ত তুল্য দণ্ড হইবে। গর্দ্দভ এবং উষ্ট্র এই কাজ করিলে এই পালকদের (গোস্বামীদের বা), মহিষীপালকদের সম দম বা দণ্ড হইবে।

Eng. If she-buffalo etc sit at ease even after swallowing corns in field, then such cattle holders will be fined twice as much as said before (in sl. 159); such cattle doing detriment in vast vivita-kshtra of straws, fuels &c should also be similarly fined; ass and camels doing such will be fined as is enjoined in cases of she-buffalo. [See also Mita for further details].

Mita—अपराधातिशयेन क्वचिद्दण्डद्वैगुण्यमाह—यदि पशवः परक्षेत्रे शस्यं भक्षयित्वा तत्रैवानिवारिताः सेवते तदा यथोक्तात् दण्डात् द्विगुणो दमो दण्डो वेदितव्यः। सवत्सानां पुनः भक्षयित्वा उपविष्टानां यथोक्तदण्डात् चतुर्गुणं दण्डो वेदितव्यः। "वसतां द्विगुणः प्रोक्तः सवत्सानां चतुर्गुणः" इति वचनात्।

क्षेत्रान्तरे पश्वन्तरे वातिदेशमाह—"विवीतः"—प्रचुरतृणकाष्ठो रक्ष्यमाणः परिगृहीतो भूप्रदेशः। तदुपघाते अपि इतरक्षेत्रदण्डेन समं दण्डमेषां महिष्यादीनां विद्यात्। खरश्च उष्ट्रश्च खरोष्ट्रं तत् महिषीसमम्। महिषी यत्र यावत्सेन दण्डेन दण्ड्यते तत्र तावत्सेनैव दण्डेन खरोष्ट्रमपि प्रत्येकं दण्डनीयम्। शस्योपरोधकत्वेन खरोष्ट्रयोः प्रत्येकं महिषीतुल्यत्वात् दण्डस्य च अपराधानुसारित्वात् खरोष्ट्रम् इति समाहारो न विवक्षितः॥ १६०॥

## CHARCHA

1. यथोक्तात्—अधिकार्थे द्विगुणशब्दयोगे ५मी। See ante also. दम and दण्ड are almost synonymous here. दम्यते नियन्त्र्यते अनेन इति करणे घञ्=दमः fine &c. which is both preventive and educative mode to check others from faults or guilts.

2. खरोष्ट्रम्—खरश्च उष्ट्रश्च, वैभाषिकसमाहार by the rule "विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडव-पूर्वावराधरोत्तराणाम्"। Note the rule "गवाश्वप्रभृतीनि च" gives उष्ट्रखरम् only in द्वन्द्व। Vijnaneswara says that here समाहार is not intended for दम is both for खर and उष्ट्र separately. But hearing of महिषीसम दण्ड after the द्वन्द्व-word खरोष्ट्रम् may attach to both separately cp द्वन्द्वान्तेश्रूयमाणं पदं प्रत्येकमभिसम्बध्यते"। पदम् may refer to पद in the compound or just outside but syntactically connected; acc. to Vijnaneshwara खरसहितः उष्ट्रः खरोष्ट्रः should be the exposition here. He however expounds as खरश्च उष्ट्रश्च खरोष्ट्रम् with this reservation "प्रत्येकं महिषीसमत्वात् समाहारो न विवक्षितः"। This is rather round about. महिष्या समम्, ततत्। वा महिष्याः समम्, इतत्। It is obj. of विद्यात् वा जानीयात as in Mita. Note that both सस्य and शस्य are correct.

161. The fine for detroying शस्य of a क्षेत्र by cattle will be commensurate to destroyal.

यावच्छस्यं विनश्येत्तु तावत् स्यात् क्षेत्रिणःफलम्।
गोपस्ताड्यश्च गोमी तु पूर्वोक्तं दण्डमर्हति ॥ १६१ ॥

Prose—यावत् (यावत् परिमाणं) शस्यं विनश्येत्, (क्षेत्री तावत्



फलं शस्यं लभेत्) or तावत् फलं क्षेत्रिणः (क्षेत्रस्वामिनः) स्यात्। (अत्र व्यापारे) गोपः (गोचारकः) ताड्यः (प्रहारेण ताड्यः), गोमी (गोस्वामी) तु पूर्वोक्तं दण्डमर्हति।

Beng গোমহিষাদি দ্বারা যে ক্ষেত্রে যতপরিমাণ শস্য নষ্ট হইবে, ক্ষেত্রস্বামী ততপরিমাণ পাইবেন। গবাদিচারণকারীকে প্রহারদ্বারা তাড়ন করিবেন আর গোস্বামী উক্ত কথিত দণ্ড দিবেন। [তিনি তাড়িত হইবেন না]।

Eng—The owner of a field will get that much of paddy or corn etc, as is destroyed by the cattle; the cowherd of such cattle will be beaten; and the owner of such cows etc will have to pay the fine (by the king).

Mita—परशस्यविनाशे गोस्वामिनो दण्ड उक्तः इदानीं क्षेत्रस्वामिने फलमप्यसौ दापनीय इत्याह—शस्यग्रहणं क्षेत्रोपचयोपलक्षणार्थम्।" यस्मिन् क्षेत्रे यावत् पलालधान्यादिकं गवादिभि र्विनाशितं तावत् क्षेत्रफलं" ["एतावति क्षेत्रे एतावद्भवति" इति] सामन्तैः परिकल्पितं "तत्क्षेत्रस्वामिने गोमी दापनीयः। गोपस्तु ताड़णीय एव; न फलं दापनीयः। गोपस्य तु ताड़नं पूर्वोक्तधनदण्डसहितमेव पालदोषेण शस्यनाशे द्रष्टव्यम्। "या नष्टा पालदोषेण गौस्तु शस्यानि नाशयेत्। न तत्र गोमिनां दण्डः पालस्तं दण्डमर्हति" इति वचनात्॥ गोमी पुनः स्वापराधेन शस्यनाशे पूर्वोक्तं दण्डमर्हति, न ताड़नम्॥ [फलदानं सर्वत्र गोस्वामिन एव, तत्फलपुष्ट-महिष्यादिक्षीरेण उपभोगद्वारेण तत्क्षेत्रफलभागित्वात्। गवादिभक्षितावशिष्टं पलालादिकं गोमिनैव ग्रहीतव्यम्। मध्यस्थकल्पितमूल्यदानेन क्रीतप्रायत्वात्। अतएव नारदः—गोभिस्तु भक्षितं शस्यं यो नरः प्रतियाचते। सामन्तानुमतं देयं धान्यं यत्तत्रवापितम्। पलालं गोमिने देयं धान्यं वैकर्षकस्य तु" इति]॥ १६१॥

CHARCHA

1. यावत्, तावत्—Correlative terms. परिमाणार्थे वतुप्॥ The reading here is also "तावत् क्षेत्री फलं लभेत्"॥ In such cases गोप वा गोचारणकारी is to be ताड़्य, and गोमी वा गोमिन् is दण्डेन दण्डनीय। The punishment may be by kinds or coins. गोमिन् is holder of cattle ; the dervation is गो+मिनि ( गो and मिन् give गोमिन् by the rule "ज्योत्स्नातमिस्रा—"॥ So far गोस्वामीदण्ड is said, here both गोस्वामी and पालकगोप are mentioned. sl 164 &c will say दण्ड of गोप only

162 The above punishment will not apply to passing by fields etc where corn etc is casually eaten by cattle going to गोचारणभूमि।

पथि ग्रामविवीतान्ते क्षेत्रे दोषोन विद्यते।
अकामतः, कामचारे चौरवद्-दण्डमर्हति ॥ १६२ ॥

Prose—पथि ग्रामविवीतान्ते क्षेत्रे अकामतः भक्षिते ( सति ) दोषः ( गोपगोमिनोः दोषः ) न विद्यते। कामचारे ( कामतः चरणे ) चौरवद् दण्डम् अर्हति ( गोपगोमिनौ दण्डमर्हति )।

Beng পথে গ্রামের ধারে তৃণাদিজন্যরক্ষিত বিবীতে বা ভূভাগে বা নিকট ক্ষেত্রে, গোমহিষাদি, গোস্বামীর অনিচ্ছায় যদি শস্যাদিভক্ষণ করে, তবে দোষ হইবে না। কিন্তু এই শস্যভক্ষণ গোপদের স্বেচ্ছায় হইলে গোপালকও গোস্বামী চৌরবদ্ দণ্ডার্হ হইবে।

Eng. If cattle eat up unawares corn etc from wayside fields or from strawfirms at the outskirts of villages,



then neither the cowherd nor the cattle-holder or will ownerbe guilty for this ; but if the eating of corn etc be at the will or connivance of these, then they should be punished as in cases of thieves.

Mita.—क्षेत्रविशेषे अपवादमाह—पथि मार्गसमीपवर्त्तिनि, क्षेत्रे ग्रामविवीते समीपवर्त्तिनि च क्षेत्रे, अकामतः गाभिर्भक्षिते गोपगोमिनोर्द्वयोरपि अदोषः। दोषाभावप्रतिपादनञ्च दण्डाभावार्थम् विनष्टशस्य—मूल्यदान-प्रतिषेधार्थञ्च। "कामचारे" कामतश्चारणे "चौरवत्" चौरस्य यावशो दण्डस्ताड़नं दण्डमर्हति॥ [ एतच्च अनावृतक्षेत्रविषयम् ; तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि। न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम्॥ इति दण्डाभावस्य अनावृतक्षेत्रविषयत्वेन मनुना उक्तत्वात्। आवृते पुनः मार्गादिक्षेत्रेपि दोषोऽस्त्येव। वृतिकरणं च ( protection by covering ) तेनैव उक्तम्—"वृतिं च तत्र कुर्वीत यामुष्ट्रो नावलोकयेत्। छिद्रं निवारयेत सर्वं श्वशूकरमुखानुगम" ( Manu VIII. 239 )॥ १६२॥

CHARCHA

1. ग्रामविवीतान्ते—Mita seems to take it as adj to क्षेत्रे meaning ग्रामविवीतान्तस्थे क्षेत्रे in a क्षेत्र on the wayside lying near a ग्रामविवीत ( विवीत is तृणकाष्ठादिजन्य रक्षित भूखण्ड=firm of straws and the like ); वा—we may take पथि ग्रामविवीतान्ते i. e, in the vicinity of ग्रामविवीत, and पथि क्षेत्रे separately। अन्त is then प्रान्त outskirst ; ग्रामस्य यः विवीत, तस्य प्रान्ते वा स एव प्रान्तः ( प्रान्तस्थः ), तस्मिन् प्रान्तस्थे ग्रामविवीते॥ क्षेत्रे and पथि have अधिं ७मी॥

163. But this दण्ड will not apply in cases of uncontrollable bull or सद्यप्रसूता cow etc.

महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः ।
पालो येषां न तेमोच्या दैवराजपरिप्लुताः ॥ १६३ ॥

Prose—महोक्षोतसृष्टपशवः, सूतिकागन्तुकादयः च येषां च पालो ( पालकः ) न विद्यते, दैवराजपरिप्लुताः एते मोच्याः ( न दण्डनीया इत्यर्थः ) ।

Beng বিশাল উদ্দাম বৃষভ, বৃষোৎসর্গশ্রাদ্ধে দেবতোদ্দেশেত্যক্ত পশু, দশদিনের সদ্যপ্রসূতা গাভী, যূথভ্রষ্ট নবাগত পশুগণ, এবং যাদের পাল বা পালক নাই এমন দৈবপ্রপীড়িত ( অন্ধকাণপশু ) ও রাজপ্রপীড়িত পশুগণ শস্য বিনাশ করিলেও ( স্বামীপালক ) দণ্ড হইতে মোচনীয় ।

Eng. Huge bulls, oxen offered to gods or let loose after sradh ceremony, just—calved cows, straying-animals, and and those which have no protector and are divinely or royally distressed being blind or lame etc should be exempted from punishment even if they devour corns in other's fields.

Mita—पशुविशेषेपि दण्डाभावमाह—महांश्चसौ उक्षाच "महोक्षः" वृषः सेक्ता । उतसृष्टपशवः वृषोत्सर्गादि विधानेन देवतोद्देशेन वा त्यक्ताः । सूतिका=प्रसूता अनिर्दशाहा, आगन्तुकः स्वयूथात् परिभ्रष्टो देशान्तरादागतः । "एते मोच्या" परशस्यभक्षणेपि न दण्ड्याः । "येषां च पालो न विद्यते तेपि दैवराजपरिप्लुताः "दैवराजोपद्दताः शस्यविनाशकारिणः न दण्ड्याः । [ आदिशब्दात् हस्त्यस्वादयो गृह्यन्ते । ते च उशनसा उक्ता :—"अदन्ड्या हस्तिनो ह्यश्वाः प्रजापाला हि ते स्मृताः । अदन्ड्यौ काणकुब्जौ च ये शश्वत्-कृतलक्षणाः । अदन्ड्यागन्तुकी गौश्च सूतिका वाभिसारिणी ( यूथप्रच्युता ) । अदन्ड्याश्चोत्सवे गावः श्राद्धकाले तथैव च ।" इति । [ अत्र उतसृष्टपशूनाम्



अस्वामिकत्वेन दन्ड्यत्वासम्भवात् दृष्टान्तार्थमुपादानम् । यथोतसृष्टपशवो न दन्ड्या एवं महोक्षादय इति ] । ॥ १६३ ॥

CHARHCA

1. महोक्ष-उतसृष्टपशवः—उक्षन् is Bull ; here uncontrollable shouting bull ; महान् उक्षा इति महोक्षः a huge bull. कर्मधा—with irregular समासान्त अच् by the rule अचतुरविचतुर स्त्रीपुंस-निःश्रेयस ऋणयजुप-जातोक्ष-महोक्ष-वृद्धोक्ष-उपशुनगोष्ठश्वाः" । उतसृष्टाः पशवः—These are bulls offered to Gods or in Sradh ceremony महोक्षाश्च उतसृष्टपशवश्च, द्वन्द्व ॥ one is uncontrollable, another अस्वामिक ।

2. सूतिका etc—सूतिका is सद्यः प्रसूता गाभी not exceeding ten days ; So Mit. has "सूतिका प्रसूता अनिर्दशाहा" । आगन्तुक is a यूथभ्रष्ट देशान्तरागत पशु ( including हस्ती, अश्व even ) Such are pitied & should be spared.

3. पालः—पालयतीति कर्त्तरि अच्=पालः a protector, a cowherd. or पाल is a mass ( huge group ) ? But this meaning is unsuitable here for it is included by आगन्तु ।

4. मोच्याः=अवश्यं मोचयितुं योग्या इति मुच+ण्यत आवश्यके=मोच्याः । No कुत्व here by the rule "चजोः कु घिण्यति" । For the rule "ण्य आवश्यके" prohibits such कुत्व in आवश्यकार्थे as in शोच्य ( in sak ) ।

5. दैव etc —परिप्लुत is struck or oppressed ( उपहत ) । दैवश्च राजा च द्वन्द्व । ताभ्यां परिप्लुताः । ततत् । These are पालकहीन, also some of these being काण or कुब्ज by birth are दैवोपहत ; and some being driven & beaten by राजपुरूष are राजोपहत ।

**Such animals will also be spared if they devour corns; for these are also** अस्वामिक and are cited as illustrations. See also Mita. N. B.—The reading here is also "पालो येषां च ते मोच्याः"। It is better; construe=ते दैवराजोपप्लुताः चेत्, तदा मोच्याः पालोमोच्यः। For काण, खञ्ज, कुब्ज, आहत पशु invalid पशु can't walk on & should be spared like प्रसूता गौः even though पालयुक्त।

164. Punishment of cowherds if cattle are lost during their pasture-time

यथार्पितान् पशून् गोपः सायं प्रत्यर्पयेत्तथा।
प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः॥ १६४॥

Prose—गोपः यथा अर्पितान् पशून् सायं तथा स्वामिने प्रत्यर्पयेत्, प्रमादमृतनष्टान पशून् कृतवेतनः गोपः स्वामिने प्रदाप्यः ( राज्ञा दन्डरूपेण प्रदाप्यः )।

Beng গোস্বামী প্রাতঃকালে গোপের নিকট গণনা করিয়া যে প্রকারে গবাদিপশু চারণজন্য দিবেন, গোপ সায়ংকালে উহাদের সেভাবেই প্রত্যর্পণ করিবেন। গোপের প্রমাদ জন্য পশু মৃত বা নষ্ট হইলে, বেতনভুক্ গোপকে রাজা মৃতপশু বা নষ্টপশু বা —তার মূল্য দেওয়াইবেন।

Eng. The cowherd entrusted with cattle by owner in the morning should in the evening return back the cattle in tact; if some one of these are dead or lost through his negligence, then he being a paid one should be ordered to return back the same either in kind or in coin.

**Mita**—गोस्वामिन उक्तम्। इदानीं गोपं प्रत्युपदिश्यते—गोस्वामिना





प्रातःकाले यथा गणयित्वा समर्पिताः पशवस्तथैव सायंकाले गोपोगोस्वामिने पशून् विगणय्य प्रत्यर्पयेत। प्रमादेन स्वापराधेन मृतान् नष्टांश्च पशून् कृतवेतनः कल्पितवेतनः गोपः स्वामिने दाप्यः। [ वेतनकल्पना च नारदेनोक्ता—"गवां शतात् वत्सतरी धेनुः स्याद् द्विशतान्भृतिः। प्रतिवत्सरं गोपे सन्दोहश्चाष्टमेऽनि" इति॥ प्रमादनामश्च मनुना स्पष्टीकृतः—"नष्टं दग्धं च कृमिभिः श्वहतं विषमे मृतं। हीनं पुरुषकारेण प्रदद्यात् पाल एव तु" इति॥ प्रसह्य चौरैरपहृतं न दाप्यः। यथाह मनुः—"विक्रम्य तु हृतं चौरैः न पालो दातुमर्हति। यदि देशे च काले च स्वामिनः स्वस्य शंसति" इति॥ दैवमृतानां पुनः कर्णादि प्रदर्शनीयम्। "कर्णौ चर्म च वालांश्च वस्तिं स्नायुं च रोचनाम। पशुषु स्वामिनां दद्यान्मृतेषु अङ्गानि दर्शयन्" इति मनुस्मरणात॥ १६४॥

CHARCHA

1 यथा अर्पितान—Either uncompounded or compounded; take it compounded and proceed thus—अर्पितमनतिक्रम्य यथार्पितम्, अव्ययीभावः। ततः मत्वर्थीय अच्। Then it will qualify पशून्। यथार्पितान् पशून सायं तथैव प्रत्यर्पयेत इत्यर्थः।

2. प्रमाद etc—मृताश्च ते नष्टाश्च, कर्मधा। प्रमादेन मृतनष्टाः, ततत्। तान्। qual पशून्॥ compare—कृतवेतनः गोपः प्रमादनष्टमृतान् पशून राज्ञाप्रदाप्यः। See ante also.

165 The cattle-mover is also to be fined, if he is guitly in the matter

पालदोषविनाशे तु पाले दण्डो विधीयते।
अर्धत्रयोदशपणः स्वामिनो द्रव्यमेव च॥ १६५॥

Prose—पालदोषविनाशे तु पाले दण्डो विधीयते। अर्धत्रयोदशपणः तथा स्वामिनः द्रव्यमेव च ( दण्डं ) पालो दाप्यः।

Beng যদি পালকের দোষে পশুর বিনাশ হয়, তবে পালককেই দণ্ড দিতে হইবে। দণ্ডের পরিমাণ সার্দ্ধ ত্রয়োদশপণ হইবে এবং পশুস্বামীকে পশু বা তৎমূল্য দিতে হইবে।

Eng. If cattle dies due to the fault of the cowherd (वा पाल) then he is to be punished; he will pay off a fine of thirteen Pana-coins with half pana more of this, and will pay back to the owner of the cattle either in kind or coin

Mita—किञ्च पालदोषेणैव पशुविनाशे अर्धाधिकत्रयोदशपणं दण्डं पालो दाप्यः। स्वामिनश्च द्रव्यं विनष्टपशुमूल्यं मध्यस्थकल्पितम्। दण्डपरिमाणार्थः श्लोकः। अन्यत् पूर्वोक्तमेव ॥ १६५ ॥

CHARCHA

1 अर्ध etc—अर्धसहितः त्रयोदशपणः, शाकपार्थिवादि तत। Refers to दण्ड। This is Vijnaneshwara's view Here some construe—अर्धरहितः त्रयोदशपणः इति अर्धत्रयोदशपणः i e, सार्द्ध द्वादशपणः। एतत्तु भाष्ये मार्धद्विमात्रादिषु अर्धत्रिमात्रादि इति व्याख्यानदर्शनात। In both cases अर्द्ध goes to पण only and not to the whole त्रयोदशपण ॥ Vijnaneshwara understands द्रव्य as विनष्टमूल्य but we prefer to take it either as अनुरूप द्रव्य as cow or अनुरूप द्रव्यमुल्य as is enjoined in द्रव्य वा द्रव्यमूल्य in स्वस्त्ययन, in present days of arbritation.

**166-167.** गोचारणभूमि or Pastureland is being described here.



ग्राम्येच्छया गोप्रचारो भूमिराजवशेन वा।
द्विजस्तृणैधःपुष्पाणि सर्वतः स्ववदाहरेत् ॥ १६६ ॥
धनुःशतं परीणाहो ग्राम-क्षेत्रान्तरं भवेत्।
द्वे शते खर्वटस्य स्यान्नगरस्य चतुःशतम् ॥ १६७ ॥

Prose—ग्राम्येच्छया (ग्राम्यजनेच्छया) भूमिराजवशेन वा (भूमिपरिमाणापेक्षया, राजेच्छया वा) गोप्रचारः (गोचारणस्थानं) कर्त्तव्यः। द्विजस्तु सर्वदा तृणैधःपुष्पाणि स्ववत् आहरेत् (तत्रदोषः न स्यात्)। धनुःशतं (तत्परिमितं) ग्रामक्षेत्रान्तरं (ग्रामक्षेत्रव्यवधानं) (ग्रामक्षेत्रयोर्व्यवधानस्थमित्यर्थः) परीणाहः (विस्तारः गोचारणभूभाग इत्यर्थः) भवेत्। द्वे शते (द्वे धनुःशते) खर्वटस्य (कन्टकयुक्तग्रामस्य) परीणाहः स्यात्, नगरस्य (वहुजनसमाकीर्णस्य नगरस्य, क्षेत्रस्य च व्यवधानं) धनुः चतुःशतं स्यात्।

Beng গোচারণভূমি গ্রামাজনের ইচ্ছামত হইবে, ভূমির পরিমাণের স্বল্পতা ও বিশালতা বিবেচনা করিয়া ও হইতে পারে বা রাজার ইচ্ছামত ও হইতে পারে। ব্রাহ্মণ কিন্তু সর্বদা সর্বস্থান হইতেই তৃণ, জ্বালানি কাঠ, যজ্ঞকাষ্ঠ ও পূজার পুষ্প নিজের মনে করিয়া লইবে (তাতে দোষ হইবে না)। পশ্বাদির সুখস্বচ্ছন্দে বিচরণের জন্য গ্রাম এবং ক্ষেত্রের অন্তর্বর্তী ব্যবধানযুক্ত চারণস্থান হইবে একশত ধনুর পরিমাণ। এইস্থানে শস্যাদি উপ্ত হইবে না। খর্বট বা কণ্টকাকীর্ণ গ্রামের পক্ষে বিস্তৃত চারণ ভূভাগ হইবে দুইশত ধনুর পরিমাণ। আর বহুজনাকীর্ণ নগরের পক্ষে চারণভূমি হইবে চারিশত ধনুঃ পরিমাণ (আড়েপাশে)।

Eng. The Pasture land is to be determined by the villagers, or according to availability of smallness or

vastness of open land or according to royal order ; the Brahmans however are always entitled to procure straws, faggots and flowers from any place possible as if these are his own (no fault lies in this); the pasture land between a village and a tilled field should be as long and broad as hundred bows—(this चारणभूमि should evidently be untilled open land); the same in a throny village should be of the size of twohundred bows, the same in a populated city should be of the size of four hundred bows. [N. B—The गोचारणभूमि between a ग्राम and शस्ययुक्तक्षेत्र should be of 100 bow—length, size etc ]

Mita—गोप्रसङ्गात् गोप्रचारमाह—ग्राम्येच्छया ग्राम्यजनेच्छया, भूम्यल्पत्व-महत्वापेक्षया राजेच्छया वा गोप्रचारः कर्त्तव्यः। (गवादीनां प्रचारणार्थं कियानपि भूभागो अकृष्टः परिकल्पनीय इत्यर्थः)। द्विजस्तृणेन्धनाद्यभावे गवादिदेवतार्थं तृणकाष्ठ-कुसुमानि सर्वतः स्ववद् अनिवारितआहरेत्। फलानि तु अपरिवृतादेव। "गो अग्न्यर्थं तृणमेधांसि वीरुद्वनस्पतीनां च पुष्पाणि स्ववदाददीत फलानि चाप-रिवृतानाम्" इति गौतमस्मरणात। (एतश्च परिगृहीतविषयम्। अपरिगृहीते तु द्विजव्यतिरिक्तस्यापि परिग्रहादेव स्वत्वसिद्धेः। यथा तेनैवोक्तं—"स्वामी रिक्थक्रयविभागपरिग्रहाधिगमेषु" इति॥ यत् पुनरुक्तं—"तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम्। अनापृच्छन् हि गृह्णानो हस्तच्छेदनमर्हति" इति, तत् द्विजव्यतिरिक्तविषयम् अनापद्विषयं वा गवादिव्यतिरिक्त विषयं वा इति) ॥ १६६ ॥ इदमपरं गवादीनां स्थानामनसौकर्य्यार्थमुच्यते—ग्रामक्षेत्रयोरन्तरं धनुःशत-परिमितं परीणाहः (विस्तारः) स्यात्। सर्वतः अनुप्तशस्यं कार्य्यम्। "खर्वटस्य" प्रचुरकन्टकसन्तानस्य ग्रामस्य द्वे शतं परिणाहः। नगरस्य बहुजनसमाकीर्णस्य धनुषां चतुःशतपरिमितम् अन्तरं कार्य्यम् ॥ १६७ ॥ इति स्वामिपाल विवाद—॥



## CHARCHA

1. ग्राम्येच्छया—ग्रामेभव इति यत् प्रत्यय=ग्राम्य i e., ग्रामस्थजन। तस्य इच्छा। ३या। हेतौ ३या। similarly parse भूमिराजवशेन। भूमिश्च राजा च। द्वन्द्व। तयोर्वशेन।

2. तृणैधःपुष्पाणि—तृणानि च एधांसि च पुष्पाणि च तृणैधःपुष्पम्, समाहार by "जातिरप्राणिनाम्"। or say द्रव्यविवक्षया इतरेतर द्वन्द्व। both एध and एधम् means काष्ठ=यज्ञियकाष्ठ॥ the readings सर्वतः स्ववदाहरेत् and सर्वतः सर्वदाहरेत also सर्वतः समुपाहरेत are seen; all these give freedom to collect—no fault arises there in. But vijnaneswara and we too fallow स्ववत here for गौतमस्मृति has "स्ववदाददीत"॥ obj of आहरेत।

3. परीणाहः—परि+णह+घञ्=परीणाहः i e, विस्तार or measure-ment in both length & breadth "उपसर्गस्य घञि अमनुष्येबहुलम्" gives both परीणाह and परिणाह when not referring to a मनुष्य। Nom. भवेत्।

4. ग्रामक्षेत्रान्तरम्—ग्रामश्च क्षेत्रश्च, द्वन्द्व। तयोरन्तरम। अन्तर is here व्यवधान i e, the intermediate space and so distance between ग्राम and क्षेत्र। This open space is the गोचारणभूमि and this should the धनुःशतम्। धनुःशतम् ग्रामक्षेत्रान्तरम् भवेत्। This word is in apposition with परीणाहः। compare the dictum here "विधेयोद्देश्ययोः लिङ्गवचनेषु अनियमः"॥ The गोचारणभूमि that is to lie between a ग्राम and a शस्ययुक्तक्षेत्र should be of this size. खर्वट is a thorny village. see mita; गोचारणभूमि-परिणाह in खर्वट is two hundred bow-length etc.

## अथास्वामिविक्रयप्रकरणम् ।

( The section on selling of unowned articles )

168. A wrongly purchaser is as good as a thief.

स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते ।
हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः ॥ १६८ ॥

Prose—अन्यविक्रीतं स्वं ( द्रव्यं ) स्वामी लभेत । अप्रकाशिते ( गोपिते ) क्रये क्रेतुर्दोषःस्यात । हीनात क्रीते, रहःक्रीते, हीनमूल्ये च क्रीते, वेलाहीने ( रात्र्यादौ ) क्रीते, क्रेता तस्करः स्यात ।

Beng. ধনস্বামী যদি দেখেন যে অন্য কেহ তাঁর ধন বিক্রয় করিতেছে, তবে তাহা ( নিজেই ) গ্রহণ করিবেন। গোপিত দ্রব্যের ক্রয়ে ক্রেতাই দোষী ( ও দণ্ডযোগ্য )। দ্রব্যহীনের নিকট হইতে ক্রীত, গোপনে ক্রীত, কমদামে ক্রীত এবং রাত্র্যাদি অসময়ে ক্রীত হইলে এই ধনের ক্রেতা তস্কর্ হন ( ও তদ্বৎ দণ্ডার্হ )।

Eng. If one notices his own object being sold, then he will take it over himself ; in case of underhand secret purchase the purchaser is guilty ; if one purchases from a penniless one, purchases secretly, purchases something in a very low price, or purchases a thing at night (at a forbidden time ), then the purchaser is as good as a thief ( and he is to be so punished )

Mita—सम्प्रति अस्वामिविक्रयाख्यं व्यवहारपदमुपक्रमते । तस्य च लक्षणं नारदेनोक्तं—"निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वाऽपहृत्य वा । विक्रीयते असमक्षं यत्सज्ञेयोऽस्वामिकविक्रयः" इति [ If an entrusted object, or lost



object, or stolen object is being sold secretly, then it is a case of अस्वामिविक्रय ] । तत्किमित्याह—"स्वम्" आत्मसम्बन्धि द्रव्यम् "अन्यविक्रीतम्" अस्वामिविक्रीतं यदि पश्यति, तदा लभेत गृह्णीयात् । अस्वामिविक्रयस्य स्वत्वहेतुत्वाभावात् । [ विक्रीतग्रहणं दत्ताहितयोरुपलक्षणम् । अस्वामिविक्रीतत्वेन तुल्यत्वात् । अत एवोक्तम्—"अस्वामिविक्रयं दानमाधिं च विनिवर्त्तयेत्" इति ] । क्रेतु पुनः "अप्रकाशिते" गोपिते क्रये दोषो भवति । तथा "हीनात्" तत्तद्रव्यागमोपायहीनात्, "रहसि" एकान्ते, सम्भाव्यद्रव्यादपि, हीनमूल्येन अल्पतरेण मूल्येन क्रये, वेलाहीने वेलया हीनो वेलाहीनः, क्रयो रात्र्यादौ कृतस्तत्र च क्रेता तस्करो भवति । तस्करवद् दण्डभाग् भवतीत्यर्थः । [ यथोक्तम्—"द्रव्यमस्वामिविक्रीतं प्राप्य स्वामी तदवाप्नुयात । प्रकाशं क्रयतः शुद्धिः केतुस्तेयं रहःक्रयात" । इति ] ॥ १६८ ॥

### CHARCHA

1. अप्रकाशिते—Refers to क्रये। in such क्रय, दोष goes to क्रेता ॥ a क्रेता is as good as a तस्कर if he purchases from a resourceless one, secretly, at a nominal price or at dead night etc which is a forbidden time for transaction.

169. Seller of such unowned articles should be handed over to the king or police —( This is purchaser's duty )

नष्टापहृतमासाद्य हर्त्तारं ग्राहयेन्नरम् ।
देशकालातिपत्तौ च गृहीत्वा स्वयमर्पयेत् ॥ १६९ ॥

Prose—नष्टम् अपहृतं वा द्रव्यमासाद्य क्रेता हर्त्तारं ( विक्रयार्थमागत हर्त्तारं ) नरं ग्राहयेत ( राजदण्डप्राप्त्यर्थम् आत्मविशुद्ध्यर्थं च ग्राहयेत ) । देशकालातिपत्तौ ( देशकालातिक्रमे सति अर्थात् विज्ञानात् पूर्वमेव विक्रेता पलायितश्चेत् ) स्वयमेव गृहीत्वा समर्पयेत् ( द्रव्यस्वामिने दद्यात् ) । (See mita- also for another version ).

Beng. ক্রেতা হারান বা চোরিত দ্রব্য পাইয়া, আত্মশোধনার্থ বিক্রয়ার্থ আগত ধনাপহরণকারীকে ধরাইয়া দিবেন। আর যদি কালাতিক্রম বা দেশাতিক্রম হেতু অর্থাৎ জানিয়া নিবেদন করিবার পূর্বেই যদি বিক্রেতা অপহরণকারী পলাইয়া অন্যত্র গিয়া থাকে, তবে নিজেই নষ্ট বা হৃতদ্রব্য দ্রব্যস্বামীকে দিবে।

Eng.—A purchaser having got another one's lost or stolen article, should cause the seller ( who is a stealer ) to be handed over ( for punishment ) to the police ; if it is known at a late period when the seller-stealer is gone off, then he should himself hand over the article to the owner

Mita—स्वाम्यभियुक्तेन क्रेता किंकर्त्तव्यमित्याह—नष्टमपहृतं वा अन्यदीयं क्रयादिना प्राप्य हर्त्तारं विक्रेतारं "नरं ग्राहयेत्" चौरोद्धरणकादिभिः आत्मविशुद्ध्यर्थं राजदण्डप्राप्त्यर्थञ्च। अथ अविदितदेशान्तरं गतः कालान्तरेवा विपन्नस्तदा मूलसमाहरणाशक्तेः विक्रेतारमदर्शयित्वैव स्वयमेव तद्धनं नाष्टिकस्य समर्पयेत। तावता एवासौ शुद्धो भवति— इति श्रीकराचार्येण व्याख्यातम्—तदिदमनुपपन्नम् ; "विक्रेतुर्दर्शनाच्छुद्धिः" ( sl. 170 ) इत्यनेन पौनरुक्त्यप्रसङ्गात्। अतः अन्यथा व्याख्यायते— नष्टापहृतमिति। नाष्टिकं प्रति अयमुपदेशः—नष्टमपहृतं वा आत्मीयद्रव्यमासाद्य क्रेतृहस्तस्थंज्ञात्वा तं हर्त्तारं क्रेतारं स्थानपालादिभिर्ग्राहयेत। "देशकालातिपत्तौ" देशकालातिक्रमे स्थानपालाद्यसंनिधाने तद्विज्ञापनकालात प्रांक् पलायनाशङ्कायां स्वयमेगृहीत्वा तेभ्यः समर्पयेत ॥ १६९ ॥

## CHARCHA

1. ग्राहयेत्—ग्र+णिच्+लिङयात्॥ हर्त्ता ग्रह्णाति—in णिच् becomes सः हर्त्तारं ग्राहयति ( बुद्ध्यर्थत्वात् अणिकर्त्तुः कर्मसंज्ञा )। similarly in स स्वामिने धनं ददाति becomes in णिच्-राजा तं स्वामिने धनं दापयति etc.



2. देशकालातिपत्तौ=भावे ७मी। देशातिक्रमे कालातिक्रमे च सति विक्रेतुः कालोत्तोणेन स्थानान्तरगमने मरणेन च एवं कर्त्तव्यम्॥ स्वयमर्पणे दोषः न स्यात्। The two lines taken together here will thus be no repetition of what will be said in the next sloka.

170 The purchaser of stolen goods being arrested, he should find out the seller

विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम्।
क्रेतामूल्यमवाप्नोति तस्माद् यस्तस्य विक्रयी ॥ १७० ॥

Prose—विक्रेतुर्दर्शनात ( प्रदर्शनात ) क्रेतुःशुद्धिः ( दोषमुक्तिः ) स्यात्। यः तस्य द्रव्यस्य विक्रयी, तस्मात् स्वामी द्रव्यं अवाप्नोति, नृपः दमं ( दण्डरूपं धनं ) आप्नोति क्रेतामूल्यमवाप्नोति।

Beng. হৃতদ্রব্যের ক্রেতাকে ধরিলে, সে বিক্রেতাকে দেখাইয়া ও ধরাইয়া দিতে পারিলে দোষমুক্ত হইবে। একপক্ষেত্রে দ্রব্যস্বামী বিক্রেতার নিকট হইতে দ্রব্য পাইবে, রাজা অপরাধীকে দণ্ড দিয়া দণ্ডধন ( দম ) পাইবেন, আর ক্রেতা ও অনুরূপ মূল্য বিক্রেতার নিকট হইতে পাইবে।

Eng.—If a purchaser of stolen goods is accused then he will be absolved of guilt by showing the stealer-seller ; in such case then from the stealer-seller, the owner with get the article, the king will get the fine levied, and the purchaser will get the money back

Mita—ग्राहिते हर्त्तरि किं कर्त्तव्यमत आह—यद्यसौ गृहीतः क्रेता—"न मया इदमपहृतम्, अन्यसकाशात् क्रीतम्" इति वक्ति, तदातस्य क्रेतुः, विक्रेतुदर्शनमात्रेण शुद्धिर्भवति। न पुनरसौ अभियोज्यः, किन्तु तत्प्रदर्शितेन

विक्रेत्रा सह नाष्टिकस्य विवादः। यथाऽवृहस्पति—"मूले समाहृते क्रेता नाभियोज्यः कथञ्चन। मूलेन सह वादस्तु नाष्टिकस्य विधीयते" ॥ तस्मिन् विवादे यद्यस्वामिविक्रयनिश्चयो भवति, तदा तस्य नष्टापहृतस्स गवादिद्रव्यस्य यो विक्रयी, विक्रेता, तस्य सकाशात् स्वामीनाष्टिकः स्वीयं द्रव्यमवाप्नोति। नृपश्चापराधानुरूपं दमं दण्डं, क्रेता च मूल्यमवाप्नोति तथामौ देशान्तरगतः तदा योजनसंख्यया आनयनार्थं कालो देयः—"प्रकाशं वा क्रयं कुर्यात् मूलं वापि समर्पयेत्। मूलानयनकालश्च देयस्तत्राध्वसंरूपया" इति स्मरणात् ॥ [ अथाविज्ञातदेशतया मूलमाहर्त्तुं न शक्नोति, तदा क्रयं शोधयित्वा एव शुद्धो भवति। "असमाहार्य्यमूलस्तु स्वयमेव विशोधयेत" इति वचनात। "यदापुनः साक्ष्यादिभिर्दिव्येन वा क्रयं न शोधयति मूलं च न प्रदर्शयति। तदा स एव दण्डभाग् भवति" इति। "अनुपस्थापयन् मूलं क्रयंवापिअविशोधयन्। यथा अभियोगं धनिने धनं दाप्यः दमं च सः" इति मनुस्मरणात ॥ १७० ॥

CHARCHA

1 तस्मात—from him अपादाने ५मी। दम is punishment of fine ; see ante

171 Adequate proof of ownership is required in नष्टद्रव्य, otherwise a part will go to the king

आगमेनोपभोगेन नष्टं भाव्यमतोन्यथा।
पञ्चवन्धो दमस्तस्य राज्ञे तेनाविभाविते ॥ १७१ ॥

Prose—नष्ट द्रव्यम् आगमेन ( रिक्थ-क्रयादिना ) उपभोगेन च ( स्वामिना ) भाव्यम् ( प्रमाणीकर्त्तव्यम् वा ) [ स्वामिना साधनीयम् ]। अतः अन्यथा तेन स्वामिना अविभाविते ( अप्रमाणिते सति ) तस्य ( नष्टद्रव्यस्य ) पञ्चवन्धः ( पञ्चमः भागः ) दमः राज्ञे देयः ( नाष्टिकेन राज्ञे देयः इत्यर्थः )।

Beng. "নষ্টদ্রব্য ক্রয়াদিদ্বারা বা উত্তরাধিকারিসূত্রে পাইয়া



আমি ভোগ কবিয়াছি" ধনস্বামী এরূপ প্রমাণ দিবেন। যদি প্রমাণ দিতে না পাবেন তবে ধনস্বামী ( বা নাষ্টিক ) ঐ নষ্টদ্রব্যের বা তার মূল্যেব একপঞ্চমাংশ রাজাকে দম বা দণ্ডস্বরূপে দিতে হইবে।

Eng In case of lost or stolen article, the owner is to prove its acquisition and enjoyment ; otherwise, that is in case of failure to prove ownership, the owner is to pay one-fifth value by way of fine to the king

Mita—"स्वंलभेतान्यविक्रीतम्" इत्युक्तम्, तल्लिप्सुना किंकर्त्तव्यमित्यत आह—"आगमेन" रिकथ-क्रयादिना "उपभोगेन"—'मदीयमिदं द्रव्यं तच्चैवं नष्टमपहृतं वा' इत्यपि "भाव्यम्" साधनीयं तत्स्वामिना। "अतोन्यथा तेन स्वामिना अविभाविते" अप्रमाणिते "पञ्चवन्धः" नष्टद्रव्यस्य पञ्चमांशो दमो नाष्टिकेन राज्ञे देयः"। अत्रचायं क्रमः—पूर्वस्वामी नष्टमात्मीयं साधयेत्। ततः क्रेता चौर्य्यपरिहारार्थं मूल्यलाभाय च विक्रेतारमानयेत्, अथानेतुं न शक्नोति तदात्मदोषपरिहाराय क्रयं साधयित्वा द्रव्यं नाष्टिकस्य समर्पयेत् इति ॥ १७१ ॥

CHARCHA

1. आगमेन—आगम is प्राप्ति by रिक्थ i. e, inheritance वा purchase etc. करणे ३या ॥ उपभोगेन also has करणे ३या ॥

2. भाव्यम्—अवश्यं भवितुं योग्यम् इति भू+ण्यत्=भाव्यम् to be established or proved Nom or अनुक्तकर्त्ता is स्वामिना। here भू takes ण्यत् and not यत् by the rule "ओरावश्यके"। or णिच् यत्। similarly अविभाविते (from वि+भू+णिच क्त कर्मणि )=अप्रमाणिते। द्रव्ये अविभाविते सति।

3. पञ्चबन्धः—बन्ध is भाग here. पञ्च=means here पञ्चम by the dictum "वृत्तिविषये संख्याशब्दस्य क्वचित् पूरणार्थत्वमिष्यते" as in

त्रिभाग, षट्भाग ( "तपःषड्भागमक्षय्यं च ददत्यारण्यकाहिनः" sak ) and ante also. पञ्च ( पञ्चमः ) बन्धः भागः, कर्मधा ।

172. The owner taking his द्रव्य from a stealer is also to be punished, if he does not inform this to the king.

हृतं नष्टं यो द्रव्यं परहस्तादवाप्नुयात् ।
अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं पणान् ॥ १७२ ॥

Prose—यः हृतं वा नष्टं द्रव्यं नृपे ( नृपाय वा नृपस्य ) अनिवेद्य परहस्तात् अवाप्नुयात् ( गृह्णीयात् ) सः षण्णवति पणान् दण्ड्यः ( राज्ञा दण्ड्यः ) ।

Beng. নিজের হৃত বা নষ্ট দ্রব্য, রাজাকে না নিবেদন করিয়া যদি কেহ পরহস্ত হইতে গ্রহণ করে ও চোরকে ছাড়িয়া দেয় তবে এই অন্যায় জন্য রাজা তাকে ছিয়ানব্বই তাম্র মুদ্রা দণ্ড দিবেন ।

Eng.—If one takes his own article lost or stolen from another stealer's hand without previously informing it to the king, and let the thief go, then he is also to be fined ninety six copper coins by the king.

Mita.—तस्करस्य प्रच्छादक प्रत्याह—हृतं नष्टं वा चौरादिहस्तं द्रव्यं— "अनेनमदीयं द्रव्यमपहृतम्" इति नृपस्य अनिवेद्यैव दर्पादिना यो गृह्णाति, असौ षण्णवतिं पणान् दण्डनीयः । तस्य तस्करप्रच्छादकत्वेन दुष्टत्वात् ॥

CHARCHA

1 नृपे—'विवक्षावशात् कारकाणि" इति ४र्थी वा षष्ठीस्थाने ७मी । See pr.

2. पणान्—copper coins वा क्षुद्रमुद्रा । The संख्याशब्द from विंशति &c is singular always ; so नवति is singular here in षण्णवतिम् । It is in app. with पणान् । दण्ड is द्विकर्मक । राजा तं पणं



दण्डयति in voice change=राज्ञा सः पणं ( पणान् वा ) दण्ड्यः । दण्ड is दुहादि so its अप्रधानकर्म—सः is voiced

173 Demand of lost article after the expiry of full one year vitiates ownership

शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।
अर्वाक्संवत्सरात् स्वामी हरेत परतो नृपः ॥ १७३ ॥

Prose—यदा शौल्किकैः ( शुल्काधिकारिभिः पुरुषैः ) स्थानपालैः ( स्थानरक्षकैः ) वा, आहृतं नष्टं वा अपहृतं द्रव्यं संवत्सरात् अर्वाक् ( पूर्वं ) प्राप्तं, तदा स्वामी हरेत ( गृह्णीयात ), परतः प्राप्तं तत् द्रव्यं नृपः हरेत ( गृह्णीयात ) ।

Beng যদি করগ্রাহী রাজপুরুষ বা স্থানরক্ষক কোটাল প্রভৃতি কোন নষ্ট বা অপহৃত দ্রব্য পায় এবং রাজভাণ্ডারে জমা দেয়, তবে তাহা এক বৎসরের পূর্বে লইলে দ্রব্যস্বামীই তাহা লইবেন, পরে উহা রাজার হইবে ।

Eng.—If custom officers or Police or guards get some lost or stolen article and produces the same to the king's treasury, then demand of it before one year will expire the owner is to take it , if it be after the expiry of a year then it will go to the king

Mita—राजपुरुषानीतं प्रत्याह—यदि तु शुल्काधिकारिभिः, स्थानरक्षिभिर्वा नष्टमपहृतं द्रव्यं राजपार्श्वं प्रत्याणीतं, तदा संवत्सरात् अर्वाक् प्राप्तश्चेत् नाष्टिकः तद्द्रव्यमवाप्नुयात , उर्द्ध्वं पुनःसंवत्सरात् राजा गृह्णीयात् । स्वपुरुषाणीतं च द्रव्यं जनसमूहेषु उद्घोष्य यावत् संवत्सरं राज्ञा रक्षणीयाम् । [ यथाहगौतमः— "प्रनष्टस्वामिकमधिगम्य राजे प्रब्रूयुः । विख्याप्य संवत्सरं राजा रक्ष्यम्" । अत् पुनर्मनुना अवध्यन्तरमुक्तम्—"प्रनष्टस्वामिकं द्रव्यं राजा त्र्यब्दं निधापयेत् ।

अर्वाक् त्र्यब्दात् हरेत् स्वामी परतो नृपतिर्हरेत्" इति, तत श्रुतवृत्तसम्पन्नब्राह्मण विषयम ॥ रक्षणनिमित्तषड्भागादिग्रहणं च तेनैवोक्तम्—"आददीताथ षड्भागं प्रनष्टाधिगमात् नृपः। दशमं द्वादशंवापि सतांधर्ममनुस्मरन्" ॥ तृतीय द्वितीय-प्रथमसंवतसरेषु यथाक्रमं षष्ठादयो भागा वेदितव्याः। प्रपञ्चितं चैतत पुरस्तात् ॥ १७३ ॥

CHARCHA

1 शौल्किकैः—शुल्क is revenue. शुल्के नियुक्ता इति शौल्किकाः with ठक् by "तत्र नियुक्तः" ॥ स्थानपालैः refers to police guar अनुक्ते कर्त्तरि ३या—the क्रिया is आहृतम।

2 संवतसरात—इति अन्य‌ुत्तरपद—अर्वाकशब्दयोगे ५मी।

174. King's dues from owners in such cases of differ articles.

पणानेकशफे दद्याच्चतुरः पञ्च मानुषे।
महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके ॥ १७४ ॥

Prose—एकशफे स्वामी राज्ञे ( रक्षणनिमित्तं ) चतुरः पणान् दद्यात्। मानुषे ( द्रव्ये ) पञ्च पणान राज्ञे दद्यात, महिषोष्ट्रगवाम प्रत्येकं द्वौ द्वौ पणौ राज्ञे दद्यात, अजाविके प्रत्येकं पादं पादं दद्यात।

Beng—প্রনষ্টের রক্ষণাবেক্ষণ জন্য স্বামী একশফে অশ্বাদি দ্রব্যে রাজাকে চারিপণ শুল্ক দিবেন, মানুষদ্রব্য রক্ষণের জন্য পঞ্চপণ শুল্ক মহিষ, উষ্ট্র ও গো রক্ষণজন্য দুই দুইপণ, এবং ছাগ ও মেষরক্ষণের জন্য প্রত্যেকের জন্য এক একপণ দিবে।

Eng,—For protection and maintenance, the owner is to give by way of revenue four panas to the king in case of lost whole-hoofed horse etc, five panas in case of lost men, two panas in cases of each of lost buffalo, camel and cow, and one pana each in cases of lost goat and sheep.



Mita—मनूक्तषड्भागादिग्रहणस्य द्रव्यविशेषे अपवादमाह—"एकशफे" अश्वादौ प्रनष्टाधिगते तत्स्वामी राज्ञे रक्षणनिमित्तं चतुरः पणान् दद्यात्। "मानुषे" मनुष्यजातीये द्रव्ये पञ्चपणान्, महिषोष्ट्रगवाम् रक्षणनिमित्तं प्रत्येकं पादं पादम्। "दद्यात्" इति सर्वत्र अनुषज्यते। [ अजाविकमिति समासनिर्देशेपि "पादं पादम्" इति वीप्साबलात् प्रत्येकं सम्बन्धोवगम्यते ॥ १७४ ॥ इत्यस्वामि-विक्रयप्रकरणम्।

CHARCHA

1. महिष &c—महिषाश्च उष्ट्राश्च गावश्च इति महिषोष्ट्रगावः। "विभाषा-वृक्षमृगतृणधान्य—"इति समाहारस्य वैकल्पिकत्वात। शेषे षष्ठी। for द्वन्द्व निपात in अजाविकम् by "गवाश्वप्रभृतीनि च" see ante पादम् पादम् here refers to one unit or one in case of अज and अवि।

अथ दत्ताप्रदानिक प्रकरणम्।

[ ( The section on resumption of what is दत्त or given : )

This includes दत्तानपकर्मन् of Manu : ]

Mitakshara's Introduction here

Mita—अधुना विहिताविहितमार्गद्वयाश्रयतया दत्तानपकर्म दत्ताप्रदानिकम् इति च लब्धाभिधानद्वयं दानाख्यं व्यवहारपदमभिधीयते [ due to legal and illegal modes or procedures, two titles of व्यवहारपद in Hindu Law named दत्तानपकर्म non-denial or non-withdrawal of what is given, and दत्ताप्रदानिकम् resumption or demand

back ( अप्रदान or अप्रदानिक ) of what is given are being stated here. ]

तत्स्वरूपञ्चनारदेनोक्तम्—"दत्त्वाद्रव्यमसम्यग्यः पुनरादातुमिच्छति । दत्ताप्रादानिकं नाम व्यवहारपदं हितत्" इति ॥ असम्यग् अविहितमार्गाश्रयेण द्रव्यं दत्त्वा पुनरादातुमिच्छति यस्मिन् विवादपदे तद् दत्ताप्रादानिम्—दत्तस्य अप्रदानं पुनर्हरणं यस्मिन् दानाख्ये तद् दत्ताप्रदानिकम्नाम व्यवहारपदम् । विहितमार्गाश्रयत्वेण तत्प्रतिपक्षभूतं तदेव व्यवहारपदं दत्तानपकर्म इत्यर्थादुक्तं भवति । [ in short दान in an unjust or illegal way & its taking back is दत्ताप्रदानिकम् ( दत्तस्य अप्रदानम् । तत् अस्ति अस्मिन् इति मत्वर्थीय ठन्=दत्ताप्रदानिकम् ) ; and दान rather in a right way and its non-withdrawal is दत्तानपकर्म ]

दत्तस्य अनपकर्म अपुनारादानाख्य यत्र दानाख्ये विवादपदे तद् दत्तानपकर्म । तच्च देयादेयादिभेदेन चतुर्विधम् । यथाह नारदः—"अथ देयमदेयं च दत्तं वा अदत्तमेव च । व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः"—इति । तत्र देयम् इति अनिषिद्धदानक्रियायोग्यम् उच्यते । अदेयमस्वतया निषिद्धतया च दानानर्हम् । यत पुनः प्रकृतिस्थेन दत्तम् अव्यावर्त्तणीयं तद् दत्त मुच्यते । अदत्तं तु यत्प्रत्याहरणीयं तत् कथ्यते ।

[ Again दत्तानपकर्म being of 4 varieties will include दत्ताप्रदानिक in two of its items at least अपकर्म is denial here ; न अपकर्म i. e., non-denial or non-withdrawal दत्तस्य अनपकर्म=दत्तानपकर्म non-denial or non-withdrawal of what is दत्त । It is in a sense प्रतिपक्षभूत ( opposite ) of दत्ताप्रादानिक ( दत्तस्य अप्रदानम् पुनराहरणम् due to अविहितदानम् etc. ). अदेयदान वा अदत्तदान of दत्तानपकर्म of Manu will include दत्ताप्रदानिक of Yajnavalkya or Narada here. So ultimately the two will tally together ]





175. दान should not be of wife or sons, nor by depriving dependants etc.

स्वं कुटुम्बाविरोधेन देयम् दारसुतादृते ।
नान्वये सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम् ॥ १७५ ॥

Prose—दारसुतातृते स्वं ( द्रव्यं ) कुटुम्बाविरोधेन ( कुटुम्बभरणम् अनुपरुध्य ) देयम् । अन्वये ( पुत्रपौत्रलक्षणे वंशजाते ) सति सर्वस्वं न दद्यात् ; यच्च अन्यस्मै प्रतिश्रुतं ( सुवर्णादिकं द्रव्यं ) तदपि अपराय ( अप्रतिश्रुताय कस्मैचित् ) न देयम् ।

Beng যাহা নিজস্ব দ্রব্য, বা সম্পত্তি তাহা কুটুম্বভরণাবশিষ্ট থাকিলে দিবে ( কুটুম্বকে কষ্ট দিবে না ) ; স্ত্রী ও পুত্র নিজস্ব হইলেও দিবে না। পুত্রপৌত্রাদি বংশসন্তান থাকিতে সর্বস্ব দিবে না। একজনকে হিরণ্যাদি দ্রব্যের প্রতিশ্রুতি দিয়া, অন্যকে তাহা দিবে না।

Eng.—One should give his article ( goods or property ) by not distressing his defendants ; wife or issues ( though one's own ) should never be given ; son or grandson living, one must not give away all his goods ; similarly gold etc. promised to one should not be given to another.

Mita—तदेतत् ( प्रकरणं ) संक्षेपतः निरूपयितुमाह—"स्वम्" आत्मीयं द्रव्यं "कुटुम्बाविरोधेन" कुटुम्बानुपरोधेन, कुटुम्बभरणावशिष्टमिति यावत्तद् दद्यात् । कुटुम्बभरणस्यावश्यकत्वात् । यथाऽमनुः—"वृद्धौ च मातापितरौ साध्वीभार्य्या सुतः शिशुः । अप्यकार्य्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत्" इति ॥ [ "कुटुम्बाविरोधेन" इत्यनेन अदेयमेकविधं दर्शयति । "स्वं दद्यात्" इत्यनेन अस्वभूतानाम् अन्वाहितयाचितक-आधि-साधारणनिक्षेपाणां पञ्चानामदेयत्वं व्यतिरेकतः दर्शितम् ॥ यत् पुनर्नारदेन अष्टविधत्वमदेयानामुक्तम्—"अन्वाहितं ( आपाततः

पंरहस्तेस्थापितं ) याचितकम् आधिः साधारणं च यत्। निक्षेपः पुत्रदारञ्च सर्वस्वं चान्वये सति। आपत्स्वपि हि कष्टासु वर्त्तमानेन देहिना। अदेयान्याहुराचार्य्या यच्चान्यस्मै प्रतिश्रुतम्" इति—एतत् अदेयत्वमात्राभिप्रायेण, न पुनः स्वत्वाभावाभिप्रायेण। पुत्रदारसर्वस्वप्रतिश्रुतेपुसतृस्य सद्भावात्। अन्वाहितादीनां स्वरूपं च प्रागेव प्रपञ्चितम् ] "स्वं दद्यात्" इत्यनेन दारासुतादेरपि स्वत्वाविशेषेण देयत्वप्रसङ्गे प्रतिषेधमाह—"दारसुतात् ऋते दारसुतव्यतिरिक्तं स्वं दद्यात्, न दारसुतमित्यर्थः। तथा "पुत्रपौत्राद्यन्वय" वंशे विद्यमाने सति सर्वं धनं न दद्यात्। "पुत्रानुत्पाद्य संस्कृत्य वृत्तिंचैषां प्रकल्पयेत्" इतिस्मरणात्। तथा हिरणादिकमन्यस्मै प्रतिश्रुतम् अन्यस्मै न देयम् ॥ १७५ ॥

## CHARCHA

1. स्वम्—here स्व means द्रव्य वा सम्पत्ति। "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने"। again स्व is not a सर्वनाम when meaning ज्ञाति वा धन by the rule "स्वमज्ञातिधनाख्यायाम्"।

2. कुटुम्ब etc —कुटुम्बानाम् अविरोधः (अनुपरोधः)। तेन। करणे ३या।

3. दारासुतात्—दार meaning wife is masc. plural. दाराश्च सुतानि च इति दारासुतम् by समाहार by the rule "अध्ययनतोऽविप्रकृष्टानाम्", for these are used together; so weget योगक्षेमम्, संज्ञापरिभाषम्, इष्टापूर्त्तम् etc., ऋते शब्द योगे ५मी। Or द्वन्द्व by "सर्वो द्वन्द्वो विभाषा एकवद् भवति" as वधूवरम् (Sak)।

4. अन्यस्मै—सम्प्रदाने ४र्थी by the rule "प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता"।

**176.** Acceptance of स्थावरसम्पत्ति etc. should be an open one; one must not take back aftergiving देय प्रतिश्रुत द्रव्य।



प्रतिग्रहः प्रकाशः स्यात् स्थावरस्य विशेषतः।
देयं प्रतिश्रुतं चैव दत्त्वा नपाहरेत् पुनः ॥ १७६ ॥

Mita—प्रतिग्रहः (दानग्रहणं) प्रकाशः (सर्वसमक्षं) स्यात्, विशेषतः स्थावरस्य। देयं प्रतिश्रुतं च स्वं (द्रव्यं) दत्त्वा न पुनः अपहरेत् ॥

Beng. প্রতিগ্রহ (দানগ্রহণ) প্রকাশ্যভাবেই হওয়া উচিত, বিশেষতঃ স্থাবর সম্পত্তির দান ও প্রতিগ্রহণ প্রকাশ্যভাবে হইবে। যাহা দেয়দ্রব্য এবং যাহা দানের জন্য কাহাকেও প্রতিশ্রুতি দেওয়া হইয়াছে, তাহা দিয়া আবার ফিরাইয়া লইবে না।

Eng —Gift and its acceptance or taking of gift should be an open one i e should be before all. specially gift & acceptance of immovabble property; an article or good which can be given without any detriment, and which is promised as well, should never be taken back after giving away. [ N. B.—Compare न्यायमार्गेण यत् दत्तं, तत् न पुनः अपहर्त्तव्यम्। अन्यायेन दत्तं तु प्रत्याहर्त्तव्यमेव"—in Mitakshara ].

Mita—एवं दारसुतादिव्यतिरिक्तं देयमुक्त्वा प्रसङ्गात् देयधनग्रहणं च प्रतिग्रहीत्रा प्रकाशमेव कर्त्तव्यमित्याह—प्रतिग्रहणं प्रतिग्रहः ( taking of gift ), सः प्रकाशः कर्त्तव्यो, विवादनिराकरणार्थम्। "स्थावरस्य च विशेषतः" प्रकाशमेव ग्रहणं कार्य्यम्। तस्य सुवर्णादिवत् आत्मनि स्थितस्य दर्शयितुमशक्यत्वात् ॥

एवं प्रासङ्गिकमुक्त्वा प्रकृतमनुस्मरन्नाह ( having said the relevant factorhere, the real subject matter is being followed )—देयं प्रतिश्रुतं चैव।

देयं प्रतिश्रुतं चैव—यद्यस्मै धर्मार्थं प्रतिश्रुतं तत्तस्मै देयमेव यद्यसौ धर्मात्प्रच्युतो न भवति। प्रच्युते न पुनर्दातव्यम्; 'प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात्

( गौ० १२।३ ) इति गौतमस्मरणात्। 'दत्त्वा नापहरेत्पुनः' न्यायमार्गेण यद्दत्तं तत्सप्तविधमपि पुनर्नापहर्तव्यम्, किंतु तथैवानुमन्तव्यम्। यत्पुनरन्यायेन दत्तं तददत्तं षोड्शप्रकारमपि प्रत्याहर्तव्यमेवेत्यर्थादुक्तं भवति। [ नारदेन च ( ४।३ )- 'दत्तं सप्तविधं प्रोक्तमदत्तं षोड्शात्मकम्' इति प्रतिपाद्य दत्तादत्तयोः स्वरूपं विवृतम्—'पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः। स्त्रीशुल्कानुग्रहार्थं च दत्तं दानविदो विदुः॥ अदत्तं तु भयक्रोधशोकवेगरुजान्वितैः। तथोत्कोचपरीहासव्यत्यासच्छलयोगतः॥ बालमूढास्वतन्त्रार्तमत्तोन्मत्तापवर्जितम्। कर्ता ममेदं कर्मेति प्रतिलाभेच्छया च यत्॥ अपात्रे पात्रमित्युक्ते कार्ये चाधर्मसंहिते। यद्दत्तं स्यादविज्ञानाददत्तमिति तत्स्मृतम्॥' इति। अयमर्थः—पण्यस्य क्रीतद्रव्यस्य यन्मूल्यं दत्तम्, भृतिर्वेतनं कृतकर्मणे दत्तम्, तुष्ट्या बन्दिचारणादिभ्यो दत्तम्, स्नेहाद्दुहितृपुत्रादिभ्यो दत्तम्; प्रत्युपकारतः उपकृतवते प्रत्युपकाररूपेण दत्तम्, स्त्रीशुल्कं परिणयनार्थं कन्याज्ञातिभ्यो यद्दत्तम्, यच्चानुग्रहार्थमदृष्टार्थं दत्तम्; तदेतत्सप्तविधमपि दत्तमेव न प्रत्याहरणीयम्। भयेन बन्दिग्राहादिभ्यो दत्तम्, क्रोधेन पुत्रादिभ्यो वैरनिर्यातनायान्यस्मै दत्तम्, पुत्रवियोगादिनिमित्तशोकावेशेन दत्तम्, उत्कोचेन कार्यप्रतिबन्धनिरासार्थमधिकृतेभ्यो दत्तम्, परिहासेनोपहासेन दत्तम्। एकः स्वं द्रव्यमन्यस्मै ददात्यन्योऽपि तस्मै ददातीति दानव्यत्यासः। छलयोगतः शतदानमभिसंधाय सहस्रमिति परिभाष्य ददाति। बालेनाप्राप्तषोडशवर्षेण, मूढेन लोकवादानभिज्ञेन, अस्वतन्त्रेण पुत्रदासादिना, आर्तेन रोगाभिभूतेन, मत्तेन मदनीयमत्तेन, उन्मत्तेन वातिकाद्युन्मादग्रस्तेन वा, अपवर्जितं दत्तम्, तथा—'अयं मदीयमिदं कर्म करिष्यति' इति प्रतिलाभेच्छया दत्तम्, अचतुर्वेदाय 'चतुर्वेदोऽहम्' इत्युक्तवते दत्तम्, 'यज्ञं करिष्यामी'ति धनं लब्ध्वा द्यूतादौ विनियुञ्जानाय दत्तम्, इत्येवं षोडशप्रकारमपि दत्तमदत्तमित्युच्यते; प्रत्याहरणीयत्वात्। आर्तदत्तस्यादत्तत्वं धर्मकार्यव्यतिरिक्तविषयम्; 'स्वस्थेनार्तेन वा दत्तं श्रावितं धर्मकारणात्। अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः॥' इति कात्यायनस्मरणात्॥ तथेदमपरं संक्षिप्तार्थवचनं सर्वविवादसाधारणम्॥ ( मनुः ८।१६५ )—'योगागमनविक्रीतं योगदानप्रतिग्रहम्। यस्य चाऽप्युपधिं पश्येत्तत्सर्वं



विनिवर्तयेत्॥' इति॥ योग उपाधिः। येनागामिनोपाधिविशेषेणाधिविक्रयदानप्रतिग्रहाः कृतास्तदुपाधिविगमे तान् क्रयादीन्विनिवर्तयेदित्यस्यार्थः। यः पुनः षोडशप्रकारमपि अदत्तं गृह्णाति, यश्चादेयं प्रयच्छति, तयोर्दण्डो नारदेनोक्तः ( ८।११५ )—'गृह्णात्यदत्तं यो लोभाद्यश्चादेयं प्रयच्छति। अदेयदायको दण्ड्यस्तथा दत्तप्रतीच्छकः॥' इति ]॥ १७६॥

इति दत्ताप्रदानिकं नाम प्रकरणम्।

## अथ क्रीतानुशयप्रकरणम्

(Dissatisfaction after Purchase)

Mitakshara's Introductory here—

Mita—अथ क्रीतानुशयः कथ्यते। तत्स्वरूपं च नारदेनोक्तम्—"क्रीत्वा मूल्येन यः पण्यं क्रेता न बहुमन्यते। क्रीतानुशय इत्येतद् विवादपदमुच्यते" इति। तत्र च यस्मिन् अहनि पण्यं क्रीतं तस्मिन्नेवाह्नि तद्विकृतं प्रत्यर्पणीयम् इति तेनैवोक्तम्—"क्रीत्वा मूल्येन यत् पण्यं दुःक्रीतं मन्यते क्रयी। विक्रेतुः प्रतिदेयं तत् तस्मिन्नेवाह्नि अविक्षतम्।" इति॥ द्वितीयादिदिने प्रत्यर्पणे विशेषस्तेनैवोक्तः—"द्वितीयेऽह्नि ददत् क्रेता मूल्यात् त्रिंशांशमाहरेत्। द्विगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव तत्" इति॥ परतः अनुशयो न कर्तव्यः। एतच्च बीजादि-व्यतिरिक्त-उपभोगादिविनश्वरवस्तुविषयम्॥

[ Narada says that क्रीतानुशय arises when after purchasing an object by due price, one is not satisfied at all; dispute may arise herein, so it is a व्यवहार or विवादपद। The usual custom is, in such cases the object bought is to be given back to the seller unsoiled ( in tact ) on the very day it is purchased. Narada also declares this in his sruti. If it is is returned on the second day then usually 1/30th part

of the price has to be sacrified to the seller ; if on the third day then purchaser is to sacrifice twice of 1/30 to the seller ; later on it cant be given back. And this custom concerns mainly enjoyable brittle objects ; other rules however are in vogue in matters of purchase of बीज (seed) etc. So the instruction is—one should not feel dissatisfied or remorse after buying an article ; rather look before you leap—"बुद्ध्या अवेक्ष्य अवेक्ष्य कर्त्तव्यम्" ] ।

177. Seeds, cattles, servants are to be purchased on trial.

दशैकपञ्च-सप्ताह-मासत्र्यहार्द्धमासिकम् ।
बीजायो-वाह्य-रत्नस्त्रीदोह्यपुंसां परीक्षणम् ॥ १७७ ॥

Prose—बीजायो-वाह्य-रत्न-स्त्री-दोह्य-पुंसां परीक्षणं ( क्रयकाले परीक्षणं ) तु यथाक्रमं दशैकपञ्चसप्ताह-मास-त्र्यह-अर्द्धमासिकं स्यात् ।

Bong.—धान्यादि बीज, अयस् अर्थাৎ লৌহ, বাহনযোগ্য, বলীবর্দাদি, বত্ন, দাসীস্ত্রী, দোহনীয গোমহিষাদি, ভৃত্য পুরুষদিগকে কিনিয়া যথাক্রমে দশদিন, একদিন, পাঁচদিন, সাতদিন, একমাস, তিনদিন ও অর্দ্ধমাস বা একপক্ষ পরীক্ষা করিয়া দেখিতে পারিবে। [ উক্ত নির্দিষ্ট দিনেব পরে আর ক্রীতদ্রব্য ফিরাইয়া দেওয়া চলিবেনা ] ।

Eng.—After purchasing-paddyseeds and the like, iron, conveyances like bulls etc., gems, maid servants, milch cattle, male servants—these may in gradual order be tested for tendays, one day, five days, seven days, one month,



three days or half of a month. [ N. B.—After this period is over a purchased thing cant be returned back. ]

Mita—बीजादिक्रये पुनरन्य एव प्रत्यपणावधिरित्याह—"बीजं" व्रीह्यादिवीजं, "अयः" लौहम्, "वाह्यः" वलीबर्दादि, "रत्नं" मुक्ताप्रवालादि, स्त्री दासी, "दोह्य" महिष्यादि, पुमान् दासः,—एषां वीजादीनां यथाक्रमेण "दशाहादिकः" परीक्षाकालो बिज्ञेयः ॥ [ परीक्ष्यमाणे वीजादौ यदि असम्यक्त्वबुद्ध्या अनुशयो भवतितदा दशाहाद्यभ्यन्तरे एव क्रयनिवृत्तिः, न पुनरूर्ध्वम्—इत्युपदेशप्रयोजनम् । यत्तु मनुवचनं—"क्रीत्वा विक्रीय वा किञ्चिद्यस्य इहानुशयो भवेत् । सोन्तर्दशाहात् तद्रव्यं दद्याच्चैवाददीत च" इति—तदुक्त लोहादिव्यतिरिक्तोपभोगविनश्वर गृह क्षेत्रयानशयनासनादिविषयम् । सर्वं चैतद् अपरीक्षितक्रीतविषयम् । यत् पुनः परीक्षितं "न पुनः प्रत्यर्पणीयम्" इति समयं कृत्वा क्रीतं तद् विक्रेत्रे न प्रत्यर्पणीयम् । तदुक्तम्—"क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः । परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत् पुनः"—इति ॥ १७७ ॥

## CHARCHA

1. दशैक etc.—दश च एकं च पञ्च च सप्त च, द्वन्द्व । ततसंख्यकम् अहः इति दशैकपञ्चसप्ताहाः ( with समानान्त टच् after अहन् by "राजाहः-सखिभ्यष्टच्" then "रात्राह्नाहाः पुंसि" etc. ) । दशाद्यहानि च मासं च त्र्यहश्च अर्धमासश्च, द्वन्द्व । एतत् परिमाणे भवम् इति ठञ् । Qual. परीक्षणम् । These time-limits are respectively for बीज, अयस, वाह्य ( वाहनयोग्य वलीवर्दादि ), रत्न, दासी स्त्री, दोह्य-महिष्यादि and पुं भृत्य ।

179. Losses in testing gold, silver, iron, tin &c and in making ornaments.

अग्नौ सुवर्णमक्षीणं रजते द्विपलं शते ।
अष्टौ त्रपुणि सीसे च ताम्रे पञ्च दशायसि ॥ १७८ ॥

Prose—( परीक्षाकाले ) अग्नौ सुवर्णम् अक्षीणं स्यात् । शते ( शतपले )

रजते द्विपलं क्षीणं स्यात् ; शतपले त्रपुणि सीसे च अष्टौ पलानि क्षीणानि भवन्ति शते ( शतपले ) ताम्रे पञ्चपलाणि क्षीणानि भवन्ति, शते अयसि दशपलानि क्षीणानि भवन्ति ।

Beng.—পরীক্ষার জন্য বা অলঙ্কার নির্মাণের জন্য অগ্নিতে সোণা পোড়াইলে কোন ক্ষয় হয় না ; রৌপ্যে প্রতি একশতপলে দুইপল ক্ষয় হয়, রাঙের ও সীসার প্রতি শতপলে আটপল ক্ষয় হয়, তামার প্রতি শতপলে পাঁচপল এবং লোহার প্রতি শতপলে দশপল ( আগুনে পোড়াইলে ) ক্ষয় হইয়া থাকে। [ N.B—শিল্পীরা অধিকক্ষয় হইয়াছে বলিলে, দণ্ডনীয় হইবে ]।

Eng.—During testing of gold and in making ornaments therefrom it does not waste at all in fire ; silver-wastage in fire or in making ornaments is two pala in every hundred pala of silver ; similarly in case of tin ( त्रपु ) and lead, the wastage is eight palas in every hundred palas ; in copper-metal the wastage is five pala in every hundred palas ; and in iron ( अयसि ) the wastage in ten palas in every hundred palas. [ N.B.—It is said here, so that maker of ornaments etc. from these may not say greater wastage ; in that case they are to be punished ].

Mita—दोह्यादि परीक्षा प्रसङ्गेन स्वर्णादेरपि परीक्षणमाह—वह्नौ प्रताप्यमानं सुवर्णं न क्षीयते, अतः कटकादि निर्माणार्थं यावत् स्वर्णकारहस्ते प्रक्षिप्तं तावत्तुलितं तैः प्रत्यर्पणीयम् । इतरथा क्षयं दाप्याद्दण्ड्याश्च । "रजते तु शतपले" प्रताप्यमाने पलद्वयं क्षीयते । अष्टौ त्रपुनि सीसे च ("शते" इत्यनुवर्त्तते ) । त्रपुनि सीसे च शतपले प्रताप्यमाने अष्टौ पलानि क्षीयन्ते । ताम्रे पञ्च, दश अयसि । ताम्रे शतपले पञ्चपलानि अयसि दशपलानि क्षीयन्ते । ( अत्रापि



"शते" इत्येव ) । [ कांस्यस्यतु त्रपुमाम्रयोनित्वात् तदनुसारेण क्षयः कल्पनीयः । ततोऽधिकक्षयकारिणः शिल्पिनो दण्ड्याः ]. ॥ १७८ ॥

## CHARCHA

1. अक्षीणम्—न क्षीणम् अक्षीणं undecayed, not wasted. क्षि+कर्त्तरि क्त=क्षीणम् with दीर्घ by the rule "निष्ठायाम् अण्यदर्थे" क्षि is दीर्घ in निष्ठा in other than भाव वा कर्मवाच्य । then again क्त becmes न by the rule "क्षियो दीर्घात्" । so lastly weget क्षीणम् here See also परिक्षीण sl 43.

179. Similarly there is increase in wool, cotton etc. during making cloths.

शते दशपला वृद्धिरौर्णे कार्पाससौत्रिके ।
मध्ये पञ्चपला वृद्धिः सूक्ष्मे तु त्रिपलामता ॥ १७९ ॥

Prose—और्णे कार्पाससौत्रिकेच शते ( शतपले ) दशपला ( ततपरिमिता ) वृद्धिःस्यात् । मध्ये ( मध्यजातीये अनतिसूक्ष्मे पटादौ ) पञ्चपला वृद्धिःस्यात् । सूक्ष्मे ( सूक्ष्मतन्तुनिर्मिते ) त्रिपला वृद्धिः स्यात् ( वा वृद्धिः वेदितव्या ) ।

Beng.—স্থূল মেষলোমাদিনির্মিত বস্ত্রে এবং স্থূল কার্পাসসূত্র নির্মিত বস্ত্রে, প্রতি শতপলে দশপল বৃদ্ধি হয়। মধ্যজাতীয় নাতি-সূক্ষ্মপটাদিবস্ত্রে প্রতি শতপলে পঞ্চপল বৃদ্ধি হয়। আর অতিসূক্ষ্ম তন্তু নির্মিত বস্ত্রে প্রতিপলে ত্রিপলমাত্র বৃদ্ধি হয়।

Eng.—In cloths made of coarse sheepwool or of coarse cotton, there is an increase of ten palas in every hundred palas ; in cloths made of middle quality fibres there is an increase of five palas in every hundred pala ; and in

cloths of fine fabrics there is an increase of three palas in every hundred palas.

Mita—क्वचित् कम्बलादौ वृद्धिमाह—स्थूलेन और्णसूत्रेण यत्कम्बलादिकं क्रियते तस्मिन् शतपले दशपलावृद्धिर्वेदितव्या। एवं कार्पास सूत्रानिर्मिते पटादौ वेदितव्यम्। "मध्ये" अनतिसूक्ष्मसूतनिर्मिते पटादौ पञ्चपला वृद्धिः। सुसूक्ष्म-सूत्ररचिते शते त्रिपलावृद्धिर्वेदितव्या। एतच्च अप्रक्षालितवासोविषयम् (This concerns unwashed cloths) ॥ १७९ ॥

CHARCHA

1. दशपला—दश पलानि यस्याम्। बहु। Q. वृद्धिः। similarly parse पञ्चपला and त्रिपला।

2. और्णे—ऊर्णा or उर्णा is sheep's wool. तस्याविकार इति ऊर्णा+अञ्=यौणम् made of wool (sheep-wool). और्णकम् (with वुञ्) is also correct in this sense of "तस्य विकारः" by the rule "उमोर्णयोर्वा"। विषयाधिकरणे ७मी॥ कार्पासी is cotton or कापासी plant। तस्या विकार इति कार्पासी+अण्=कार्पासम् made of cotton plant, by the rule "विल्वादिभ्योहण्" and कार्पासी is read in the विल्वादि list. कार्पासस्य सूत्रम्. ६तत। then कार्पाससूत्रेभवम् उत्पन्नम् etc. इति कार्पाससौत्रिकम् with ठञ् and उभयपद वृद्धि or irregular उत्तरपद वृद्धि as in Manu's आविकसौत्रिकम् and शनतान्तवी ; or सूत्रस्य (सूतपरिमाणस्य) विकारः इति सौत्रिकम् with ठञ् as in नैष्किकः see the rule "क्रीतवत् परिमाणात्"। कापासं च तत् सौत्रिकम् इति कार्पाससौत्रिकम्। similarly too we may get शणतान्तवी of Manu II or such anomalies are formed by उत्तरपद वृद्धि somehow by "परिमाणान्तस्य असंज्ञाशाणयोः" see our गुरुलाघवम् in our sak V. In this connection remember अग्निदैवत्य, पितृदैवत्य,



यमदैवत्य are anomalous uses ; the rule "देवतान्तात्तादर्थ्ये यत्" directs यत् and so no उत्तरपद वृद्धि even for परिमाण can't be established in such cases and no ञिदादि प्रत्यय here ; so we have established देवदैवत्य in Manu II. 189 otherwise. In एकरुद्रदैवत्य, परिमाण may be established also later यत् साधर्म्य and "परिमाणान्तस्य असंज्ञाशाणयोः" may be applied. Some grammarians other than Panini school support such cases by the rule "गुरुलघ्वादेरुत्तरपदस्य"। विषयाधि ७मी॥ औण and कार्पास are coarse ; मध्य is मध्य between coarse and fine.

180. Decay or otherwise etc in silken and other cloths.

कार्मिके रोमवद्धे च त्रिंशद्भागः क्षयो मतः।
न क्षयो न च वृद्धिश्च कौशेये वाल्कलेषु च ॥ १८० ॥

Prose—कार्मिके (कर्मणा चित्रेण सूत्रेण निर्मिते द्रव्ये) तथा रोमवद्धे च (द्रव्ये or वस्त्रे च) त्रिंशद्भागः क्षयः मतः। कौशेये वाल्कलेषु च द्रव्ये न क्षयः न च वृद्धिःमतः।

Beng.—সূতাদ্বারা চিত্রিত করা এবং, রোমদ্বারা নির্মিত (শালাদি) বস্ত্রে মোটের উপর ত্রিশ ভাগের একভাগ ক্ষয় হইয়া থাকে। আর কৌশেয় বস্ত্রে (সিল্কের চেলি গরদ প্রভৃতিতে) এবং গাছের বল্কল বা ছালনির্মিত বস্ত্রে ক্ষয়ও নাই বৃদ্ধিও নাই।

Eng. In embroidered cloths made with fine threads and in cloths of fine hairs there is one-thirtieth portion of wastage ; but in silken cloths or in bark-made cloths, there is no increase or decrease of the total weight taken during weaving.

Mita—द्रव्यान्तरे विशेषमाह—"कार्मिकं कर्मणा चित्रेण निर्मितम्। यत्र निष्पन्नेपटे चक्रस्वस्तिकादिकं चित्रं सूत्रैः क्रियते तत् कार्मिकम् इत्युच्यते। यत्र प्राकारादौ रोमाणि वध्यन्तेच स रोमवद्धः तत्र त्रिंशत्तमो भागः क्षयो वेदितव्यः। कौशेये कोशप्रभवे, वाल्कलेषु वृक्षनिमितेषु वृक्षत्वकनिर्मितेषु वसनेषु वृद्धिह्रासौनस्तः। किन्तु यावद्वसनार्थं कुविदादिभ्यो दत्तं तावदेव प्रत्यादेयम् ॥ १८० ॥

CHARCHA

1. कार्मिके—कर्मणा ( चित्रकर्मणा ) निर्मितम् इति कार्मिकम् with ठञ्। तस्मिन्। In cloths embroidered with fine threads, there is 1/30 portion of decay See Mita. Similarly रोम्णा बद्धः ग्रथितः इति रोमबद्धः प्रावारः। तस्मिन्। Here uppergarment of fine hairs as shawls are meant. कौशेय ( कोश+ढञ् ) are silken cloths ; वाल्कल ( with अण ) are bark-cloths. All this is said to determine the weight of the materials given to the weaver and the cloth recovered back

181. In other cases decay etc is determined by experts and the maker is to compensate accordingly as the case may be

देशं कालञ्च भोगञ्च ज्ञात्वा नष्टे वलावलम्।
द्रव्याणां कुशलाब्रूयुर्यत्तद्दाप्याअसंशयम् ॥ १८१ ॥

Prose—( शाणक्षौमादौ द्रव्ये ) नष्टे, द्रव्याणां कुशलाः देशं कालं भोगञ्च द्रव्यस्य वलावलं च ज्ञात्वा यत् ब्रूयुः तत् असंशयं शिल्पिनः दाप्याः।

Beng.—শিল্পী, শণসূত বা ক্ষৌমসূত্রাদি বয়নকালে নষ্ট করিয়া ফেলিলে, এ বিষয়ে বিচক্ষণগণ দেশ কাল ও ভোগ বুঝিয়া এবং দ্রব্যের বলাবল ( সারবত্ত ও অসারবত্ত ) বিচার করিয়া প্রয়োজনবোধে শিল্পীকে মূল্য দেওয়াইবেন।



Eng. If an artist during weaving makes loss in sana or kshauma fabrics, then experts will declare the same considering the time, place and enjoyment thereof, as well as of the strength or worthlessness of the fabrics etc. and the artist is to compensate for this accordingly.

Mita—द्रव्यानन्त्यात् प्रतिद्रव्यं क्षयवृद्धिप्रतिपादनाशक्तेः सामान्येन ह्रासवृद्धिज्ञानोपायमाह—शानक्षौमादौ द्रव्ये नष्ट ह्रासमुपगते, "द्रव्यानां कुशलाः" द्रव्यवृद्धिक्षयाभिज्ञाः देशं कालमुपभोगं तथा नष्टद्रव्यस्य "वलावलं" सारासारतां च" परीक्ष्य यत् कल्पयन्ति तदशंसयं शिल्पिनो दाप्याः ॥ १८१ ॥

N. B. Charcha—easy. Note शिल्पी धनिने धनं ददाति in णिच् is=राजा शिल्पिनं धनं दापयति, in v ch.=राज्ञा शिल्पी धनं दाप्यते ( दाप्य ) etc.

## अथाभ्युपेत्याशुश्रूषाप्रकरणम्

[ The section of non-compliance of service after acceptance ]

Remark—Here शुश्रूषा is आज्ञाकरण=to obey orders and to do service ; अशुश्रूषा is not doing or non-compliance of service ; अभ्युपेत्य is अस्वीकृत्य। Thus Narada says "अभ्युपेत्य तुशुश्रूषां यस्तां न प्रतिपद्यते" i. e., तामङ्गीकृत्य पश्चाद् योन सम्पादयति तत् अभ्युपेत्य अशुश्रूषाख्यं विबादपदम्। The doer of services कर्मकर are शिष्य, छात्र, वेतनभुक् भृत्य, अधिकर्मकत् ( निम्नकर्मचारीर कर्मद्रष्टा=manager ) these four are शुभकर्मकत् ; and दास ( क्रीत व आहित ग्रासादि ) are low workers or slaves. Cp. "अशुभं दासकर्मोक्तं शुभं कर्मकृतां स्मृतम्"—Mita,

182. The dasas or slaves should be released in the following circumstances.

बलाद्दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यते।
स्वामिप्राणप्रदो भक्तस्त्यागान्निष्क्रयादपि ॥ १८२ ॥

Prose—बलात् यः दासीकृतः, चौरैः (अपहृत्य) यश्चापि विक्रीतः, स मुच्यते (राज्ञा मुच्येत इत्यर्थः)। एवं स्वामिप्राणप्रदः (दासः), भक्तः (भक्तदासः) त्यागात् (यावद्भक्तगृहीततावत्प्रत्यर्पणात्)। आहितदासः ऋणदासश्च निष्क्रयात् (यद् गृहीत्वा स्वामिना आहितः, ऋणं कृतश्च, तन्मूल्यप्रत्यर्पणात्) मुच्यते (मोचयितव्य इत्यर्थः)।

Beng.—যাকে জোর করিয়া দাস করা হইয়াছে, অথবা যাকে চোর হরণ করিয়া দাসরূপে বিক্রয় করিয়াছে, সে মুক্তি পাইবার যোগ্য (অর্থাৎ প্রভু না ছাড়িলেও রাজা তাকে মুক্ত করাইবেন)। যে দাস চোরব্যাঘ্রাদিদ্বারা আক্রান্ত স্বামীর বা প্রভুর প্রাণরক্ষা করে সেও মুক্তিযোগ্য। ভক্তদাস অসময়ে স্বামীর যত্ পরিমাণ অন্ন গ্রহণ করিয়াছে, তৎপরিমাণ অন্ন স্বামী বা প্রভুকে দিলে মুক্ত হইবে। সেইরূপ আহিত ও ঋণদাস অর্থাৎ যার বিনিময়ে প্রভু ঋণ গ্রহণ করিয়াছে, সেও ঋণশোধ হইলেই মুক্তি পাইবার যোগ্য হইবে।

Eng.—One forcibly made into a slave, one stolen by thieves and sold as a slave should be released of slavery; so a saviour in distress of master's life should be released; a "Bhaktadasa" should be released when he gives back the amount of food he had taken of his master in times of peril; similarly an Ahita-dasa or Rina-dasa against whom loan is taken by his master, should be released as soon as the debt or ransom is given back.



Mita—सांप्रतमभ्युपेत्याशुश्रूषाख्यमपरं विवादपदमभिधातुमुपक्रमते। तत्स्वरूपं च नारदेनोक्तम् (५।१)—'अभ्युपेत्य तु शुश्रूषां यस्तां न प्रतिपद्यते। अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यते॥' इति। आज्ञाकरणं शुश्रूषा, तामङ्गीकृत्य पश्चाद्यो न संपादयति तद्विवादपदमभ्युपेत्याशुश्रूषाख्यम्। शुश्रूषकश्च पञ्चविधः—शिष्योऽन्तेवासी भृतकोऽधिकर्मकृद्दास इति। तेषामाद्याश्चत्वारः कर्मकरा इत्युच्यन्ते। ते च शुभकर्मकारिणः। दासाः पुनर्गृहजातादयः पञ्चदशप्रकाराः—गृहद्वाराशुचिस्थानरथ्यावस्करशोधनाद्यशुभकर्मकारिणः। तदिदं नारदेन स्पष्टीकृतम्—शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः। चतुर्विधः कर्मकरस्तेषां दासास्त्रिपञ्चकाः॥ शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत। एते कर्मकरा ज्ञेया दासास्तु गृहजादयः॥ सामान्यमस्वतन्त्रत्वमेषामाहुर्मनीषिणः। जातिकर्मकृतस्तूक्तो विशेषो वृत्तिरेव च॥ कर्मापि द्विविधं ज्ञेयमशुभं शुभमेव च। अशुभं दासकर्मोक्तं शुभं कर्मकृतां स्मृतम्॥ गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम्। गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम्॥ इच्छतः स्वामिनश्चाङ्गैरुपस्थानमथान्ततः। अशुभं कर्म विज्ञेय शुभमन्यदतः परम्॥' (ना० ५।२-७) इति॥ तत्र शिष्यो वेदविद्यार्थी, अन्तेवासी शिल्पशिक्षार्थी, मूल्येन यः कर्म करोति स भृतकः. कर्मकुर्वतामधिष्ठानाऽधिकर्मकृत्, अशुचिस्थानमुच्छिष्टप्रक्षेपार्थं गर्तादिकम्, अवस्करो गृहमार्जितपांस्वादिनिचयस्थानम्, उज्झनं त्यागः। भृतकश्चात्र त्रिविधः। तदुक्तम्—'उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु कृषीवलः। अधमो भारवाही स्यादित्येवं त्रिविधः स्मृतः॥' (ना० ५।२२) इति। दासाः पुनः—'गृहजातस्तथा क्रीतो लब्धो दायादुपागतः। अनाकालभृतस्तद्वदाहितः स्वामिना च यः॥ मोक्षितो महतश्चर्णाद्युद्धप्राप्तः पणे जितः। तवाहमित्युपगतः प्रव्रज्यावसितः कृतः॥ भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः। विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः॥' (ना० ५।२३) गृहे दास्यां जातो गृहजातः, क्रीतो मूल्येन, लब्धः प्रतिग्रहादिना, दायादुपागतः पित्रादिदासः, अनाकालभृतो दुर्भिक्षे यो दासत्वाय मरणाद्रक्षितः, आहितः स्वामिना धनग्रहणेनाधितां नीतः, ऋणमोचनेन दासत्वमभ्युपगतो ऋणदासः. युद्धप्राप्तः समरे विजित्य गृहीतः.

पणे जितः—'यद्यस्मिन्विवादे पराजितोऽहं तदा त्वद्दासो भवामि' इति परिभाष्य जितः; तवाहमित्युपगतः 'तवाहं दासः' इति स्वयं संप्रतिपन्नः, प्रव्रज्यावसितः प्रव्रज्यातश्च्युतः, कृतः 'एतावत्कालं त्वद्दासः' इत्यभ्युपगमितः, भक्तदासः सर्वकालं भक्तार्थमेव दासत्वमभ्युपगम्य यः प्रविष्टः, वडवाहृतः—वडवा गृहदासी तया हृतः तल्लोमेन तामुद्वाह्य दासत्वेन प्रविष्टः, य आत्मानं विक्रीणीतेऽसावात्मविक्रेता ; इत्येवं पञ्चदश प्रकाराः ॥ यत्तु मनुना ( ८।४१५ )—'ध्वजाहृतो भक्तदासो गृहजः क्रीतदत्त्रिमौ। पैतृको दण्डदासश्च सप्तैते दासयोनयः ॥' इति सप्तविधत्वमुक्तं,—तत्तेषां दासत्वप्रतिपादनार्थं, नतु परिसंख्यार्थम्। तत्रैषां शिष्यान्तेवासिभृतकाधिकर्मकृद्दासानां मध्ये शिष्यवृत्तिः प्रागेव प्रतिपादिता।—'आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत्' ( आचार० २७ ) इत्यादिना। अधिकर्मकृद्भृतकानां तु भृतिं वेतनादानप्रकरणे वक्ष्यते।—'यो यावत्कुरुते कर्म तावत्तस्य तु वेतनम्' ( व्यव० १९६ ) इत्यादिना ॥

दासान्तेवासिनोस्तु धर्मविशेषं वक्तुमाह—

बलात् बलावष्टम्भेन यो दासीकृतः, यश्चौरैरपहृत्य विक्रीतः, 'अपि'-शब्दादाहितो दत्तश्च ; स मुच्यते। यदि स्वामी न मुञ्चति तर्हि राज्ञा मोचयितव्यः। उक्तं च नारदेन ( ५।३८ )—'चौरापहृतविक्रीता ये च दासीकृता बलात्। राज्ञा मोचयितव्यास्ते दास्यं तेषु हि नेष्यते ॥' इति। चौरव्याघ्राद्यवरुद्धस्य स्वामिनः प्राणान्यः प्रददाति रक्षत्यसावपि मोचयितव्यः। तदिदं सर्वदासानां साधारणं दास्यनिवृत्तिकारणम्।—'यश्चैषां स्वामिनं कश्चिन्मोचयेत्प्राणसंशयात्। दासत्वात्स अविमुच्येत पुत्रभागं लभेत च ॥' ( ५।३० ) इति नारदस्मरणात् ॥ भक्तदासादीनां प्रातिस्विकमपि मोक्षकरणमुच्यते। अनाकालभृतभक्तदासौ भक्तस्य त्यागाद्ग्रासाभावादारभ्य स्वामिद्रव्यं यावदुपभुक्तं तावद्दत्त्वा मुच्येते। आहितर्णदासौ तु तन्निष्क्रयात् यद्गृहीत्वा स्वामिना आहितः, यच्च दत्त्वा धनिनोत्तमर्णान्मोचितः, तस्य निष्क्रयात्सवृद्धिकस्य प्रत्यर्पणान्मुच्यते। नारदेन विशेषोऽप्युक्तः—'अनाकालभृतो दास्यान्मुच्यते गोयुगं ददत्। संभक्षितं यद्दुर्भिक्षे न तच्छुद्ध्येत कर्मणा ॥', 'भक्तस्योत्क्षेपणात्सद्यो भक्तदासः प्रमुच्यते।', 'आहितोऽपि धनं दत्त्वा स्वामी





यद्येनमुद्धरेत् ॥', 'ऋणं तु सोदयं दत्त्वा ऋणी दास्यात्प्रमुच्यते ( ना० ५।३९, २६, ३२, ३३ ) ॥' इति ॥ तथा 'तवाहम्' इत्युपगतयुद्धप्राप्तपणजितकृतकवडवाहृतानां च प्रातिस्विकं मोचनकारणं च तेनैवोक्तम्—'तवाहमित्युपगतो युद्धप्राप्तः पणे जितः। 'प्रतिशीर्षप्रदानेन मुच्येरंस्तुल्यकर्मणा ॥', 'कृतकालव्यपगमात्कृतकोऽपि विमुच्यते।', 'निग्रहाद्वडवायास्तु मुच्यते वडवाहृतः ॥' ( ना० ५।३४, ३३, ३७ ) इति। दासेन सह संभोगनिरोधादित्यर्थः। तदेवं गृहजातक्रीतलब्धदायप्राप्तात्मविक्रयिणां स्वामिप्राणप्रदानतत्प्रसादरूपसाधारणकारणव्यतिरेकेण मोक्षो नास्ति ; विशेषकारणानभिधानात्। दासमोक्षश्चानेन क्रमेण कर्तव्यः—'स्वं दासमिच्छेद्यः कर्तुमदासं प्रीतमानसः। स्कन्धादादाय तस्यासौ भिन्द्यात्कुम्भं सहाम्भसा ॥ साक्षताभिः सपुष्पाभिर्मूर्धन्यद्भिरवाकिरेत्। अदास इत्यथोक्त्वा त्रिः प्राङ्मुखं तमवासृजेत् ॥' ( नारद ५।४२, ४३ ) इति तेनैवोक्तम् ॥ १८२ ॥

## CHARCHA

1. मुच्यते—construe राज्ञा मुच्यते ( कर्मणि लटते ) ; here मुच्येत् should be a better reading, Narada's & Mitakshara's मोचयितव्य suggests so, of the readings—भक्तत्यागात्, भक्तस्त्यागात् and भाक्तस्त्यागात्, we prefer भक्तः ( भक्तदासः ) त्यागात्। त्याग is प्रतिदान here "त्यागो विहापितं दानम्"। हेतौ ५मी or ल्यव् लोपे कर्मणि ५मी। Thus त्यागं दानं कृत्वा=त्यागात्। Similarly parse निष्क्रयात्। निष्क्रय is ransom, exchange money or debt here with respect to आहित दान and ऋणदान। Such should be released as soon as debt is given back ; such slaves should morally be released for these are forced to do slavery.

183. One fallen from Sannyasa should be king's slave for ever—he has no release.

प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकम् ।
वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः ॥ १८६ ॥

Prose—प्रव्रज्यावसितः ( सन्न्यासच्युतः ) आमरणान्तिकम् ( मरणपर्य्यन्तम् ) राज्ञो दासः स्यात । ( ब्राह्मणादीनां ) वर्णानाम् आनुलोम्येन दास्यं प्रतिलोमतः न स्यात् ।

Beng—সন্ন্যাস লইয়া তাহা হইতে চ্যুত হইলে, সেই ভ্রষ্টব্যক্তি আমরণ রাজার দাস হইবে। আর ব্রাহ্মণাদি বর্ণ অনুলোমক্রমে ( অর্থাৎ উচ্চ হইতে নীচক্রমে ) দাস্য গ্রহণ করিবেন, বিপরীতক্রমে দাসত্ব করিবেন না। অর্থাৎ ব্রাহ্মণ, ক্ষত্রিয়াদির দাস হইবেন না। ( See मिताक्षरा also ).

Eng—One fallen from Sannyasa should espouse king's slavery till his death; and the castes of Brahmana, Kshatriya etc. should adopt slavery in right order ( from high to low ) and not in reversed order i. e from low to high ( i. e, Brahmana etc. should not be a Sudra's slave ).

Mita—प्रव्रज्यावसितस्यतु मोक्षो नास्ति इत्याह—प्रव्रज्या सन्न्यासः, ततः अवसित प्रच्युतः । अनभ्युपगतप्रायश्चित्तश्चेत् राज्ञ एव दासः भवति । मरणमेव तद्दासत्वस्य अन्तः नान्तरा प्रतिमोक्षोस्ति ॥

वर्णापेक्षया दास्यव्यवस्थामाह—ब्राह्मणादीनां वर्णानामानुलोम्येन दास्यम् [ ब्राह्मणस्य क्षत्रियादयः, क्षत्रियस्य वैश्यशूद्रौ, वैश्यस्य शूद्र इत्येवम् आनुलोम्येन दासभावो भवति ] न प्रातिलोम्येन । [ स्वधर्मत्यागिनः पुनः परिव्राजकस्य प्रातिलोम्येनापि दासत्वमिष्यते एव । यथाह नारदः—"वर्णानां प्रातिलोम्येन दासत्वं न विधीयते । स्वधर्मत्यागिनोन्यत्र दारवद्दासता मता" इति ] ॥ १८३ ॥



CHARHCA

1. प्रव्रज्या etc.—अव+सो क्त कर्त्तरि=अवसित ended; here fallen by ending i.e, प्रच्युत । प्रव्रज्याया अवसितः ( प्रच्युतः ), सुप्सुपा । adj. used substantively.

2. आमरणान्तिकम्—अन्तिक is near or सामीप्य here. मरणस्य-अन्तिकं, मरणान्तिकम् very near of death i.e., on death=point. आ मरणान्तिकात् इति आमरणान्तिकम्, अव्ययीभाव । Adv.

3. आनुलोम्येन—लोमन is hair; लोम अनुगतम् or अनुगतं लोम अस्य इति अनुलोम with समासान्त अच् by the rule—अच् प्रत्यन्वव-पूर्वात् सामलोम्नः" । अनुलोमस्य भाव इति ष्यञ् आनुलोम्यम् right order. तेन । करणे ३या । Similarly derive and parse प्रतिलोमतः ॥

184. A learner of arts should give the results and earnings thereof to his preceptor so long as he resides there.

कृतशिल्पोपि निवसेत् कृतकालं गुरोर्गृहे ।
अन्तेवासी गुरुप्राप्तभोजनस्तत्फलप्रदः ॥ १८४ ॥

Prose—कृतशिल्पोपि अन्तेवासी कृतकालं यावत गुरोर्गृहे निवसेत् । गुरुप्राप्तभोजनः ( सन् ) तत्फलप्रदः सन् निवसेत् ।

Beng—অন্তেবাসী বা ছাত্র, গুরুগৃহে আয়ুর্বেদাদি শিল্পশিক্ষার্থে, সাধারণতঃ চারি বৎসর থাকিবে। ইতিমধ্যে সে কৃতবিদ্য হইলেও গুরুগৃহে নির্দিষ্ট শিক্ষাকাল যাবৎ থাকিবে। এবং যতদিন এভাবে থাকিবে সে গুরুর নিকট ভোজনাদি প্রাপ্ত হইয়া, সেই শিল্পের ফল অর্থাদি আচার্য্যকে দিবে।

Eng.—A pupil though proficient in Ayurveda etc.,

shall still live in preceptor's house till the proper stipulated period of learning the same ( as 4 years in Ayurveda etc. ) and so long as he lives in his preceptor's house and take food there, he is to give the results ( earnings etc. ) of the same art to his preceptor.

Mita—अन्तेवासिधर्मानाह—"अन्तेवासी गुरोर्गृहे, कृतकालं" ( "वर्षचतुष्टयम् आयुर्वेदशिल्पशिक्षार्थं त्वद्गृहेवसामि" इति यावदूअङ्गीकृतं ) "तावत्कालं वसेत्"। यद्यपि वर्णचतुष्टयादर्वागेव लब्धापेक्षितशिल्पविद्यः। कथं निवसेत् ? —"गुरुप्राप्तभोजनः" गुरोः सकाशात् प्राप्तं भोजनं येन सतथोक्तः, "तत्फलप्रदः" तस्य शिल्पस्य फलम आचार्य्याय प्रददातीति ततफलप्रदः। एवम्भूतो वसेत। [ नारदेन विशेषोऽप्यत्र दर्शितः—"स्वशिल्पमिच्छन्नाहर्त्तुं बान्धवानामनुज्ञया। आचार्य्यस्य वसेदन्तेकृत्वा कामं सुनिश्चितम्। आचार्य्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम्। न चान्यत्कारयेत् कर्म पुत्रवच्च एनमाचरेत्॥ शिक्षयन्तमसंदुष्टं च य आचार्य्यं परित्यजेत्। बलाद्वासयितव्यः स्यात् वधबन्धौ च सोर्हति। शिक्षितोपि कृतं कालम् अन्तेवासी समाप्नुयात्। तत्र कर्म च यत् कुर्य्यात् आचार्य्यस्यैव तत्फलं। गृहीतशिल्पः समये कृत्वाचार्य्यं प्रदक्षिणम्। शिक्षितश्चानुमान्यैनं अन्तेवासी निवर्त्तेत॥ इति। बधशब्दोत्र ताड़नार्थः, दोषस्याल्पत्वात्॥ १८४॥

इत्यभ्युपेताशुश्रूषाख्यं विवादप्रकरणम्॥

CHARCHA

1. कृत etc.—कृतः अधिगतः शिल्पः अनेन। Qual अन्तेवासी॥ कृतकालम्—ऊह्य यावद्शब्द योगे २या। कृतः विहितः कालः समयः। कर्मधा। तम्। He should live with Guru till the stipulated period.

2. गुरु etc.—प्राप्तं भोजनमनेन, बहु। गुरोः प्राप्तभोजनः, सुप्सुपा। Or ६ष्ठी तत्।



3. तत् etc.—तस्य शिल्पस्य फलम्। तत् प्रददाति इति कप्रत्ययः। The अन्तेवासी living in गुरुगृह till the stipulated period after कृतविद्यता, should give the earnings thereof to his Guru.

## अथ संविद्-व्यतिक्रमप्रकरणम्

[ Section on Transgression of legal and virtuous rules or limits. ]

Mitakshara says—"सम्प्रति संविद्व्यतिक्रमः कथ्यते। तस्य च लक्षणं नारदेन व्यतिरेकमुखेन ( in a negative way ) दर्शितम्—"पाखण्डिनैगमादीनां स्थितिः समय उच्यते। समयस्यानपाकर्म तद्विवादपदं स्मृतम्" —"इति पारिभाषिकधर्मेण व्यवस्थानं समयः, तस्यानपाकर्म अव्यतिक्रमः परिपालनम्, तद्व्यतिक्रम्यमाणं विवादपदं भवतीत्यर्थः।

संविद् is समय or स्थिति i e, legal and moral limits or नियम; its observance रक्षण both by पापण्डिन् पाखण्डिन् ( वेदमार्गविरोधिन वाणिज्यकराः ) and a नैगम ( =वेदाविरोधिमार्गेण कर्मकारिणः ) should be made; and its non-transgression i e. अनापाकर्म is धर्म and its व्यतिक्रम or transgression or defiance is विवादपद i.e., a source of dispute.

185, The king should appoint त्रिवेदज्ञ ब्राह्मण to observe वर्णाश्रमधर्म।

> राजा कृत्वा पुरे स्थानं ब्राह्मणान्न्यस्य तत्र तु।
> त्रैविद्यं वृत्तिमद्ब्रूयात् स्वधर्मः पाल्यतामिति॥ १८५॥

Prose—राजा पुरे ( स्वपुरे ) स्थानं ( धवलगृहादिकं ) कृत्वा, तत्र ब्राह्मणान्

न्यस्य ( संस्थाप्य ), तद्ब्राह्मणव्रातं त्रैविद्यं वृत्तिमद् च कृत्वा, स्वधर्मः ( शास्त्रोक्तः वर्णाश्रमधर्मः ) पाल्यताम् इति तान् ब्रूयात ।

Beng.—রাজা নিজপুরে সুন্দরপরিষ্কৃত গৃহাদি করিয়া সেখানে ব্রাহ্মণগণকে স্থাপন করিয়া, তাদের ত্রিবিধবেদাদিতে যোগ্য ও সদ্বৃত্তিযুক্ত করিয়া, তাদের বলিবেন "আপনারা শাস্ত্রোক্ত নিত্য বর্ণাশ্রমধর্ম পালন করুন"।

Eng.—The king should construct a white-washed house in his own kingdom or city and having appointed Brahmanas there, should make them well versed in all the threevedic lores and provided with livelihood, and instruct them to observe the Shastric Varnasrama Dharmas ( everywhere ).

Mita—तदपक्रमार्थं किञ्चिदाह—"राजा" स्वपुरे दुर्गादौ, स्थानं धवलगृहादिकं "कृत्वा तत्र ब्राह्मणान्न्यस्य" स्थापयित्वा, तद्ब्राह्मणव्रातं "त्रैविद्य" वेदत्रयसम्पन्नं "वृत्तिमद्" भूमिहिरण्यादिसंपन्नं च कृत्वा, "स्वधर्मः" वर्णाश्रमनिमित्तः श्रुतिस्मृतिविहितः, "भवद्भिरनुष्ठीयताम्" इति तान ब्राह्मणान् "ब्रूयात्" ॥ १८५ ॥

CHARCHA

1. त्रैविद्यम्—Refers to ब्राह्मणकुल stationed in the पुर। So Mita says "तद् ब्राह्मणव्रातम्"। तिसृणां विद्यानां समाहार इति त्रिविद्यम्, a collection of 3 Vidyas. The 3 विद्या are knowledge of Rigveda, Yajus and Saman. Kulluka elsewhere in Manu says "ऋग्यजुःसामाख्यविद्यात्रयग्रन्थाभिज्ञम्"। त्रिविद्यमधीते वेद वा इति त्रिविद्य+अण्=त्रैविद्यः or त्रैविद्यम्, versed in the three vedas ( "वेदत्रयसम्पन्नम्"—Mit )। or त्रिविधा विद्या त्रिविद्या। ताम्



अधीते वेद वा इति अण्=त्रैविद्यः or त्रैविद्यम्। See also our त्रैविद्यवृद्धान in Manu VII. 37. The Brahmanas shall be versed in the three vedas, for vedas are roots of all Dharmas—"वेदोऽखिलो धर्ममूलम्"—Manu II. And then such Brahmanas will be able to give advice to the king for वर्णाश्रमधर्म and its रक्षण। These also should be वृत्तिमद्, so their study and advice will be in a clear mind and mood and for the good of all.

2. ब्रूयात्—ब्रू+लिङ् विधौ+यात्। nom. राजा।

186. These Brahmanas should maintain shastric rites and local timely customs too.

निजधर्माविरोधेन यस्तु सामयिको भवेत्।
सोपि यत्नेन संरक्ष्यो धर्मो राजकृतश्चयः ॥ १८६ ॥

Prose—यः समयिकः धर्मः ( गोप्रचारजलरक्षादि ) भवेत् यश्च राजकृतः धर्मः ( पथिकभोजनादि ) भवेत्, सोपि निजधर्माविरोधेन यत्नेन च संरक्ष्यः ( नियुक्तै ब्राह्मणैः रक्षणीय इत्यर्थः )।

Beng.—গোপ্রচার-জলশুদ্ধতা রক্ষা, দেবগৃহপালন প্রভৃতি যে সাময়িক ধর্মের ব্যবস্থা আছে, আর পথিকভোজনাদি যাহা রাজার কৃত ধর্মাশ্রয় আছে, তাহা উক্ত নিযুক্ত ব্রাহ্মণগণ যত্নের সহিত শ্রৌতস্মার্ত্ত ক্রিয়ার ব্যাঘাত না ঘটাইয়া রক্ষা করিবেন।

Eng.—The appointed Brahmans ( in charge of administration ) should observe and preserve the current religions rites of preserving cows, keeping waters pure, protecting temples etc. and also the rites of feeding the way-farers

etc. as proclaimed by the king, without interfering other srauta and smarta rites.

Mita—एवं नियुक्तैस्तैर्यत्कर्म कर्त्तव्यं तदाह—श्रौतस्मार्त्तधर्मानुपमर्देन, समयात् निष्पन्नो यो धर्मः गोप्रचारोदकरक्षण—देवगृहपालनादिरूपः, सोपि यत्नेन पालनीयः। तथा राज्ञा च निजधर्माविरोधेनैव यः सामयिको धर्मः—"यावत्-पथिकं भोजनं देयम्, अस्मदरातिमण्डलं तुरङ्गादयो न प्रस्थापनीया" इत्येवंरूपःकृतः सोपि रक्षणीयः ॥ १८६ ॥

CHARCHA

1. यत्नेन संरक्ष्यः—यत्नेन has here प्रकृत्यादि तृतीया। The ब्राह्मण should protect all this, for they are appointed for this purpose, see sl.—"व्यवहारान् नृपः पश्येत् विद्वद्भिः ब्राह्मणैः सह" ॥

2. निज—धर्माविरोधेन—निजःधर्मः। तस्य अविरोधः। तेन। करणे ३या। Brahmana's निजधम is श्रौतस्मार्त्तधर्म ॥ The epithet can also go with राज्ञा कृतः ( राजकृत ) i. e., which rules are proclaimed by the king without detriment to his राजधर्म।

3. सामयिकः—समय is current time. समयः प्राप्तः अस्य इति सामयिक ; with ठञ् by the rule "समयस्तदस्य प्राप्तम्"। समये ( तत्काले ) भव इति वा सामयिकः current at that time. Qual. धर्मः।

187. The maximum punishment in case of violation of current Dharma.

गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः।
सर्बस्वहरणं कृत्वा तं राष्ट्राद् विप्रवासयेत् ॥ १८७ ॥

Prose—यस्तु गणद्रव्यं ( जनसाधारणद्रव्यं ) हरेत्, यः संविदं ( सामयिकं



स्थितिं राजकृतां वा स्थितिं ) लंघयेत्, तस्य सर्वस्वहरणं कृत्वा राष्ट्रात् ( राजा ) विप्रवासयेत् ( वहिष्कुर्य्यात् )।

Beng.—যে ব্যক্তি জনসাধারণের দ্রব্য হরণ করিবে বা ঐ সাময়িক বা রাজকৃত সংবিদ্ বা স্থিতি বা নিয়ম লঙ্ঘন করিবে, রাজা তার সর্বস্ব কাড়িয়া লইয়া রাষ্ট্র হইতে নির্বাসিত করিবেন।

Eng.—The king should turn him out from his kingdom, i.e the person who will usurp public welfare objects or transgress current rites or kings proclamations.

Mita—एवं समयधर्मः पालनीयः इत्युक्त्वा तदतिक्रमादौ दण्डमाह—"यः पुनर्गणस्य" ग्रामादिजनसाधारणस्य सम्बन्धि साधारणं "द्रव्यमपहरति" तथा "संविद्" समयः, तां समूहकृतां राजकृतां वा "यो लंघयेत्" अतिक्रामेत् तदीयं सर्वं धनमपहृत्य स्वराष्ट्रात् राजा "विप्रवासयेत्" निष्कासयेत्। [ अयं च दण्डो अनुवन्धातिशये द्रष्टव्यः ( this punishment is in cases of excess of such offences )। अनुवन्धाल्पत्वे ( =दोषाल्पत्वे )—"यो ग्रामदेश-संघानां कृत्वा सत्येन संविदम्। विसंवदेन्नरोलोभात्तं राष्ट्राद्विप्रवासयेत् ॥ निगृह्य दापयेदेनं समयव्यभिचारिणम्। चतुः सुवर्णं षट् निष्कात् शतमानं च राजतम्" इति मनुप्रतिपादितदण्डानां निर्वासन-चतुःसुवर्ण-षटनिष्क-शतमानानां चतुर्णा-मन्यतमो जातिशक्त्याद्यपेक्षया कल्पनीयः ] ॥ १८७ ॥

188. Persons not obeying the welfare orders of the good, should be fined.

कर्त्तव्यं वचनं सर्वैः समूहहितवादिनाम्।
यस्तत्र विपरीतः स्यात् स दाप्यः प्रथमं दमम् ॥ १८८ ॥

Prose—समूहहितवादिनां वचनं सर्वैः ( जनैः ) कर्त्तव्यम्। यः तत्र विपरीतः स्यात स राज्ञा प्रथमं दमं ( साहसोक्तं प्रथमं दण्डं ) दाप्यः।

Beng.—যারা সমূহের ( সর্ব-জনসাধারণের ) হিতবাক্য বলেন, অন্যজনেরা তাদের বাক্য পালন করিবে। যে ব্যক্তি এর বিপরীত করিবে রাজা তাকে সাহসপ্রকরণোক্ত প্রথম দণ্ড দিবেন ( অর্থাৎ তাকে জরিমানা করিয়া, তাহা দেওয়াইবেন )—( This is Ganatantra and Panchayet Tantra as well ].

Eng.—All persons should follow or obey the words or maxim of the good-workers of the mass ; one running counter to this or defying this, should be fined by the king ( as in first-type of Sahasaprakarana ).

Mita—इदं च तैः कर्त्तव्यमित्याह—गणिनां मध्ये "ये समूहहितवादन ( वदन ) शीलाः तद्वचनमितरैः गणानामन्तर्मतैरितरैवनुसरणीयम् । अन्यथा दण्डमाह—यस्तुगणिनां मध्ये । समूहहितवादिवचनप्रतिबन्धकारी स राज्ञा प्रथमसाहसं दण्डनीयः ॥ १८८ ॥

CHARCHA

1. समूह—समूह is mass साधारणजनगण । समूहस्यहितम् । तद् साधु वदन्ति येते समूहहितवादिनः ( साधुकारिणिनिनिः ) । तेषाम् । शेषे षष्ठी Mita's समूहहितवादनशीलाः should be समूहहितवदनशीलाः । The हितवादिन् in the text says so. This is गणतन्त्र ॥

The समूहहितवादिन् are representatives of जनगण i.e, they are conductors of गणतन्त्र । The people should obey them and their laws, for they act for their good. This is गणतन्त्र and प्रजातन्त्र, also पञ्चायेत तन्त्र in every village. This is the govt of the people, for the good of the people and made by the people, as in modern days. These समूहहितवादिन्



will also act for all welfere actions, irrigation and disputes in consultation with the king and his council.

189. King's honour & gift to those who come to him for गणकार्य्य as गणप्रतिनिधि ।

समूहकार्य्य आयातानकृतकार्य्यानविसर्जयेत् ।
स दानमानसत्कारैः पूजयित्वा महीपतिः ॥ १८९ ॥

Prose—स महीपतिः राजा समूहकार्य्ये आयातान् कृतकार्य्यान् दानमानसत्कारैः पूजयित्वा विसर्जयेत ।

Beng.—সেই ( গণতন্ত্রানুযায়ী ) কার্য্যকারী মহীপতি সমূহকার্য্যের জন্য ( জনগণের হিতকার্য্যের জন্য ) নিকটে আগত এবং জনগণের কার্য্যে ইতিমধ্যে তখনও কৃতকৃত্য প্রতিনিধিগণকে অর্থদান, সম্মান ও সমাদরের সহিত অভিনন্দিত করিয়া স্বশুভকার্য্যে বিদায় দিবেন।

Eng.—The king ( following ganatantra ) should dismiss after congratulating with money, honour and hospitality the representatives of the people for their successful plans and works, for which they appeared before him ( and stated facts accordinly awaiting his approval ).

Mita—राज्ञा चेत्थ गणिषु वर्त्तनीयम् इत्याह—समूहकार्य्यनिवृत्त्यर्थं स्वपार्श्वं आगतान् गणिनो निवर्त्तितात्मीय प्रयोजनात् दानमानसत्कारैः स राजा परितोष्य विसर्जयेत् ॥ १८९ ॥

CHARCHA

1. समूहकार्य्ये—अर्थि ७मी । come for the good works of the mass ( जनसाधारण ) ॥ If they are successful already and are

so now ( कृतकार्य्य ), and their welfare plans are approvable for which they are come for final sanction, should be duly received with hospitality ( सत्कार ) with honour ( मान ) and with gift of money ( दान ) also ; this is to incite others too for good works of the समूह ॥ दानमानसतकारैः=करणे ३या ।

190 These representatives of such welfare works should divide the money get from the king with connected persons otherwise there will be punishment.

समूहकार्य्यप्रहितो यल्लभेत तदर्पयेत् ।
एकादशगुणं दाप्यो यद्यसौ नार्पयेत् स्वयम् ॥ १९० ॥

Paose—समूहकार्य्यप्रहितः ( प्रतिनिधिः ) यत ( धनं ) लभेत, तद अर्पयेत् ( महाजनेभ्यः निवेदयेत ) यदि असौ स्वयं न अर्पयेत तदा स राज्ञा एकादशगुणं ( धनं ) दाप्यः ( दण्डरूपेण दाप्यः ) ।

Beng.—জনহিতকার্যের জন্য প্রেরিত প্রতিনিধি রাজার নিকট হইতে যে ধন পাইবেন, তাহা সম মহাজনদের হাতে দিবেন। যদি স্বেচ্ছায় না দেন তবে রাজা সে ব্যক্তিকে তার একাদশগুণ দণ্ডের বিধান করিবেন।

Eng.—The money got from the king by such mass representative, should out of their own accord hand this over to the "mahajana" persons ( of whose representative he is ) ; otherwise he should be fined eleven times as much by the king.

Mita—समूहदत्तापहारिणं प्रत्याह—समूहकार्य्यार्थं महाजनैः प्रेरितो



राजपार्श्वे यवसहिरण्यादिकं लभते तदप्रार्थित एव महाजनेभ्यो निवेदयेत् । अन्यथा लब्धादेकादशगुणं दण्डं दापनीयः ॥ १९० ॥

CHARCHA

1. समूह etc.—समूहस्य ( समूहानां वा ) कार्य्यम् । तस्मै प्रहितः, सुप्सुपा । adj. used substantively. Such प्रतिनिधि to whom the king gives money for such welfare works, is evidently intended that the प्रतिनिधि should spend it for the good of his circle of which he is a प्रतिनिधि । Otherwise punishment is of fine. प्रहित is from प्र+हि ( प्रेरणे )+क्त कर्मणि, sent ; or प्र+धा+क्त कर्मणि=प्रहित i e., प्रस्थापित entrusted ; both meanings and deriv. suit us here. comp "विचारमार्गप्रहितेक्षणेन" of Kalidasa in kum. v etc.

191. So धर्मज्ञ, अलुब्ध invigilators for administrative works should be appointed.

धर्मज्ञाः शुचयोऽलुब्धा भवेयुः कार्य्यचिन्तकाः ।
कर्त्तव्यं वचनं तेषां समूहहितवादिनाम् ॥ १९१ ॥

Prose—( राज्ञः ) कार्य्यचिन्तकाः धर्मज्ञा शुचयः अलुब्धा भवेयुः । तेषां समूहहितवादिनां वचनं सर्वैः कर्त्तव्यम् ।

Beng.—রাজার কার্যবিচারক বা পরিদর্শকগণ ধর্মজ্ঞ, বহিরন্তঃ শুদ্ধ এবং লোভহীন হইবেন। আর ঈদৃশ সমূহহিতকারিগণের বচন সকলেই পালন করিবেন। [ হিতবচন পালন না করিলে স্থিতিলঙ্ঘন হইবে। ]

Eng.—King's officers ( to watch over administrative affairs ) should be virtuous, of pure conduct and free of

greed or avarice ; and all should abide by the good words of these good and welfare doers and workers [ otherwise there will be transgression of regulations ].

Mita—एवम्प्रकाराश्च कार्य्यचिन्तकाः कार्य्या इत्याह—श्रौतस्मार्त्तधर्मज्ञाः, बाह्याभ्यन्तरशौचयुक्ताः, अर्थेषु अलुब्धाः कार्य्यविचारकाः कर्त्तव्याः। तेषां वचनं इतरैः ( ? सर्वैः ) कार्य्यमित्येतद्आदरार्थं पुनर्वचनम् ॥ १९१ ॥

CHARCHA

1. कार्य्यचिन्तकाः—चिन्ति+ण्वुल्=चिन्तकः thinker and examiner. कार्य्याणां चिन्तकाः, शेषषष्ठी तत। Nom. भवेयुः। This is in keeping with राज्ञः सभासद् as धर्मज्ञाः, श्रुताध्ययनसम्पन्नाः etc. as said in sl. 2 ante.

2. Remark—The last line is a repetition of "कर्त्तव्यं वचनं सर्वैः समूहहितवादिनाम" ( in sl. 188 ante ) The repetition is for emphasis and to show that this is essential in गणतन्त्र। This is imperative, this is to be followed

192 The laws of these धर्मज्ञ good officers should be followed by all others high and low.

श्रेणिनैगमपाखण्डिगणानामप्ययं विधिः।
भेदं चैषां नृपोरक्षेत् पूर्ववृत्ति च पालयेत् ॥ १९२ ॥

Prose—श्रेणि-नैगम-पाखण्डिगणानामपि अयं विधिः भवेत। एषां भेदं ( आचार-धर्ममतादिभेदं ) च नृपः रक्षेत्। एषां पूर्ववृत्ति च नृपः पालयेत ( पालने यत्नं कारयेत् )।

Beng—একপণ্য ব্যবসায়ী শ্রেণিগণের, নিগম বা বেদের প্রামাণ্য-বাদিগণের, বেদের প্রামাণ্য অমননকারি জৈন বৌদ্ধাদিগণের এবং



আয়ুধীয়কর্মোপজীবিগণেরও ইহাই কর্ত্তব্য ( অর্থাৎ ইহারা সকলেই ধর্মজ্ঞ সমূহ হিতবাদিদের বচন পালন করিবে )। রাজা এদের বিভিন্ন ধর্মমত ও বৃত্তি রক্ষা করিবেন।

Eng—The above rules and words of 'Samuhahitavadin' is to be observed by all traders of the same line, by all following vedic teachings, by all who do not obey vedic authority, or by all who subsist on weapons and on arts thereon ; the difference however of their customs and religious views should be kept in tact by the king ; the king should also cause them follow their prior modes of subsistances [ N. B.—These being done a गणतन्त्र will pull on well, otherwise fued etc will arise due to संविद्व्यतिक्रम ].

Mita—इदानीं त्रैविद्यानां प्रतिपादितं धर्मं श्रेण्यादिषु अतिदिशन् आह—एकपण्यशिल्पोपजीविनः "श्रेणयः", "नैगमाः"—ये वेदस्य आप्तप्रणीतत्वेन प्रामाण्यमिच्छन्ति पाशुपतादयः। पाषण्डिनः—ये वेदस्य प्रामाण्यमेव न इच्छन्ति नग्नाटकसौगतादयः, "गणो" व्रातः आयुधीयकर्मोपजीविनाम—एषां चतुर्विधानामप्ययं विधिः [ यो "निजधर्माविरोधेन" इत्यादिना ( sl 186 ) प्रतिपादितः ]। एतेषां श्रेण्यादीनां भेदं धर्मव्यवस्थानं नृपोरक्षेत्। पूर्वोपात्तां वृत्तिं च पालयेत ॥ १९२ ॥ इति संविदव्यतिक्रमप्रकरणम् ॥

[illegible]CHARCHA

1. श्रेणि[illegible] meanings see Mitakshara. The विधि or वचन of [illegible] समूहहितवादिन् officers ( त्रैविद्य officers as stated in sl. 186—who will be so, make others too so ) should be carried [illegible] to all श्रेणि, नैगम etc. गणतन्त्र rules

should be obeyed by all within the kingdom whatever be his trade or subsistence or whatever be his धर्ममत etc. The king is to keep in tact their different religious views and customs and he should so arrange, as all can carry on his usual and prior modes of earnings etc. This shows a secular गणतन्त्र at that hoary past time even. In पालयेत् there should be a णिच् after पालिधातु or it is अन्तर्भावित ण्यर्थ, for king is to cause them follow their पूर्ववृत्ति by such arrangements.

## अथ वेतनादानप्रकरणम्

[ The section on giving and taking of wages, non-payment of wages &c. ]

193. One must not give up work by taking wages etc.

गृहीतवेतनः कर्मत्यजन् द्विगुणमावहेत् ।
अगृहीते समं दाप्यो भृत्यै रक्ष्य उपस्करः ॥ १९३ ॥

Prose—गृहीतवेतनः कर्मत्यजन् द्विगुणम् आवहेत् (स्वामिने दद्यात्)। वेतने अगृहीते सति (स्वामिने) समं (वेतनसमं धनं) दाप्यः (राज्ञा भृत्यः दाप्यः)। भृत्यैः स्वामिनः उपस्करः (यत्नयोग्यं लाङ्गलादि गुणवत् द्रव्यं) रक्ष्यः (रक्षणीयः)।

Beng.—কেহ যদি নির্দিষ্ট বেতন লইয়া নির্দিষ্ট বা অঙ্গীকৃত কাজ ছাড়িয়া দেয়, তবে সে স্বামীকে দ্বিগুণ অর্থ (দণ্ড স্বরূপ) দিবে। আর বেতন না লইয়া যদি কেহ অঙ্গীকৃত (নির্দিষ্ট) কর্ম ছাড়িয়া





দেয় তবে রাজা তাকে দিয়া বেতনসম অর্থ স্বামিকে দেওয়াইবেন। কারণ ভৃত্যেরই উচিত প্রভুর উপস্কর অর্থাৎ লাঙ্গলাদি গুণযুক্ত দ্রব্য রক্ষা করা।

Eng.—If one give up stipulated work by taking wages in advance, then he is to give to his master twice of the wage's sum ; but if one gives up a stipulated work though he has not taken wages already, still he is to pay a fine of sum equal to his wages ; for a servant is to protect his master's ploughs etc that are valuable to him.

Mita—सम्प्रति वेतनस्य अनपाकर्माख्यं व्यवहारपदं प्रस्तूयते (now is being stated the व्यवहारपद known as non-trangression of wages)। तत् स्वरूपं च नारदेन उक्तम्—"भृत्यानां वेतनस्योक्तो दानादानविधिक्रमः। वेतनस्यानपाकर्म तद्विवादपदं स्मृतम्"। अस्यार्थः—भृत्यानां वेतनस्य वक्ष्यमाणश्लोकैरुक्तो दानादानविधिक्रमो यत्र बिवादपदे तद्वेतनस्य अनपाकर्म इत्युच्यते, तत्रनिर्णयमाह—"गृहीतं वेतनं येनासौ स्वाङ्गीकृतं कर्मत्यजन् अकुर्वन् द्विगुणां भृतिं स्वामिने दद्यात्। यदा पुनरभ्युपगतं कर्म अगृहीते एव वेतने त्यजति तदा समं"—यावद्वेतनम्-अभ्युपगतं तावदेव दाप्यः न द्विगुणम्। [ यद्वा अङ्गीकृतां भृतिं दत्त्वा वलात्कारयितव्यः—"कर्माकुर्वन् प्रतिश्रुत्य कार्य्यः दत्त्वाभृतिं वलात्" इति नारदवचनात्। भृतिरपि तेनैवोक्ता—"भृत्याय वेतनं दद्यात् कर्मस्वामी यथाक्रमम्। आद्ये मध्ये अवसाने वा कर्मणो यद्विनिश्चितम्" इति ]। "तैश्चभृत्यैः उपस्करः" उपकरणं लाङ्गलादीनां प्रग्रहयोक्त्रादिकं यथाशक्त्या रक्षणीयम्। इतरथा कृष्यादिनिष्पत्त्यनुपपत्तेः ॥ १९३ ॥

### CHARCHA

1. आवहेत्—आ+वह+लिङ् यात्। should pay. आ+वह has the sense of दा here। स्वामिने दद्यात इत्यर्थः। द्वौ गुणौ यस्मिन्—बहुव्रीहि। तादृशं धनमावहेत्।

2. समम्—It means here वेतनसमं धनम्। राज्ञा, समं धनं स भृत्यः दाप्यः। This fine is to compensate the master for the loss due to servant's not working. Ant it is servant's duty to protect master's useful objects like plough etc. उप+कृ+ट कर्त्तरि=उपस्करः that object which does our good ; imparts गुण to us. The कर्त्तरि ट comes by the rule "कृञो हेतुताच्छील्यानुलोम्येषु"। and सुट in the sense of प्रतियत्नः or गुणाधान comes by the rule "उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु च"।

164. Rule in case of servants doing works by not-settling of dues.

दाप्यस्तु दशमं भागं वाणिज्यपशुशस्यतः ॥
अनिश्चित्य भृतिं यस्तु कारयेत् स महीक्षिता ॥ १९४ ॥

Prose—यस्तु भृतिं अनिश्चित्य (भृत्यं भृत्येन वा) कर्मकारयेत्, स महीक्षिता (राज्ञा) वाणिज्यपशुशस्यतः दशमं भागं (भृत्यः) दाप्यः।

Beng.—যে কর্মস্বামী বেতন নির্দ্ধারণ না করিয়া ভৃত্য দ্বারা কর্ম করায়, সে বাণিজ্য, পশু বা ক্ষেত্রশস্য হইতে লব্ধধনের দশ ভাগের একভাগ রাজাজ্ঞায় ভৃত্যকে দিবেন।

Eng.—One who makes servants work by not settling any amount by way of wages then the king should make him pay the servant one-tenth part of his income from trade, cattle or paddy-field.

Mita—भृतिमपरिच्छिद्य यः कर्म कारयति तं प्रत्याह—"यस्तु स्वामी" बणिक् गोमी क्षेत्रिको वा अपरिच्छिन्नवेतनमेव भृत्यं कर्म कारयति स तस्माद्



वाणिज्यपशुसस्यलक्षणात् कर्मणो यल्लब्धं तस्य दशमं भागं भृत्याय महीक्षिता राज्ञा दापनीयः॥ १९४॥

CHARCHA

1. वाणिज्यपशुशस्यतः—वाणिज्यश्च पशुः च शस्यश्च, द्वन्द्व। ततः पञ्चम्यर्थे वा पञ्चमीस्थाने तसिः। Both सस्य and शस्य are correct. वणिजोभाव इति वाणिज्यम् (ब्राह्मणादित्वात् ष्यञ्) acc. to Bhattoji. Acc. to Kasika वणिजोभावः gives वणिज्यम् with य by the varttika "दूतवणिग्भ्याञ्च"। Then वणिज्यमेव वाणिज्यम् (स्वार्थे अण्)।

2. महीक्षिता—महीं क्षियति (क्षितुदादि निवासगत्योः) इति महीक्षित् (मही+क्षि+क्विप्)। तन। अनुक्त प्रयोजककर्त्तरि ३या। स धनं ददाति=महीक्षित् तं धनं दापयति=महीक्षिता स धनं दाप्यते वा दाप्यः॥ We may here have both स भृत्यं भृत्येन् वा कर्मकारयेत् by the rule "हृक्रोरन्यतरस्याम्"।

195. Wages acc. to master's will when servants neglect to sell master's goods in time.

देशं कालञ्च योतीयाल्लाभं कुर्य्याच्च योऽन्यथा।
तत्रस्यात्स्वामिनश्छन्दोऽधिकं देयं कृतेधिके ॥ १९५ ॥

Prose—यः देशं (योग्यस्थान) कालं च (पण्यविक्रयादिकालं) अतीयात् (विक्रयमकृत्वा समयं अतिक्रामेत्), वा य अन्यथा कुर्य्यात् (लाभहीनं कुर्य्यात्), तत्र स्वामिनः (भृतिदाने) छन्दः स्यात् (स्वामी स्वेच्छया विचार्य्य भृतिं दद्यात्) (लाभे) अधिके कृते भृत्याय अधिकं देयं (स्वामिना देयम्)।

Beng.—যে ভৃত্য পণ্যাদিবিক্রয়ের উপযুক্ত স্থান ও দেশ বিচার না করিয়া সময় কাটাইয়া দেয়, অথবা যে লাভের ব্যতিক্রম ঘটায়, তখন সে বিষয়ে ভৃতিদান স্বামীর ইচ্ছামতন হইবে। কিন্তু যদি ভৃত্য

অধিক লাভ দেখায় তবে সেক্ষেত্রে স্বামী ভৃত্যকে স্বীকৃত ভৃতি অপেক্ষায় অধিক দিবেন।

**Eng.**—The servant who passes over the right place and right time by not selling master's good, or who causes a fall in master's regular profit, in that case master will pay wages according to his own discretion ; but if a servant shows a better profit then master is to pay him more than the stipulated wages.

Mita—अनाज्ञप्तकारिणं प्रत्याह—( this is said to a servant doing not as directed ) यस्तु भृत्यः पण्यविक्रयाद्युचितं देशं कालं च पण्यविक्रयाद्यकुर्वन् दर्पादिना उल्लंघयेत्, तस्मिन्नेव वा देशे काले च लाभम् "अन्यथा" व्ययाद्यतिशयसाध्यतया "हीनं" करोति, तस्मिन् भृतके भृतिदानं प्रति स्वामिनश्छन्द इच्छा भवेत्। यावदिच्छति तावत् दद्यात्, न पुनः सर्वामेव भृतिमित्यर्थः। यदा पुनः देशकालाभिज्ञतया अधिको लाभः कृतः तदा पूर्वपरिच्छिन्नाय भृतेरधिकमपि धनं स्वामिना भृत्याय दातव्यम् ॥ १९५ ॥

## CHARCHA

1. अतीयात्—अति+इ+लिङ्यात्। Shall pass over. nom. यः।
2. तत्र—i e, तत्र भृतिदानविषये।
3. कृतेऽधिके—construe—अधिकेलाभे कृते सति।

**196.** Wages of persons should be acc. to one's work in a matter.

> यो यावत् कुरुते कर्म तावत्तस्यतुवेतनम्।
> उभयोरप्यसाध्यं चेत् साध्ये कुर्य्याद् यथाश्रुतम् ॥ १९३ ॥

**Prose**—उभयोरपि असाध्यं कर्म यो यावत् कुरुते तावत् तस्य वेतनं भवेत्। साध्ये कर्मणि साधिते यथाश्रुतं वेतनं कुर्य्यात् ( दद्यात् )।



**Beng.**—যদি কোন কঠিন কর্ম্ম উভয়ে করে বা উভয়েরও অসাধ্য হেতু বহু লোক করে, তখন ( কার্য্যসমাপ্তি হোক্ আর নাই হোক্ ) যে যতটুকু কাজ করিবে সে ততটুকু বেতন পাইবে। [ বেতন হইতে বঞ্চিত হইবে না ]। উভয়কর্ত্তৃক সাধ্য কর্ম্ম সাধিত হইলে উভয়কে যথাশ্রুত বা যথাপ্রতিজ্ঞাত বেতন সমভাবে ভাগ করিয়া দিবেন।

**Eng.**—If a work hardly to be done by both two servants is somehow done by them, or if it is done by many or not done fully then even the wages should be according to the work done by each one of them ; and in a work accomplished by both two, the promised wages should he equally divided among the two. [ N. B.—none will thus be deprived of wages ].

Mita—अनेकभृत्यसाध्यकर्मणि प्रतिदानप्रकारमाह—यदा पुनरेकमेव कर्म नियतवेतनम् उभाभ्यां क्रियमाणम् उभयोरप्यसाध्यं चेत्, व्याध्यभिभवात् उभाभ्याम्। अपिशब्दात् बहुभिरपि यदि न परिसमापितं तदा यो भृत्यः यावत् कर्म करोति तावत्तस्मै तत्कृतकर्मानुसारेण मध्यस्थकल्पितं वेतनं देयम्, न पुनः समम्। ( न चावयवशः कर्मणि वेतनस्य अपरिभाषितत्वात् अदानमिति-मन्तव्यम् )। साध्ये तूभाभ्यां कर्मणि निर्वर्त्तिते "यथाश्रुतं" यावत् परिभाषितं तावत् उभाभ्यां देयम्। न पुनः प्रत्येकं कृत्स्नं वेतनं, नापि कर्मानुरूपं परिकल्प्य देयम् ॥ १९६ ॥

## CHARCHA

1. उभयोः—"कृत्यानां कर्त्तरि वा" इति षष्ठी in connection with असाध्य। The work which is not easily done by उभय or even if by बहु, or even if the work is not finished, still वेतन will be acc. to work done by each for this.

2. यथाश्रुतम्—श्रुत is प्रतिश्रुत here (कर्मणि वा भावे क्त)। If कर्मणि=यथा (यादृशं) श्रुतम्, सुप्सुपा (of कर्मधा class). if भावे क्त, then श्रुतस्य अनतिक्रम इति यथाश्रुतम्, अव्ययीभाव। or यथा is योग्यता। Then यथा श्रुतं तत् यथा तथा अव्ययी by "यथा असादृश्ये"। Here कुर्यात् means दद्यात्। धातूनामनेकार्थत्वात्। "सर्वधात्वर्थानुवादः करोतिना भवति"

197. Fine in cases of negligence of carrier.

अराजदैविकम् नष्टं भाण्डं दाप्यस्तु वाहकः।
प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम्॥ १९७॥

Prose—भाण्डं (द्रव्ययुक्तभाण्डं) अराजदैविकं (यथातथा) नष्टं चेत् वाहकः दाप्यः। प्रस्थानविघ्नकृत् (माङ्गलिकद्रव्यप्रापने विघ्नकृत्) च (वाहकः) द्विगुणां भृतिं प्रदाप्यः।

Beng.—রাজজন্য বা দৈবকৃত বিপদ্ ছাড়াই যদি বাহকদোষে দ্রব্যযুক্ত ভাণ্ড নষ্ট হয়, তবে বাহককে নষ্ট দ্রব্যমূল্যানুসারে ধন দিতে হইবে। আর স্বীকৃত হইয়া, বিবাহাদি মাঙ্গলিক দ্রব্য লইয়া প্রস্থানকার্য্যে যদি বাহক বিঘ্ন উৎপাদন করে, তবে সেই বাহক নিৰ্দ্ধারিত বেতনের দ্বিগুণ মূল্য দণ্ডস্বরূপ দিবে।

Eng.—If a casket of articles is destroyed without any royal revolution etc. or divine distress (through carrier's fault), then the carrier is to pay the value thereof; if again (after promise) a carrier (of auspicious articles of marriage etc.) causes hindrances by delay or denial, then he is to be fined twice as much as his stipulated remuneration.

Mita—आयुधीयभारवाहकौ प्रत्याह—"न विद्यते राजदैविकं यस्यभाण्डस्य तत्तथोक्तम्"। तद् यदि प्रमादहीनतया वाहकेन नाशितं तदा नामानुसारेण



असौ तद्भाण्डं दापनीयः। [तदाह नारदः—"भाण्डं व्यसनमागच्छेत् यदि वाहकदोषतः। दाप्यो यत्तत्र नश्येत्तु दैवराजकृताद्दृते" इति]। यः पुनः विवाहाद्यर्थं मङ्गलवति वासवे प्रतिष्ठमानस्य तत् प्रस्थानौपयिकं कर्म प्राग् अङ्गीकृत्य तदानीं "न करिष्यामि" इति प्रस्थानविघ्नमाचरति तदासौ द्विगुणां भृतिं दाप्यः। अत्यन्तोत्कर्षहेतुकर्मनिरोधात् (the twice fine is for obstructing a very prosperity-promoting work) ॥ १९७॥

## CHARCHA

1. अराजदैविकम्—देवे भवम् इति देव+ठञ्=दैविकम् (?) divine। राजन् by लक्षणा here means राजसम्बन्धि as राष्ट्रविप्लव। राजा (राजसम्बन्धि) च दैविकम् च। राजदैविकम्, समाहारद्वन्द्व। न तथा। तत् यथा तथा। adv. qual. नष्टम्। or support it as in गुरुलाघवम् (see ante and our sak v); or better राजा च देवश्च राजदेवौ। इतरेतर। राजदेवयोः भवम् (अध्यात्मादि ठञ्)=राजदैविकम् with उभयपदवृद्धि as in पारलौकिकम् आधिदैविकम् etc. by the rule "अनुशतिकादीनोञ्च"। See राजदैविकतस्करै in sl. 66. Mita seem to take if as an adj. of भाण्डम्।

2. भाण्डम्—It is द्रव्ययुक्तभाण्ड by लक्षणा। उक्त कर्म of दाप्यः। or thus वाहकः भाण्डं ददाति, राजा वाहकं भाण्डं (स्वामिने) दापयति। In v. ch. it is राज्ञा वाहकः भाण्डं दाप्यते वा दाप्यः। वाहक has उक्ते प्रयोज्यकर्मणि १मा।

3. प्रस्थान etc.—प्रस्थाने (प्रस्थानकाले) विघ्नकृत्। पूर्वं स्वीकृत्य अधुना न करिष्यामि" इति मङ्गलादिकर्मविघ्नकृत इत्यर्थः। विघ्नं करोतीति कर्त्तरि क्विप्। Qual. वाहकः।

198. Fines in cases of abandoners while doing works.

प्रक्रान्ते सप्तमं भागं चतुर्थं पथि संत्यजन् ।
भृतिमर्धपथे सर्वां प्रदाप्यस्त्याजकोपि च ॥ १९८ ॥

Prose—प्रक्रान्ते ( कर्म कर्त्तुम् आरब्धे ) संत्यजन् सप्तमं भागं ( वेतनस्य ), पथि संत्यजन् ( वेतनस्य ) चतुर्थं भागं प्रदाप्यः। अर्धपथे संत्यजन्, सर्वां भृतिं प्रदाप्यः। त्याजकः अपि ( एवं अत्यजन्तं त्याजयन् अपि स्वामी ) प्रदाप्यः।

Beng.—কর্ম বা প্রস্থানকর্ম আরম্ভ করিয়াই পরিত্যাগ করিলে বেতনের সাতভাগের একভাগ। পথিমধ্যে বা কর্ম করিতে করিতে কর্ম ত্যাগ করিলে বেতনের চারিভাগের একভাগ এবং মাঝ পথে আরব্ধ কর্ম পরিত্যাগ করিলে সমস্ত নির্দ্ধারিত বেতন কর্মস্বামীকে দিবে। আবার যে কর্মকারীকে জোর করিয়া ছাড়ায় সেও ঈদৃশ দণ্ডভাগী।

Eng.—One who abandons an undertaken work will be fined one-seventh of his stipulated wages; one who abandons work after proceeding to some extent then he is to pay a fine of onefourth of his settled wages; again if one abandons work when the middle of it is over or when middle way is gone over then the abandoner is to be fined with his whole promised wages. Similarly a master forcibly making the willing servant desist from work, will be so fined.

Mita किञ्च—"क्रान्ते" अध्यवसिते प्रस्थाने स्वाङ्गीकृतंकर्मयस्त्यजति, असौ भृतेः सप्तमं भागं दाप्यः। [ नन्वत्रैव विषये "प्रस्थानविघ्नकृत्" इत्यादिना द्विगुण" भृतिदानमुक्तम्, इदानीं सप्तमोभाग इति विरोधः। उच्यते, भृत्यन्तरोपादानावसरसम्भवे स्वाङ्गीकृत्य यस्त्यजति तस्य सप्तमोभागः। यस्तु प्रस्थान-



काले एव त्यजति तस्य द्विगुणभृतिदानम् इत्यविरोधः। - [ In "प्रस्थानविघ्नकृत्", a fine of twice of the wages is said of one who disagress at the last moment, but here 1/7 fine is of one who secedes in a moment when another one may be available —so there is no विरोध of this statement with the prior one ]। य पुनः पथि प्रक्रान्ते गमने वर्त्तमाने सति कर्मत्यजति स भृतेश्चतुर्थं भागं दाप्यः। अर्धपथे पुनः ( संत्यजन् ) सर्वां भृतिं दाप्यः। यस्तु त्याजकः स्वामी कर्म अत्यजन्तं त्याजयति पूर्वोक्तप्रदेशेषु असावपि पूर्वोक्तसप्तमभागादिकं भृत्याय दापनीयः। [ By parity of reasoning if a master forcefully makes a willing undiseased servant leave his stipulated work then the master too is to be similarly fined ] [ एतच्च अव्याधितादिविषयम् "भृत्योऽनार्त्तो न कुर्याद् यः दर्पात् कर्मयथोचितं स दन्ड्यो कृष्णलान्यष्टौ न देयं तस्य वेतनम्" इति मनुवचनात्। यदा पुन-र्व्याधिनोपगते अन्तरितदिवसान् परिगणय्य पूरयति तदालभते एव वेतनम्। आर्त्तस्तु कुर्यात् स्वस्थः सन् यथाभाषितमादितः। स दीर्घस्यापि कालस्य स्व लभते वैवेतनम्" इति मनुस्मरणात्॥ यस्तु अपगतव्याधिः स्वस्थ एव आलस्यादिना स्वारब्धं कर्माल्पोनं न करोति, परेण वा न समापयति, तस्मै वेतनं न देयमिति। यथाह मनुः—"यथोक्तमार्त्तः स्वस्थो वा यस्तत् कर्मन कारयेत्। न तस्य वेतनं देयम् अल्पोनस्यापि कर्मणः" इति ]॥ १९८॥ इति वेतनादान प्रकरणम्।

## CHARCHA

1. प्रक्रान्ते—प्र+क्रम+क्त आदिकर्मणि। Adj. used substantively. कर्तुमारब्धे। आरब्धमात्रे कर्मणि वा इत्यर्थः॥ Then पथि संत्यजन् means abandoning when some progress is made or some way is gone over.

2. अर्धपथे—अर्द्ध पथः इति अर्धपथ, and not पथ्यर्ध, एकदेशितत्। अर्द्ध meaning exact helf is neuter (अर्द्ध समांशे क्लीवम्); then such अर्द्ध takes पूर्वनिपात by the rule "अर्धं नपंसकम्"। Lastly पथिन् becoms पथ with समासान्त अ by the rule "ऋक् पूरव् धः पथामानक्षे"।

3. त्याजकः—त्याजयति इति त्याजकः। a master who makes a willing servant give up work. Such a master is also to be similarly fined.

4. Remark—वेतनादान here thus includes all about वेतनस्य दानम्, वेतनस्य अदानं, वेतनस्य आदानम् as well.

## अथद्यूतसमाह्वयप्रकरण

[The section on gambling with dice (द्यूत) along with पण, and on playing with horse, dogs pigeons etc. with पण (समाह्वय)। दिव+क्त=द्यूत gambling सम्+आ+ह्वे श वा क (बाहुलकात्)=समाह्वयः play with animals; race etc. द्यूतं च समाह्वयश्च द्यूतसमाह्वयम्। समाहार by "अध्ययनतः अविप्रकृष्टाख्यानाम्" as योगक्षेमम्, संज्ञापरिभाषम्, इष्टापूर्त्तम्, राजदैविकम् etc. Thus Manu says" अप्राणिभिर्यत् क्रियते लोके तद्द्यूतमुच्यते। प्राणिभिः क्रियमाणस्तु विज्ञेयः समाह्वयः। Both gambling and races now-a-days with pledges are current. This is व्यसन। These evidently imply challenge. The Panini rule "स्पर्धायामाङः" also the उपसर्ग "सम" implies this. Bhanuji derives आह्वय (वा समाह्वय) thus—(i) आह्वानम् आह्वायनमिति आह्व with ड प्रत्यय। Then आह्वं याति इति आह्व+या+क घञर्थे=आह्वय। (ii) आह्वानम् इति आहूः with



क्विप (with सम्प्रसारण and दीर्घ)। तस्याः अयः गमनम् इति आह्वयः। We however have simplified the derivation by resorting to बाहुलक; the affix श is irregularly attached (बाहुलकात्) and in case of the affix क, आत्व is irregularly not applied ].

199. The dues of the holder of gambling house or द्यूतसमाधिकारिन्।

> ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम्।
> गृह्णीयाद् धूर्त्तकितवादितराद् दशकं शतम्॥ १९९॥

Prose—ग्लहे (पणकल्पिते द्यूते) शतिकवृद्धेः (शतपरिमाणाययुक्तात्) धूर्त्तकितवात् (सभास्थशठक्रीड़कात्। कितवोऽक्षदेवी), सभिकः (द्यूतसभाधिकारी) पञ्चकं शतं (शते पञ्चपणायं) गृह्णीयात्। इतरात् (अन्यक्रीड़कात्) दशकं शतं गृह्णीयात्। [N.B.—पञ्चकं and दशकं qualifies शतम् here.]

Beng.—(পরস্পর পণ ধরিয়া যে অক্ষ ক্রীডা বা পাশাখেলা হয় তাহাকে "গ্লহ" বলা হয়)। এই পণযুক্ত পাশকক্রীডায়, সভাধিকারীর ধূর্ত্ত বা শঠ পাশ ক্রীড়ক যদি জয়ী হইয়া শতপরিমিত মুদ্রা আয় করে, তবে সভাধিকারী নিজে শতকরা পঞ্চভাগ লভ্যাংশ নিবেন। অন্য প্রতিদ্বন্দ্বী খেলোয়াড় বিজয়ী হইলে তার নিকট হইতে জিতদ্রব্যের শতকরা দশভাগ নিবেন।

[N.B.—शतमेव शतकम्। स्त्रियाम् शतिका।—शतिका वृद्धिर्यस्य, बहु। तस्मात्। Q धूर्त्तकितवात् ]।

Eng.—In gamblings with pledge or pawn, the winning cunning player (that resides in the gambling house there) i.e. such a gambler gaining a hundred coins will give to the owner or holder of gambling house or place (सभिक).

five percent of his profit; if the other party (other then the धूर्त्तकितव) wins then he will give ten per cent of his profit to the holder of the gambling house.

[N.B.—A legally licensed gambling house where playing at dice is with stakes, has a holder or owner thereof; he is called सभिक (सभा कितवनिवासार्था सभा यस्य अस्ति स सभिकः)। And the expert player there is called धूर्त्त कितव (कितव=अक्षदेवी); he resides there; others come to gamble there; if this धूर्त्तकितव wins there, he will pay 5 per cent to the सभिक; the outside players who come to gamble there is इतर क्रीड़क, if इतर क्रीड़क wins in gambling at stakes there, he is to pay ten per cent out of his gain in पाशकक्रीड़ा। This is in cases of licensed gambling houses or dens. Now-a-days too licenses are required in races, gambles lotteries and the like].

Mita—अधुना द्यूतसमाह्वयाख्यं विवादपदमधिक्रियते, तत् स्वरूपं नारदेनाभिहितम्—"अक्षवध्रशलाकाद्यैः देवनं जिह्मकारितम्। पणक्रीडावयोभिश्च पदं द्यूतसमाह्वयम्"॥ इति। (अक्षाः पाशकाः, वध्रश्चर्मपट्टिका, शलाका दण्डादिमय्यो दीर्घाचतुरस्राः, आद्यग्रहणाच्च तुरङ्गादिक्रीड़ासाधनं करितुरङ्गरथादिकं गृह्यते। तैः अप्राणिभिर्य्यद् देवनं क्रीड़ा पणपूर्विका क्रियते। तथा वयोभिः पक्षिभिः कुक्कुटपारावतादिभिः, च-शब्दात् मेषमहिषादिभिश्च प्राणिभिर्या पणपूर्विकाक्रीडा क्रियते, तदुभयं यथाक्रमेण द्यूतसमाह्वयाख्यं विवादपदम्। द्यूतञ्च समाह्वयश्च द्यूतसमाह्वयम्। तदुक्तंमनुना—अप्राणिभिर्य्य क्रियते तल्लोके द्यूतमुच्यते। प्राणिभिः क्रियमाणस्तु स विज्ञेयः समाह्वयः" इति)॥

तत्र द्यूतसभाकारिणो वृत्तिमाह—परस्परमंप्रतिपत्त्या कितवपरिकल्पितः पणो ग्लह इत्युच्यते [ग्लह is pledge in gambling by mutual



agreement and conducted by a knave player]। "तत्र ग्लहे", तदाश्रया शतिका शतपरिमिता तदधिकपरिमाणा वा वृद्धिर्यस्य असौ "शतिकवृद्धिः" तस्मात् धूर्त्तकितवात् "पञ्चकं शतमात्मवृत्त्यर्थं" सभिको गृह्णीयात्। "पञ्चपणा आयो यस्मिन् शते तत् पञ्चकं शतम्" ["तदस्मिन्वृद्ध्यायलाभ"—इत्यादिना कन् (see sl. 37 ante)]। जितग्लहस्य विंशतितमं भागं गृह्णीयादित्यर्थः॥ "सभा" कितवनिवासार्था यस्य अस्ति असौ सभिकः (ठन् प्रत्ययः) [कल्पिताक्षादिनिखिलक्रीडोपकरणः तदुपचितद्रव्योपजीवी सभापतिरुच्यते]। "इतरस्मात्" पुनरपि पूर्णशतिकवृद्धेः कितवात् दशकं शतं जितद्रव्यस्य दशमं भागं गृह्णीयादिति यावत्॥ १९९॥

## CHARCHA

1. ग्लहे—अधि ७मी। ग्रह+अप्=ग्लहः irregularly-र changes into ल। Also ग्रह+अप्=ग्लह (अप् in supercession of घञ irregularly)—this is by the rule "अक्षेषु ग्लहः"। Stake in glambling is ग्लह॥ for पञ्चकं शतम=i.e, five per cent see Mita and sl. 37 under "पञ्चकं शतम्"। यस्मिन् शते पञ्चपणा आयो दीयते, तत् पञ्चकं शतम् (with कन्) so we get दशकं शतम्। See Mita—शतम् प्रति पञ्चकं पञ्चपरिमाणं पञ्चाभागपरिमाणं आयः स्यात् इति फलितार्थः॥

200. Such gambling house holder should pay revenue to the king as well as जितद्रव्य to the winner.

स सम्यक् पालितो दद्याद्राज्ञे भागं यथाकृतम्।
जितमुद्ग्राहयेज्जेत्रे दद्यात् सत्यं वचः क्षमी॥ २००॥

Prose—स (सभिकः) सम्यक् पालितः (धूर्त्तकितवेभ्यः अक्षदेविभ्यः रक्षितः सन्) राज्ञे यथाकृतं भागं दद्यात्। जेत्रे जितमुद्ग्राहयेत् (जितं द्रव्यं

सभिक एव जेत्रे उद्ग्राहयेत् उद्धरेत् )। क्षमी ( भूत्वा ) सत्यं वचः दद्यात् ( विश्वासार्थं सत्यं वचः पालयेत् )। This is after विज्ञानेश्वर। see also note 3 for another better construction here.

Beng.—সভিক ও ধূর্ত্তসমন্বিত ক্রীড়াগেহে রাজা কর্ত্তৃক রক্ষিত হইয়া রাজাকে যথাকল্পিত অংশ শুল্কস্বরূপ দিবেন। আর ক্রীড়ায় জেতাকে পণে জিতদ্রব্য পাওয়াইয়া দিবেন। নিজে সহনশীল ও সত্যবাক্ হইবেন ( নচেৎ দ্যূতকারিগণ তাকে বিশ্বাস করিবেন না )। [ comp—"রক্ষানির্বিশে রাজভাগঃ শুল্কঃ"। শুল্ক is revenue ]।

Eng.—The gambling house holder or owner being duly protected by the king ( in the midst of such wily gamblers ), should pay the stipuleted or due revenue; should cause the winner get his pledge or pawn or stake ( money etc ); he is thus to be of tolerable disposition and be true to words. [ N B. This is evidently to create confidence among gamblers ].

Mita—एवं कृप्तवृत्तिना साभिकेन किं कर्त्तव्यमित्याह—य एवं कृप्तवृत्तिद्यूताधिकारी "स" राज्ञा धूर्त्तकितवेभ्यः रक्षितः, तस्मै राज्ञे यथा संप्रतिपन्नमंशं दद्यात्। तथा "जितं" यद्द्रव्यं "तद्उद्ग्राहयेत्" बन्धकप्रतिग्रहणेनासेधादिना च पराजितसकाशात् उद्धरेत। उद्धृत्य च तद्धनं "जेत्रे जयिने सभिको दद्यात्"। तथा क्षमी भूत्वा सत्यं वचः विश्वासार्थं द्यूतकारिणां दद्यात्। [ तदुक्तंनारदेन—"सभिकः कारयेत द्यूतं देयं दद्याच्च तत्कृतम्" ] ॥ २०० ॥

## CHARCHA

1. उद्ग्राहयेत्—उद्+ग्रह+णिच्+लिङ्यात्। Should realise. It is here प्राप्त्यर्थं and so आहरणार्थं as well.



2. सत्यं वचः—The reading सत्यवचाः ( सत्यं वचः यस्य, बहु ) is also seen here and is better; सभिकः should be so to gain confidence of all gamblers. सत्यं वचः दद्यात् in Mita is unidiomatic; better construe here—सभिकः जितम् द्रव्यं उद्ग्राहयेत् ( उद्धरेत् ) तत् द्रव्यं जेत्रे दद्यात्। अतश्च क्षमी सत्यवचाः स्यात्। Mita's उद्धृत्य तद् धनं जेत्रे सभिको दद्यात् is in favour of our construction. Mita's तथा क्षमी सत्यं वचः दद्यात् here is bad inidiom.

3. क्षमी—क्षम ( दिवादि )+घिणुन्=क्षमी। वा क्षमा अस्ति अस्य इति वा क्षमी। घिणुन् comes by "शमित्यष्टाभ्यो घिणुन्"। क्षमम्वादि=णिनि can give क्षमी as in वादिन्, हारिन् कामिन्, ध्वंसिन् etc.

201. The सभिक being unable to do this, the king will arrange for the winner's due in gambling.

प्राप्ते नृपतिना भागे प्रसिद्धे धूर्त्तमण्डले।
जितं ससभिके स्थाने दापयेदन्यथा न तु ॥ २०१ ॥

Prose—प्रसिद्धे ससभिके धूर्त्तमण्डले स्थाने, नृपतिना ( सभिकात् ) भागे प्राप्ते, राजा ( एव ) जितं ( पणं ) जेत्रे दापयेत्। अन्यथा ( प्रच्छन्ने सभिकरहिते ग्लहे ) जितपणं जेत्रे न दापयेत्।

Beng.—প্রসিদ্ধ সভিকযুক্ত ধূর্ত্তক্রীড়কসমন্বিত স্থানে, রাজা সভিক হইতে নিজভাগ পাইলে, ( সভিক অসমর্থ হইলে ) রাজাই জিতপণ জেতাকে দেওয়াইবেন। কিন্তু সভিকরহিত গুপ্ত গ্রহে জিতপণ, রাজা জেতাকে দেওয়াইবেন না।

Eng.—In a well-known gambling house where there is the owner of the house with the host of wily gamblers too and where the king has got his due from the "Sabhika"

( the owner ), there the king himself will make the winner get his pledgemoney ; but the king will not do so in a secret ( unlicensed ) gambling den

Mita—यदा पुनः सभिको दापयितुं न शक्नोति, तदा राजा दापयेत् इत्याह—"प्रसिद्धे" अप्रच्छन्ने राजाध्यक्षसमन्विते "ससभिके" सभिकसहिते कितवसमाजे, सभिकेन च राजभागे दत्ते, राजा ( एव ) धूर्त्तकितवमविप्रतिपन्नं जितं पणं दापयेत। "अन्यथा" प्रच्छन्ने सभिकरहिते अदत्तराजभागे द्यूते जितपणं जेत्रे न दापयेत ॥ २०१ ॥

## CHARCHA

1. प्रसिद्धे धूर्त्तमण्डले, ससभिके—all qualify स्थाने। धूर्त मण्डलं यत्र—वहु। or धूर्त्तानां मण्डलम्। तत अस्ति यत्र, मत्वर्थीय अच्। तस्मिन् ॥ सभिकेन सह वर्त्तमानं, बहु। तादृशे स्थाने ॥ In such well known licensed gambling houses.

2. दापयेत—दा+णिच्+लिङ्यात। The king will do this in lincersed dens when the सभिक is unable to realise pledge-money

202 The spectators these are witnesses as to the result ; adopters of underhand means will be punished there.

द्रष्टारो व्यवहाराणां साक्षिणश्च त एव हि ।
राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिदेविनः ॥ २०२ ॥

Prose—( तत्र ) ये व्यवहाराणां ( द्यूतव्यवहाराणां ) द्रष्टारः, ते एव हि ( तत्र ) साक्षिणः। कूटाक्षोपधिदेविनः ( छलनादिना मणिमन्त्रौषधादिना च असदुपायेन क्रीड़ाकारिण ) राज्ञा सचिह्नं ( गात्रे कुक्कुरपदचिन्हेन अङ्कयित्वा ) निर्वास्याः।





Beng.—সেখানে দ্যূতাক্রীড়ার পরিদ্রষ্টৃগণই সাক্ষিহিসাবে গণ্য হয় ; অন্য কোন প্রকার সাক্ষীর প্রয়োজন নাই। যারা পাশক-ক্রীড়ারসাধক দুটি বিষয়ে বা মন্ত্রৌষধিপ্রয়োগদ্বারা অসদুপায়ে ক্রীড়া করে, রাজা তাদের গাত্রে কুকুরের পায়ের ছাপ অঙ্কিত করিয়া রাষ্ট্র হইতে বাহির করিয়া দিবেন।

Eng.—The spectators in such gambling houses are the witnesses there ; those gamblers who adoptunderhand means with dices or with magic herbs, should be exiled or banished from the kingdom after stamping dog's foot-prints on their bodies.

Mita—जयपराजयविप्रतिपत्तौ निर्णयोपायमाह—द्यूतव्यवहाराणां द्रष्टारः सभ्यास्ते एव, कितवा एव राज्ञा नियोक्तव्याः। न तत्र "श्रुताध्ययनसम्पन्ना" इत्यादिनियमोस्ति। साक्षिणश्च द्यूते द्यूतकारा एव कार्य्याः। न तत्र "स्त्रीवाल-वृद्धकितव" ( sl. 70 ) इत्यादिनिषेधोस्ति ॥

क्वचिद्द्यूतं निषेद्धुं दण्डमाह—"कूटेरक्षादिभिः उपधिना च मतिवञ्चनहेतुना मणिमन्त्रौपधिना ये दीव्यन्ति तान् श्वापदादिना अङ्कयित्वा राजा स्वराष्ट्रात् निर्वासयेत्। [ नारदेन तु निर्वासने विशेष उक्त—"कूटाक्षदेविनः पापान् राजाराष्ट्रात् विवासयेत्। कण्ठे अक्षमालामासज्य स ह्येषां विनयः ( शिक्षा ) स्मृतः॥ यानि च मनुवचनानि द्यूतनिषेधपराणि—"द्यूतं समाह्वयंचैव यः कुर्य्यात् कारयेत् वा। तान् सर्वान् घातयेत् राजा शूद्रांश्च द्विजलिङ्गिनः॥" इत्यादीनि तान्यपि कूटाक्षदेवनविषयतया राजाध्यक्षसभिकरहितद्यूतविषयतया च योज्यानि ॥ २०२ ॥

## CHARCHA

1. सचिह्नम्—adv. qual निर्वास्याः ( निर्+वस+णिच्+यत् कर्मणि )। The चिह्न is of dog or dog's footprints, as suggested in Mita.

2. कूटाक्ष etc—अक्ष is dice here. उपधि is false plea or here प्रतिबन्धनाकारकमन्त्रौषधि च। कूटं अक्षं। कूटाक्षं च उपधिश्च। ताभ्यां दीव्यन्ति इति कूटाक्षोपधिदेविनः (with णिनि साधुकारिणि वा ताच्छील्ये)। उक्तकर्म of निर्वास्याः। Here compare—"दुरक्षान् दीव्यता राज्ञा राज्यमात्मा वयं वधूः। नीतानि पणतां नूनम्—"in kir XI. 47. राज्य is usually the royal seat of administration; and राष्ट्र is the whole area up to which a king has jurisdiction.

203. Gambling should be watched by an officer. These laws of gambling apply in समाह्वय also

> द्यूतमेकमुखं कार्य्यं तस्करज्ञानकारणात्।
> एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये ॥ २०७ ॥

Prose—तस्करज्ञानकारणात् (द्यूते तस्करकार्य्य-ज्ञानपर्य्यालोचनात् हेतोः) द्यूतम् एकमुखं (एकप्रधानाधीनं) कार्य्यम्। समाह्वये (समाह्वयाख्ये) प्राणिद्यूते अपि एष एव विधिः ज्ञेयः।

Beng—দ্যূতেই তস্করত্ব দেখা যায় (পাশক্রীড়করাই তস্করতা অবলম্বন করে) এই পর্য্যালোচন করিয়াও এই কারণেই দ্যূতক্রীড়াতে রাজা এক প্রধানরাজপুরুষকে রাখিবেন। সমাহ্বয়াখ্য প্রাণিদ্যূতে (অশ্ব, কুকুর, মেষাদির রেস্‌খেলায়) ও এই নিয়ম।

Eng.—To detect the doings of a thief in gamblings, the king should appoint an officer there; and this is also the procedure in dog, horse races etc. going by the name of "Samahvyaya".

Mita—किञ्च यत् पूर्वोक्तं द्यूतं तत् "एकमुखं" एकं मुखं प्रधानं यस्य द्यूतस्य तत्तथोक्तं कार्य्यम्। राजाध्यक्षाधिष्ठितं राज्ञा कारयितव्यमित्यर्थः। "तस्कर-



ज्ञानकारणात्" तस्करज्ञानरूपं प्रयोजनं पर्य्यालोच्य प्रायशः चौर्य्यार्जितधना एव कितवा भवन्ति, अतश्चौरविज्ञानार्थम् (द्यूतम्) एकमुखंकार्य्यम् ॥ द्यूतधर्मं समाह्वये अतिदिशन्नाह—"ग्लहेशतिकवृद्धेः" इत्यादिना यो द्यूतधर्म उक्तः, स एव प्राणिद्यूते मल्लमेषमहिषादिनिर्वर्त्त्ये समाह्वयसंज्ञके ज्ञातव्यः ॥ २०३ ॥

## CHARCHA

1. एकमुखम्- मुख is मुख्यपुरुष by लक्षणा। एकं मुखं मुख्यपुरुषो यत्र, बहु। pred to द्यूतम्; the king should do this (राज्ञा कार्य्यम्)।

2. तस्कर etc.—तस्कर is here तस्करता by लक्षणा। तस्करस्य ज्ञानम्। तस्य कारणम् (प्रयोजनं स्थानंवा)। तस्मात्। हेतौ ५मी। तस्करता is seen in gambling, for gamblers are thieves usually. To protect against this theft, and feint in gamblings a राजपुरुष should also be appointed in licensed gambling dens.

## अथ वाक्पारुष्यप्रकरणम्

[The section on using of high harsh or abusive words]

Mitakshara's Introductory words here—

Mita—इदानीं वाक्पारुष्यं प्रस्तूयते। तल्लक्षणं चोक्तं नारदेन—"देश-जातिकुलादीनां आक्रोशं न्यङ्गसंयुक्तम्। यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते" ॥ इति ॥ ["देशादीनामाक्रोशं न्यङ्गसंयुक्तम्"—उच्चैर्भाषणमाक्रोशः, न्यङ्गमवद्यं तद्भय-युक्तं यत्प्रतिकूलार्थं उद्वेगजनकार्थं वाक्यं तद् वाक्पारुष्यं कथ्यते।; तत्र "कलहप्रियाः गौडाः" इति देशाक्रोशः। "नितान्तं लोलुपाः खलुविप्राः" इति जात्याक्रोशः। "क्रूरचरिता ननु वैश्वामित्राः" इति कुलाक्षेपः। आदि-ग्रहणात् स्वविद्याशिल्पादिनिन्दया विद्वच्छिल्पादिपुरुषाक्षेपो गृह्यते। तस्य च दण्डतारतम्यार्थं निष्ठुरादिभेदेन त्रैविध्यमभिधाय तल्लक्षणं तेनैवोक्तं—"निष्ठुराश्लील

तीव्रत्वादपि तत् त्रिविधं स्मृतम्। गौरवानुक्रमात् तस्य दण्डोपिस्यात् क्रमादगुरुः। साक्षेपं निष्ठुरं ज्ञेयम् अश्लीलं न्यङ्गसंयुतम्। पतनीयैरुपाक्रोशैस्तीव्रमाहुर्मणीषिणः'') इति। तत्र "धिङ्मूर्ख जाल्ममित्यादिसाक्षेपम्। तत्र न्यङ्गमित्यसभ्यम्। अवद्यं भगिन्यादिगमनं तद्युक्तमश्लीलम्। "सुरापोसि" इत्यादि महापातकाधाक्रोशैर्युक्तं वचस्तीव्रम् ॥

Notes on Mita—Now is being stated harshness of words; its definition is thus given by Narada—"Loud defamatory unfavourable words with reference to some country, caste and lineage is called "वाक्पारुष्य"। आक्रोश is loud or high unfavourable utterance, न्यङ्ग is censurable or defamatory saying, and words containing both these with ref to देश, जाति or कुल—will be termed वाक्पारुष्य। This वाक्पारुष्य again is divided into three varieties by Narada as—(i) निष्ठुर harsh abuse (ii) अश्लील vulgar uncivilised words and (iii) तीव्र bitter accusation with ref. to महापातक। And punishment is gradually grave in these three cases. So this three divisions of वाक्पुरुष्य is stated in Narada smriti. [ N.B.—Dikshita in Siddhanta Kaumudi under शप्त आक्रोशे says "आक्रोशो विरुद्धानुध्यानम्" i. e., to think or say ill of others, to curse etc ].

204. Punishment in harsh abuses with ref. to सवर्ण।

सत्यासत्यान्यथास्तौत्रै न्यूनाङ्गेन्द्रियरोगिणाम्।
क्षेपं करोतिचेद् दण्ड्यः पणानर्धत्रयोदशान्॥ २०४ ॥

Prose—न्यूनाङ्ग-इन्द्रियरोगिणाम् सत्यासत्यान्यथास्तोत्रैः कश्चित् क्षेपं करोति चेत् स अर्धत्रयोदशान् ( सार्धत्रयोदशपणान् ) दन्ड्यः ( राज्ञा दण्ड्यः )।



Beng.—যদি কেহ ন্যূনাঙ্গ ( বা বিকলাঙ্গের ) বা ন্যূনেন্দ্রিয় ( নেত্রাদিরহিত ) বা রোগযুক্ত ব্যক্তিদের সম্বন্ধে সত্য, অসত্য বা অন্যথা ব্যাজস্তুতিবাক্যে নিন্দা করিয়া আঘাত দেয় তবে সে সার্দ্ধ ত্রয়োদশ পণ অর্থ দণ্ডে দণ্ডিত হইবে।

Eng.—If some one attacks, by true untrue or misrepresenting words of depreciation, any one deformed in limbs, in some-organs ( of eyes etc ), and a diseased one, then he is to be punished ( by the king ) with a fine of thirteen and half as much coins ( panas ). [ See Mita for सत्य वाक्य, असत्य वाक्य, अन्यथास्तुतिवाक्य used to pain other diseased or disabled ones ].

Mita—तत्र निष्ठुराक्रोशे सवर्णविषये दण्डमाह—"न्यूनाङ्गाः" करचरणादि-विकलाः, "न्यूनेन्द्रियाः" नेत्रश्रोत्रादिरहिताः, "रोगिणः" दुश्चर्मप्रभृतयः, तेषां "सत्येन असत्येन अन्यथास्तोत्रेण" च निन्दार्थया स्तुत्या [ यत्र नेत्रयुगलहीन "एपोन्ध" इत्युच्यते तत् सत्यम्। यत्र पुनश्च चक्षुष्मानेवान्ध इत्युच्यते तत् असत्यम्। यत्र विकृताकृतिरेव "दर्शनीयस्त्वम्" इत्युच्यते तदन्यथास्तोत्रम् ] एवंविधैः क्षेपं निर्भर्त्सनं करोति असौ अर्धाधिकत्रयोदशपणान् दण्ड्यः। [ "काणं वाप्यन्यथा खञ्जमन्यं वापि तथाविधम्। तथ्येनापि ब्रुवन् दाप्यो दण्डं कार्षापणावरम्"—इति यन्मनुवचनं तदतिदुर्वृत्तविषयम्। यदा पुनः पुत्रादयो मात्रादीन् शपन्ति तदा शतं दण्डणीया इति तेनैवोक्तम्। "मातरं पितरं जायां भ्रातरं श्वशुरं गुरुम्। आक्षारयन् शतं दाप्यः पन्थानं चाददगुरोः"—इति। एतच्च सापराधेषु मात्रादिषु गुरुषु निरपराधायां च जायायां द्रष्टव्यम् ॥ २०४ ॥

## CHARCHA

1. सत्यासत्य etc.—सत्य is true word. असत्य is untrue

word. अन्यथास्तोत्र is apparent स्तुति with निन्दा implied,. सत्यञ्च, असत्यञ्च अन्यथास्तोत्रं च। इतरेतर द्वन्द्व। तैः। करणे ३या।

2. न्यूनाङ्गेन्द्रिय etc.—अङ्गं च इन्द्रियञ्च अङ्गेन्द्रियम्, प्राण्यङ्गादित्वात् समाहारः। न्यूनं अङ्गेन्द्रियं येषाम्, वहु। ते च रोगिणश्च, कर्मधा। तेषाम्। सम्वन्धविवक्षया षष्ठी।...रोगिणां च क्षेपं करोति &c

3. अर्ध etc.—अर्ध here is सार्द्ध। "अर्धं समांशे क्लीवम्।" अर्ध (अर्धाधिकं) त्रयोदश अस्मिन् इति वहु—with समासान्त डच् प्रत्यय। See the rule "संख्याव्ययासन्नादूराधिकसंख्याः संख्येये" for samasa, and the rule" बहुव्रीहौ संख्येये डजबहुगणात्" for समासान्त डच् here. qual. पणान्। दण्ड is दुहादि द्विकर्मक, so its अप्रधान कर्म सः or असौ &c. understood is declared, and पणान् remains undeclared. राजा तं पणान् दण्डयेत्=राज्ञा सः पणान् दण्ड्यः (in v change)

205. Punishment in vulgar abuses.

अभिगन्तास्मि भगिनीं मातरं वा तवेति ह।
शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम्॥ २०५॥

Prose—"अहं ह (वै वा एव) तव भगिनीं मातरं वा अभिगन्तास्मि" इति शपन्तम् (अश्लीलम् उच्चारयन्तम्) राजा पञ्चविंशतिकं दमम् (दण्ड) दापयेत्। [N.B.—पञ्च पञ्चाधिका विंशतिः यस्मिन्। वहु with समासान्त कप्]।

Beng & Eng. Tran—Easy.

Mita—अश्लीलाक्षेपे दण्डमाह—"त्वदीयां भगिनीं मातरं वा अभिगन्तास्मि" इति शपन्तम् [अन्यां वा—"त्वज्जायामतिगन्तास्मि" इत्येवं शपन्तं] राजा" पञ्चविंशतिकं पणानां पञ्चाधिका विंशतिर्यस्मिन् दण्डे स तथोक्तस्तं दमं दापयेत्॥

206. Other दण्ड्य in वाक्पारुष्य in others clans or statuess.



अर्धोऽधमेषु द्विगुणः परस्त्रीषूत्तमेषु च।
दण्डप्रणयनं कार्य्यं वर्णजात्युत्तराधरैः॥ २०६॥

Prose—अधमेषु (स्वजात्यपेक्षयाऽधमेषु) अर्धः दण्डः। परस्त्रीषु उत्तमेषु च द्विगुणः दण्डः स्यात्। वर्णजात्युत्तराधरैः (क्रियमाणे वाक्पारुष्ये), (यथाविधि) दण्डप्रणयनं कार्य्यम्।

Beng.—অধমবর্ণে গালিগালাজ করিলে উত্তমবর্ণ অর্ধপরিমাণ (অর্থাৎ পূর্বোক্ত পচিশের অর্ধপরিমাণ অর্থাৎ ১২॥০ পণ) দণ্ড দিবে। পরস্ত্রীকে (সে উত্তম বা অধম হোক্) বা উত্তম ব্যক্তিকে গালি দিলে দ্বিগুণ (২৫ অপেক্ষায় দ্বিগুণ বা ৫০ পণ) দণ্ড হইবে। এইরূপ বর্ণ জাতির উত্তমাধমকর্তৃক পরস্পর গালিগালাজ হইলে, বর্ণজাতির তারতম্য অনুসারে দণ্ড প্রণয়ন বা বিধান করিবেন।

Eng.—If the abuse be on one of low class or status, then the high will pay a fine of half of twenty five pana (as said in the previous sloka), the abuse on another's wife or on another of a high one will invite a fine of twice as much; similarly in mutual abuses between high and low castes and classes, the fine will be according to high and low status of each.

Mita—एवं समानगुणेषु वर्णिषु दण्डमभिधाय विषमगुणेषु दण्डं प्रतिपादयितुमाह—"अधमेषु" आत्मापेक्षया न्यूनवृत्तादिगुणेषु "अर्धः दण्डः"। (पूर्ववाक्ये पञ्चविंशतेः प्रकृतत्वात् तदपेक्षया अर्धः सार्धद्वादशपणात्मको द्रष्टव्यः)। "परभार्य्यासु" पुनरविशेषेण द्विगुणः [पञ्चविंशत्यपेक्षयैव पञ्चाशत्पणात्मको वेदितव्यः] तथोत्तमेषु च स्वापेक्षया अधिकश्रुतवृत्तेषु दण्डः पञ्चाशत्पणात्मक एव॥ वर्णानां मूर्धावसिक्तादीनां च परस्पराक्षेपे दण्डकल्पनामाह—"वर्ण"

ब्राह्मणादयः, जातयो मूर्धावसिक्ताद्याः। वर्णाश्च जातयश्च वर्णजातयः। उत्तराश्च अधराश्च उत्तराधराः। वर्णजातयश्च ते उत्तराधराश्च वर्णजात्युत्तराधराः। तैः ="वर्णजात्युत्तराधरैः" परस्परमाक्षेपे क्रियमाणे" दण्डस्य प्रणयनं प्रकर्षेण नयन-मूहनं वेदितव्यम्। [ तच्च दण्डकल्पनम् उत्तराधरैरिति विशेषणोपादानात् उत्तराधर भावापेक्षयैव कर्त्तव्यमित्यवगम्यते। यथा—मूर्धावसिक्त ब्राह्मणाद्धीनं क्षत्रियादुत्कृष्टं चाक्रुश्य ब्राह्मणः क्षत्रियाक्षेपनिमित्तात् पञ्चाशतपणदण्डात् किञ्चिदधिकं पञ्चसप्तत्यात्मकं दण्डमर्हति। मूर्धावसिक्तः अपि तावाक्रश्य तमेव दण्डमर्हति। मूर्धावसिक्ताम्बष्ठयोः परस्पराक्षेपे ब्राह्मणक्षत्रिययोः परस्पराक्रोश-निमित्तौ यथाक्रमेण दण्डौ वेदितव्यौ। एवमन्यत्रापि ऊहनीयम् ॥ २०६ ॥

## CHARCHA

1. वर्णजात्युत्तराधरैः—अनुक्तकर्त्ता of क्रियमाण etc. understood. For समास and construction here, see prose & Mita।

N.B—Note मूर्धावसिक्त is a संकरजाति ( विप्रतः क्षत्रियायामुत्पन्न ); comp. "विप्रात् मूर्धावसिक्तो हि क्षत्रियायाम्"—आचाराध्याय sl. 91 where as मूर्धाभिषिक्त is a coronated king

207. दण्ड in cases of 4 castes when there is respective high and low order.

प्रातिलोम्यापवादेषु द्विगुणत्रिगुणा दमाः।
वर्णनामानुलोम्येन तस्मादर्धार्धहानितः ॥ २०७ ॥

Prose—वर्णानाम् प्रातिलोम्यापवादेषु ( क्षत्रियादिकर्त्तृक—ब्राह्मणापवादेषु ) यथ क्रमं द्विगुणाः च त्रिगुणाश्चदमाः वेदितव्याः। वर्णानाम् आनुलोम्येन ( ब्राह्मणकर्त्तृक—क्षत्रियादिनिन्दापवादेषु ) तस्मात् ( ब्राह्मणाक्रोशनिमित्तात् शत-परिमितात्क्षत्रियदण्डात्, प्रतिवर्णम् ) अर्धार्धहानितः ( ब्राह्मणो दण्डणीयः )। [ N.B.—द्विगुणः ( च=वा ) त्रिगुणः येषु=द्विगुणत्रिगुणाः, बहु। where there is द्विगुण and त्रिगुण respectively ; qual दमाः ]।



Beng.—অধম ও উত্তমবর্ণে অর্থাৎ ক্ষত্রিয় বা বৈশ্য কর্ত্তৃক ব্রাহ্মণের নিন্দাবাদ হইলে যথাক্রমে পূর্বকথিত পঞ্চাশের দ্বিগুণ এবং তিনগুণ পণ দণ্ড বিহিত হইবে। [ শূদ্র কর্ত্তৃক ব্রাহ্মণাক্রোশে প্রহার ও জিহ্বাচ্ছেদনের ব্যবস্থা মনুতে আছে ]। কিন্তু উত্তম ও অধমবর্ণ মধ্যে অনুলোমভাবে যদি নিন্দাবাদ হয় অর্থাৎ ব্রাহ্মণাদি ক্ষত্রিয়কে, ক্ষত্রিয় বৈশ্যকে, বৈশ্য শূদ্রকে বা ব্রাহ্মণ তিন বর্ণকেই পরুষবাক্য বা নিন্দাবাক্য ব্যবহার করে, তবে উক্ত শতপণ দণ্ডের অর্ধ ও অর্ধ ভাগ কম দণ্ড বিহিত হইবে অর্থাৎ ( পঞ্চাশ, পচিশ ও সাড়ে বার পণ দণ্ড বিহিত হইবে )।

Eng—In cases of abuses in reverse order from low to high ( e. g. from Kshatriya to Brahmana, Vaishya to Brahmana etc. ), a punishment or fine of twice and thrice of fifty panas ( as said in previous sloka ) is to be made ; but in cases of abuses of right order i e, from high to low as from Brahmana to Kshatriya etc the fine will be half as much dimished ( from fifty to twenty-five, twenty-five to twelve half ) in order ( of क्षत्रिय, वैश्य and शूद्र )। ( See also Mita for further details ).

Mita—एवं सवर्णविषये दण्डमभिधाय वर्णानामेव प्रतिलोमानुलोमाक्षेपे दण्डमाह—अपवादा अधिक्षेपाः। "प्रातिलोम्येन अपवादाः=प्रातिलोम्यापवादाः" तेषु। ब्राह्मणाक्रोशकारिणोः क्षत्रियवैश्ययोः यथाक्रमेण पूर्ववाक्यात द्विगुणपदो-पात्तपञ्चाशतपणापेक्षया "द्विगुणाः शतपणाः, त्रिगुणाः सार्धशतपणाः दण्डा" वेदितव्याः। [ शूद्रस्य ब्राह्मणाक्रोशे (तु) ताडनं जिह्वाच्छेदनं वा भवति। यथाह मनुः— "शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति। वैश्यः अध्यर्धशतं द्वे वा शूद्रस्तु वधमर्हति"। इति॥ विट्शूद्रयोरपि क्षत्रियादनन्तरैकान्तरयो स्तुल्यन्यायतया

शतमध्यर्धशतं यथाक्रमेण क्षत्रियाक्रोशे वेदितव्यम्। शूद्रस्य वैश्याक्रोशे शतम्। आनुलोम्येन तु वर्णानां क्षत्रियविट्शूद्राणां ब्राह्मणेनाक्रोशे कृते तस्मात् ब्राह्मणाक्रोशनिमित्तात् शतपरिमितात् क्षत्रियदण्डात् प्रतिवणम् अर्धस्यार्धस्य हानिं कृत्वा अवशिष्टं पञ्चाशत्पञ्चविंशतिसार्धद्वादशपणात्मकं यथाक्रमं ब्राह्मणो दण्डणीयः। तदुक्तं मनुना—"पञ्चाशत् ब्राह्मणो दण्ड्यो क्षत्रियस्य अभिशंसने। वैश्ये स्यात् अर्धपञ्चाशत् शूद्रे द्वादशाको दमः" इति॥ क्षत्रियेण वैश्ये शूद्रे वाक्रुष्टे यथाक्रमं पञ्चाशत् पञ्चविंशतिकौ दमौ। वैश्यस्य च शूद्राक्रोशे पञ्चाशत् इत्युहनीयम्। "ब्राह्मण राजन्यवत् क्षत्रियवैश्ययोः" इति गौतमस्मरणात। "विट्शूद्रयोरेवमेव, स्वजातिं प्रति तत्त्वतः" इति मनुस्मरणाच्च ॥ २०७ ॥

CHARCHA

1. For आनुलोम्य see sl 183; similarly प्रातिलोम्य is derived. आनुलोम्येन has करणे ३या। See also Mitakshara

208 Fine of 100 or 50 panas where there is verbal intimidation of cutting of limbs

वाहुग्रीवानेत्र-सक्थिविनाशे वाचिकेदमः।
शत्यस्तदर्धिकः पादनासाकर्णकरादिषु ॥ २०८ ॥

Paose—वाहुग्रीवानेत्रसक्थिविनाशे वाचिके (सति) शत्यः (शतपरिमितः) दमः वेदितव्यः। (एवं) पादनासाकर्णकरादिषु (विषयेषु) तदर्धिकः दमः ज्ञेयः।

Beng—"আমি তোমার বাহু গ্রীবা নেত্র বা সক্থি বিনাশ করিব" এইরূপ বাচিক ভয় দেখান হইলে শতপণ দণ্ড বিহিত হইবে। এভাবে পাদ, নাসা, কর্ণ, কর ছেদের বাচিক ভয় দেখাইলে শতার্ধ বা ৫০ পণ দণ্ড বিহিত হইবে।

Eng.—In case of intimidation of cutting one's arms, neck, eye and thighs, there will be imposition of a fine of 100 panas; if the same be with regard to legs, nose, ear or hand then the fine will be half as much.



Mita—पुनर्निष्ठुराधिक्षेपमधिकृत्याह—वाह्वादीनां प्रत्येकं "विनाशे वाचिके" (सति) वाचा प्रतिपादिते—"तव वाहूछिनद्मि इत्येवं रूपे (सति) "शत्यः" शतपरिमितः (?) दण्डोवेदितव्यः। "पादनासाकर्णकरादिषु" (आदिग्रहणात् स्फिगादिषु, वाचिके विनाशे "तदर्धिकः" तस्य शतस्य अर्धं तदर्धं, तद् यस्यास्ति इति असौ (सः) तदर्धिकः, पञ्चाशतपणिको दण्डो वेदितव्यः ॥ २०८ ॥

CHARCHA

1. वाचिके=वाचि भव or वाचा निर्वृत्तम् इति वाचिकः with ठञ्। Construe—विनाशे वाचिके सति।

2. शत्यः—Qual. दम। शतेन विहित वा क्रीतः इति शत+यत्=शत्य by the rule "शताच्च ठन्यतौ अशते"। So optionally we may get शतिक with ठन्। But in the sense of शतं परिमाणमस्य we get शतकः सङ्घः etc.।

3. पादनासाकर्णकरादिषु—First प्राण्यङ्गत्वात् समाहार द्वन्द्वः। Then विषयाधिकरणे ७मी॥ बाहु is arm; कर is here hand below elbow or wrist. Greater दम वा दण्ड in case of major limbs. तदर्धिकः—तस्य अर्धम्। ततः मत्वर्थीय ठन् by "अत इनिठनौ"। Qual. दमः॥ Here the reading शक्तः for शत्यः is not convincing; for then the amount of fine can't be directly drawn in by पूर्वपरामर्श, whereas दण्ड in each verse is clearly stated.

209. If a weak one says so then the fine is ten panas and a weak should also be protected.

अशक्तस्तु वदन्नेवं दण्डणीयः पणान् दश ।
तथा शक्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु ॥ २०९ ॥

Prose—असक्तस्तु एवं वदन् दश पणान् दण्डणीयः। शक्तः एवं वदन् तथादण्डणीयः। तस्य ( दुर्बलस्य ) क्षेमाय तु प्रतिभुवं दाप्यः।

Beng.—অশক্ত ব্যক্তি যদি "অঙ্গভাঙ্গিব" বলিয়া শাসায়, তবে তাকে দশ পণ দণ্ড দেওয়াইবেন। আর সমর্থ ব্যক্তি এই কথা বলিয়া ভয় দেখাইলে তাকেও দণ্ড দিতে হইবে; এবং অসক্তের মঙ্গল বা জীবনরক্ষার জন্য একজন বক্ষকজামিন রাজা রাখাইবেন।

Eng.—If a disabled or weak one so intimidates another then he is to be imposed a fine of ten panas only ; but if a strong one so intimidates another disabled or weak one then he should be also fined ; and then a saviour should be kept for the protection of this disabled one

Mita—किञ्च यः पुनर्ज्वरादिना क्षीणशक्तिः "त्वद्-गात्राणङ्गभङ्गं करोमि" इत्येवं शपत्यसौ दश पणान् दण्डणीयः। यः पुनः समर्थः क्षीणशक्तिं पूर्ववद् आक्षिपति असौ पूर्वोक्तशतादिदण्डोत्तरकालं तस्य असक्तस्य क्षेमार्थं प्रतिभुवं दापनीयः ॥ २०९ ॥

CHARCHA

1. शक्तः—construe—शक्तः एवं वदन् तथा दण्डणीयः i e, तादृश-प्रकारेण अर्थात् दशपणेन दण्डणीयः। Mita construes तथा तेन शत्येन दण्डणीय। But this seems to be farfetched ; for तथा (तद्+थाल्) by पूर्वपरामर्शित्व should refer to immediately preceding fine of दशपण। The previous sloka is a general statement of वाचिक दम where both are equally strong ; whereas this is an exception (a प्रतिप्रसव rather) of the prior one where the parties are of unequal strength ; so by तथा we suggest and prefer दशपण and reject Mita here, specially because a further clause for the क्षेम of the अशक्त is added here.



210. Punishment or दण्ड in abuses with ref. to महापातकजनक words.

पतनीयकृते क्षेपे दण्डो मध्यमसाहसः ।
उपपातकयुक्ते तु दाप्यः प्रथमसाहसम् ॥ २१० ॥

Prose—पतनीयकृते क्षेपे ( निन्दावादे ) मध्यमसाहसः दण्डः विधेयः ( वा स्यात् )। उपपातकयुक्ते क्षेपे तु प्रथमसाहसम् दण्डं राज्ञा दाप्यः।

Beng.—সদাচারিদিগকে পতনীয় মহাপাতকের কথা বলিয়া নিন্দাবাদ করিলে, রাজা তার মধ্যমসাহসে কথিত দণ্ড বিধান করিবেন। আর "তুমি গোহত্যাকারী" এইরূপে উপপাতকযুক্ত বাক্যে নিন্দাবাদে প্রথমসাহসবিষয়ক দণ্ডে দণ্ড দিতে হইবে।

Eng.—Punishment as stated in cases of मध्यमसाहस should be inflicted on the abuser who accuses Brahmacharins etc. with ref. to one of महापातक ; and punishment as in cases of प्रथम साहस should be given to one who accuses others with some grave offence like killing of cow etc.

Mita—तीव्राक्रोशे दण्डमाह—पातित्यहेतुभिः ब्रह्महत्यादिभिः वर्णिनाम् ( मूर्धावसिक्तादीनाम् ) आक्षेपे कृते मध्यमसाहसं दण्डः। उपपातकसंयुक्ते पुनः, 'गोघ्नस्त्वमसि' इत्येवमादिरूपे क्षेपे प्रथमसाहसं दण्डणीयः।

CHARCHA

1 पतनीयकृते—Qual. क्षेपे। क्षेप वा आक्षेप is निन्दावाद। कृ+क्त नपुंसके भावे=कृतम् i. e, कर्म। पतनीयस्य पतनयोग्यस्य कृतम्। तदस्ति अस्मिन् इति मत्वर्थीय अन् इति पतनीयकृते। A grave sin that causes downfall; this refers to five महापातक of ब्रह्महत्या, सुरापान, स्तेन, गुर्वङ्गनागमन etc (seeante); and a पातक or sin reaching near महापातक is an उपपातक। उपपातकेनयुक्तः, ततत्। तस्मिन्। Qual. क्षेपे understood. उपपातक etc. is grave sin like गोवध etc.

211. Abuse on वेदज्ञ, on kings or deities will entail उत्तमसाहसदण्ड etc.

> त्रैविद्यनृपदेवानां क्षेप उत्तमसाहसः।
> मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोः ॥ २११ ॥

Prose—त्रैविद्यनृपदेवानां क्षेपे उत्तमसाहसः दण्डः विधेयः (वा स्यात्) जातिपूगानां क्षेपे मध्यमः (मध्यमसाहसः दण्डः विधेयः), ग्रामदेशयोः (सम्बन्धे) क्षेपे प्रथमः (प्रथमसाहस दण्डः विधेयः)।

Beng.—ত্রিবেদজ্ঞ, রাজা ও দেবতার নিন্দা করিলে উত্তমসাহস কথিত দণ্ড বিহিত হইবে। যদি ব্রাহ্মণ এবং মূর্ধাবসিক্তাদি জাতিসমূহকে কেহ গালি দেয় তবে তার মধ্যমসাহস কথিত দণ্ড বিধান হইবে। আর বাস্তব্য গ্রাম বা দেশের কথা তুলিয়া নিন্দা করিলে প্রথমসাহস কথিত দণ্ড বিহিত হইবে।

Eng.—If one utters abuses on one versed in all the threevedas, on the king or on some deity then punishment as in case of उत्तमसाहस will be imposed on him; If one



accuses the Brahmana, the मूर्धावसिक्त and allied classes, then मध्यमसाहस दण्ड will be inputed on him; and if accusation is with ref. to one's own village or country then the punishment will be as in प्रथमसाहस।

Mita—किञ्च त्रैविद्याः वेदत्रयसम्पन्नास्तेषां, राज्ञां, देवानाञ्च क्षेपे उत्तमसाहसो दण्डः। ये पुनः ब्राह्मणमूर्धावसिक्तादिजातीनां पूगाः संघाः तेषामाक्षेपे मध्यमसाहसो दण्ड। ग्रामदेशयोः प्रत्येकमाक्षेपे प्रथमसाहसो दण्डो वेदितव्यः॥ इति वाक्पारुष्यप्रकरणम् ॥

CHARCHA

1. त्रैविद्य &c—शेषे षष्ठी। For त्रैविद्य one versed in three vedas &c. see sl. 185.

2. जातिपूगानाम्—जाति is ब्राह्मण etc and मूर्धावसिक्तादि etc; here पूग is समूह वा संघ॥

अथ दण्डपारुष्यप्रकरणम

[The section on harshnss due to strik'ng or assaulting by swords. weapons &c.]

Remark—Assault or strike on other's body with hands, legs and weapons or striking with throwing of ashes or dusts etc. constitutes दण्डपारुष्य। दण्डपारुष्यं नाम आघातेन शरीरस्य विरूपीकरणम्। Comp. "परगात्रेषु अभिद्रोहे हस्तपादायुधादिभिः भस्मादिभिर्वा दण्डपारुष्यमुच्यते" in Narada. It is either by assaulting with weapons (अवगोरण) or by striking with something thrown (निःसङ्गपातन) or causing wound with oozing of blood (क्षतदर्शन)। See also Mitakshara next.

**Mitakshara Introductory**

संप्रति दण्डपारुष्यं प्रस्तूयते, तत्स्वरूपं च नारदेनोक्तम् ( १५१४ )—'परगात्रेष्वभिद्रोहे हस्तपादायुधादिभिः। भस्मादिभिश्चोपघातो दण्डपारुष्यमुच्यते ॥' इति। परगात्रेषु स्थावरजङ्गमात्मकद्रव्येषु हस्तपादायुधैरादिग्रहणाद्ग्रावादिभिर्योऽभिद्रोहो हिंसनं दुःखोत्पादनं तथा भस्मना आदिग्रहणाद्रजः पङ्कपुरीषाद्यैश्च य उपघातः संस्पर्शनरूपं मनोदुःखोत्पादनं तदुभयं दण्डपारुष्यम्। दण्ड्यतेऽनेनेति दण्डो देयः, तेन यत्पारुष्यं विरुद्धाचरणं जङ्गमादेर्द्रव्यस्य तद्दण्डपारुष्यम्। तस्य चावगोरणादिकारणभेदेन त्रैविध्यमभिधाय हीनमध्यमोत्तमद्रव्यरूपकर्मत्रैविध्यरूपुनस्त्रैविध्यं तेनैवोक्तम् ( १५१५-६ )—'तस्यापि दृष्टं त्रैविध्यं हीनमध्योत्तमक्रमात्। अवगोरणनिःसङ्गपातनक्षतदर्शनैः॥ हीनमध्योत्तमानां च द्रव्याणां समतिक्रमात्। त्रीण्येव साहसान्याहुस्तत्र कण्ठकशोधनम् ॥' इति। निःसङ्गपातनं निःशङ्कप्रहरणम्। त्रीण्येव साहसानि त्रिप्रकाराण्येव। सहसा कृतानि दण्डपारुष्याणीत्यर्थः। तथा वाग्दण्डपारुष्ययोरुभयोरपि द्वयोः प्रवृत्तकलहयोर्मध्ये यः क्षमते न केवलं तस्य दण्डाभावः किंतु पूज्य एव। तथा पूर्वं कलहे प्रवृत्तस्य दण्डगुरुत्वम्। कलहे च बद्धवैरानुबन्धातुरेव दण्डभाक्त्वम्। तथा तयोर्द्वयोरपराधविशेषापरिज्ञाने दण्डः समः। तथा श्वपचादिभिरार्याणामपराधे कृते सज्जना एव दण्डदानेऽधिकारिणः, तेषामशक्यत्वे तान् राजा घातयेदेव; नार्थं गृह्णीयादित्येवं पञ्चप्रकारा विधयस्तेनैवोक्ताः ( ना० १५१७ )—'विधिः पञ्चविधस्तूक्त एतयोरुभयोरपि। पारुष्ये सति संरम्भादुत्पन्ने क्रुद्धयोर्द्वयोः॥ स मन्यते यः क्षमते दण्डभाग्योऽतिवर्तते। पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक्॥ पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः। द्वयोरापन्नयोस्तुल्यमनुबध्नाति यः पुनः॥ स तयोर्दण्डमाप्नोति पूर्वो वा यदि वेतरः। पारुष्यदोषावृतयोर्युगपत्संप्रवृत्तयोः॥ विशेषश्चेन्न लक्ष्येत विनयः स्यात्समस्तयोः। श्वपाकषण्ढचण्डालव्यङ्गेषु वधवृत्तिषु॥ हस्तिपव्रात्यदासेषु गुर्वाचार्यनृपेषु च। मर्यादातिक्रमे सद्यो घात एवानुशासनम्॥ यमेव ह्यतिवर्तेरन्नेते सन्तं जनं नृषु। स एव विनयं कुर्यान्नतद्विनयभाङ्नृपः॥ मला ह्येते मनुष्याणां धनमेषां मलात्मकम्। अतस्तान्घातयेद्राजा नार्थदण्डेन दण्डयेत्॥' इति॥





212. **Ways to determine complaints of दण्डपारुष्य।**

**असाक्षिकहते चिह्नैर्युक्तिभिश्चागमेन च।**
**द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृतो भयात्॥ २१२॥**

**Prose**—असाक्षिकहते ( साक्षिणं विना आघाते ) चिह्नैः ( क्षतचिह्नैः ) युक्तिभिः ( कारणालोचना-युक्तिभिः ) आगमेन च ( जनप्रवादेन ) च व्यवहारः द्रष्टव्यः ; यतः भयात् ( आक्रोशात् ) कूटचिह्नकृतः व्यवहारः ( अपि ) द्रष्टव्यः।

**Beng.**—লোকের অসাক্ষাতে আঘাত হইয়াছে—এইরূপ অভিযোগে, রাজা আঘাতচিহ্ন, আঘাত কারণ পর্য্যালোচনা এবং আগম বা জনপ্রবাদ বা জনমত দ্বারা সমস্ত বিচার করিয়া তবে নালিশ গ্রহণ করিবেন। কারণ আক্রোশ বশতঃ কেহ নিজগাত্রে মিথ্যাচিহ্নাদি উৎপাদন করিয়া শত্রুকে সাজা দিবার জন্য অভিযোগ আনিতে পারে।

**Eng.**—If striking takes place without any one's presence ( or having no witness therein ), then the king should judge the complaint with reference to wound, probable cause, and people's view or evidence; for false complaints with show of false wounds may be filed out of grudge ( भयात् )।

**Mita**—एवम्भूतदण्डपारुष्यनिर्णयपूर्वकत्वात् दण्डप्रणयनस्य, तत्स्वरूपसन्देहे निर्णयहेतुमाह—यदा कश्चित् "रहस्यहमनेन हतः" इति राज्ञे निवेदयति, तदा ( राजा ) "चिह्नैः" वर्णादिस्वरूपगतैर्लिङ्गैः "युक्त्या" कारणप्रयोजनपर्य्यालोचनात्मिकया, "आगमेन" जनप्रवादेन ( च-शब्दात् दिव्येन वा ) कूटचिह्नकृतसम्भावनाभयात् परीक्षा कार्य्या॥ २१२॥

## CHARCHA

1. असाक्षिकहते—Here हत is आघात ( hurting ). अविद्यमानः साक्षी अस्मिन् इति असाक्षिकम्, बहु। adn समासान्त कप् असाक्षिकं

( यथा तथा ) हतम् । तस्मिन् । अर्थे ७मी । आगम is news gatherd or जनप्रवाद as Mita says. तेन । करणे ३या ।

2. कूटचिह्नकृतः—कूट is false here. कूटः चिह्नः । तेन कृतः । Qual. व्यवहारः । construe—यतः व्यवहारः ( अभियोगः ) कूटचिह्नकृतः ( मिथ्या-चिह्नकृतः ) स्यात् । why so ? भयात्—out of grudge i. e. आक्रोश । भय is here आक्रोश ( to cause or show भय in others ). The reading कूटचिह्नकृतात् ( व्यवहारात् ) ऋते is also seen. But our reading gives a better or rational ideathan this ; for the sense of कूटचिह्नकृतात् ऋते is included in व्यवहारः द्रष्टव्यः । Here कूटचिह्नकृताद्भयात् is also the reading. Then भयात्=सम्भावना-भयात् । This seens to be Mita's reading. See "कूटचिह्नकृत-सम्भावनाभयात्" । एवं सम्भावनाहेतोः व्यवहारो द्रष्टव्यः । But our reading and interpretation gives a more rational sense ; for false cases with false wounds are seen out of grudge.

213-214—Punishment in cases of strikes with throwing of ash, dust, mud &c.

भस्मपङ्करजःस्पर्शे दण्डो दशपणः स्मृतः ।
अमेध्यपार्ष्णि-निष्ठ्यूतस्पर्शने द्विगुणस्ततः ॥ २१३ ॥
समेष्वेवं परस्त्रीषु द्विगुणस्तूत्तमेषु च ।
हीनेष्वर्धदमो मोहमदादिभिरदण्डनम् ॥ २१४ ॥

Prose—भस्मपङ्करजःस्पर्शे ( भस्मादिभिः स्पर्शे आघाते विषये ) दशपणः दण्डः स्मृतः । अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने ततः ( दशपणात् ) द्विगुणः दण्डः स्मृतः । एवं एष दण्डः समेषु (सवर्णविषयेषु वा समानगुणेषु) च परस्त्रीषु. उत्तमेषु च द्विगुणः ( पूर्वोल्लिखित-विंशतिपणदण्डात् द्विगुणः ) दण्डः वेदितव्यः । हीनेषु



( स्वापेक्षया न्यूनेषु ) अर्धदमः ( सर्वत्र अर्धदण्डः ज्ञेयः ), मोहमदादिभिः स्पर्शने अदण्डनम् ( स्यात् वा ज्ञेयम् इत्यर्थः ) ।

Beng.—যদি কেহ অন্য কাহাকেও ভস্ম ( ছাই ) কাদা বা ধূলি দ্বারা আঘাত করে ( অর্থাৎ গায়ে ছুঁড়িয়া মারে ), তবে অপরাধী দশপণে দণ্ডিত হইবে। অমেধ্য অর্থাৎ অপবিত্র শ্লেষ্মা, নাসিকামল ইত্যাদি বা পায়ের গোড়ালি বা মুখের লালাদি দ্বারা আঘাত করিলে, দশের দ্বিগুণ বা বিংশতি পণ দণ্ড হইবে। সমবর্ণে এবং সমগুণে বা পরস্ত্রীতেও এই ব্যবস্থা। উত্তমের প্রতি এরূপ আচরণ বা আঘাত করিলে বিংশতির দ্বিগুণ বা চল্লিশ পণ দণ্ড হইবে। আর নিজ অপেক্ষায় হীন বর্ণের প্রতি এরূপ অসদাচরণে সর্বত্র অর্দ্ধদণ্ড হইবে। কিন্তু কেহ যদি অজ্ঞানাবস্থায় বা মদ্যপানে অভিভূত হইয়া এরূপ করে তবে বিকারাবস্থায় দণ্ড হইবে না।

Eng.—If one strikes another by throwing ashes, mud or dust then a fine of ten panas will be imposed on the guilty ; If one strikes another by impure expectorations, ear-wax etc. or strikes by his heels or by spitting then the fine will be twice as much ; this is in cases of equal castes and other's wives ; but if this be to a higher one ( by caste and learning ) then the fine will be twice as much in all the above cases ; and half as much will be if the attack or strike be to one of lower caste and learning ; but no fine will be imposed if one does so unconsciously or under the influence of intoxication.

Mita—एवं विशिष्टे साधनविशेषेण दण्डविशेषमाह—"भस्मना पङ्केन रेणुना वा यः परं स्पर्शयति असौ (?) दशपणं दण्डं दाप्यः । "अमेध्यम्"—इति अश्रु-श्लेष्म-नख-केश-कर्णविट्-दूषिका-भुक्तोच्छिष्टादिकं च गृह्यते । "पार्ष्णिः"

पादस्य पश्चिमो भागः। "निष्ठ्यूतं" मुखनिःसारितं जलम्। "तैः स्पर्शने ततः पूर्वोक्तात् दशपणात् द्विगुणो" विंशतिपणो दण्डो वेदितव्यः। [पुरीषादि-स्पर्शने पुनः कात्यायनेन विशेष उक्तः—"छर्दिमूत्रपुरीषाद्यैरापाद्यः स चतुर्गुणः। षड्गुणः कायमध्येस्यात्मूर्ध्नि त्वष्टगुणः स्मृतः" इति। "आद्यग्रहणात् वसा-शुक्रासृक्मज्जानो गृह्यते]। एवंभूतः पूर्वोक्तदण्डः सवर्णविषये द्रष्टव्यः। परभार्य्यासु च अविशेषेण। तथा "उत्तमेषु" स्वापेक्षया अधिकश्रुतवृत्तेषु, पूर्वोक्तात् दशपणात् विंशतिपणाच्च दण्डात् द्विगुणो दण्डो वेदितव्यः। "हीनेषु" स्वापेक्षया न्यूनवृत्तश्रुतादिषु पूर्वोक्तस्य "अर्धदमः" पञ्चपणो दशपणश्च वेदितव्यः। "मोहः" चित्तवैकल्यम्, "मदः" मद्यपानजन्यः अवस्थाविशेषः। आदिग्रहणात् ग्रहावेशादिग्रहणम् एतैर्युक्तेन भस्मादिस्पर्शने कृतेपि दण्डः न कर्त्तव्यः॥ २१३-१४॥

1. भस्मपङ्क etc.—भस्मन् is ash; पङ्क mud; रजम् is dust. भस्म च पङ्कं च रजश्च, समाहार by "जातिरप्राणिनाम्"। स्पर्श (स्पृश+घञ् भावे) is touch, here striking (आघात)। भस्मादिभिः स्पर्शः strike by ash etc, ततत्। अर्थे ७मी। or भावे ७मी। Mita's "यः परं स्पर्शयति" can be well expressed by यः परं स्पृशति (स्पृश being (सकर्मक), so णिच् is superfluous here In स्पर्श and in स्पर्शन we have भावे घञ् and भावे ल्युट् respectively; अर्थे ७मी or भावे ७मी॥ For meanings of अमेध्य, पार्ष्णि, निष्ठ्यूत (नि+ष्ठिव+क्त) see Mitakshara.

**215,** Punishment in cases of assaults and strikes on a विप्र and in uplifting of weapons.

**विप्रपीडाकरं छेद्यमङ्गमब्राह्मणस्य तु।**
**उद्गूर्णे प्रथमो दण्डः संस्पर्शे तु तदर्धिकः॥ २१५॥**

*Prose*—विप्रपीडाकरं अब्राह्मणस्य अङ्गं छेद्यम्। उद्गूर्णे (वधार्थं शस्त्रे उत्तोलिते) प्रथमः दण्डः (प्रथमसाहसाधिकृतः दण्डः), संस्पर्शे तु तदर्धिकः दण्डः स्यात्।



**Beng.**—কোন অব্রাহ্মণ যদি নিজ কোন হস্ত চরণাদি দ্বারা বিপ্রের পীড়া উৎপাদন করে, তবে তার সে অঙ্গ ছেদন করিয়া দণ্ড দিবে। বধের জন্য শস্ত্র উদ্যত করিলে প্রথমসাহসকথিত দণ্ড বিহিত হইবে, কিন্তু কেবলমাত্র অস্ত্র স্পর্শ করিলে তার অর্দ্ধেক দণ্ড হইবে।

Eng.—If a non-Brahmin causes hurt to a Brahman by some of limbs (hand or leg), then that limls of his should be cut off; in cases of assault to kill another with uplifted weapon, the punshment will be as in प्रथमसाहस, and in cases of touch only of the weapon the punishment will be half as much.

Mita—प्रातिलोम्यापराधे दण्डमाह—ब्राह्मणानां पीडाकरमब्राह्मणस्यक्षत्रियादेः यदङ्गं करचरणादिकं तच्छेत्तव्यम्। क्षत्रियवैश्ययोरपि पीडां कुर्वतः शूद्रस्य अङ्गच्छेदनमेव। ["येन केनचित् अङ्गेन हिंस्यात्श्रेयासमन्त्यजः। छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम्" इति द्विजातिमात्रस्यापराधे शूद्रस्य अङ्गच्छेद-विधानात् वैश्यस्यापि क्षत्रियापकारिणः अयमेव दण्डः। तुल्यन्यायत्वात् (by equality or parity of reasoning)। "उद्गूर्णे"—वधार्थमुद्यते शस्त्रादिके प्रथमसाहसो दण्डो वेदितव्यः। शूद्रस्य पुनः उद्गूर्णेपि हस्तादिच्छेदनमेव "पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति" इति मनुस्मरणात्]। उद्गूर्णार्थं शस्त्रादिस्पर्शने तु तदर्धिकः प्रथमसाहसात् अर्द्धदण्डो वेदितव्यः। [भस्मादि-संस्पर्शे पुनः क्षत्रियवैश्ययोः "प्रातिलोम्यापराधेषु द्विगुणास्त्रिगुणा दमा" इति वाक्पारुष्योक्तन्यायेन कल्प्यम्। शूद्रस्यतत्रापि हस्तच्छेद एव—"अवनिष्ठीवतो दर्पाद्द्वावोष्ठौ छेदयेन्नृपः। अवमूत्रयतो मेढ्रमवशर्धयतो गुदम्" इति मनुस्मरणात्]।

## CHARCHA

1. विप्रपीडाकरम्—विप्रस्य पीडा। तां करोतीति (कृ+ट)। Qual. अङ्गम्। In this the hint is to a Brahmana by an अब्राह्मण।

2. उद्‌गूर्णे=उद्+गूर दिवादि or चुरादि+क्त नपुंसके भावे उद्‌गूर्ण i.e. प्रहारे उद्यम। It is an assault with uplifted weapon. अधि ७मी। Mita says, उद्‌गूर्णे बाधार्थमुद्यते शस्त्रादिके। There is another root गुर तुदादि meaning उद्यमन see the rule "अपगुरो णमुलि"; this gives गोरण in लुट। From this we get अवगोरण=assaulting with uplifted weapon. If weapon is touched only (संस्पर्शने), to uplift it, then punishment is half (तदर्धम् अस्ति अस्य इति तदर्धिकः with 'मत्वर्थीय ठन्)।

216. Punishment in trying to hurt by haud & feet, also by weapon.

> उद्‌गूर्णे हस्तपादे तु दशविंशतिकौ दमौ।
> परस्परं तु सर्वेषां शस्त्रे मध्यमसाहसः ॥ २१६ ॥

Prose—हस्तपादे उद्‌गूर्णे (ताड़नार्थमुत्तोलिते) यथाक्रमं दशविंशतिकौ दमौ ज्ञेयौ। परस्परं शस्त्रे उद्‌गूर्णे सर्वेषां (वर्णानां) मध्यमसाहसः दण्ड विधेयः।

Beng—সজাতীয়ে সজাতীয়ে হাত এবং পা তুলিয়া প্রহারে উদ্যত হইলে যথাক্রমে দশপণ এবং বিশপণ দণ্ড হইবে। পরস্পর বধার্থ উভয়েই শস্ত্র উদ্যত করিলে সকল বর্ণেরই মধ্যমসাহস কথিত দণ্ড হইবে।

Eng.—When there is assualt amongst persons of equal caste or class by hand or fect then punishment is respectively ten and twenty panas; but in an assault where both uplift weapon to kill each other, then the punishment will be as in case of मध्यमसाहस for all castes.

Mita—एवं प्रातिलोम्यापराधे दण्डमभिधाय पुनः सजातिमधिकृत्याह-हस्ते पादे वा ताड़नार्थमुद्‌गूर्णे यथाक्रमं दशपण-विंशतिपणश्च दण्डो वेदितव्यः। परस्पर-वधार्थं शस्त्रे उद्‌गूर्णे सर्वेषां वर्णानां मध्यमसाहसो दण्डः ॥ २१६ ॥



CHARCHA

1. हस्तपादे—समाहारद्वन्द्व—प्राण्यङ्गत्वात्। भावे ७मी। हस्तपादे उद्‌गूर्णे सति। हस्ते उत्तोलिते दशपणः, पादे उत्तोलिते विंशतिपणः दण्डः॥ दश च विंशतिश्च ययोः तौ, वहु। समासान्तकप्। Q दमौ। So also we expound द्विगुणत्रिगुणा दमाः in sl. 207.

217. Punishment in sudden dragging by the leg, hair etc.

> पादकेशांशुककरोल्लुञ्चनेषु पणान् दश।
> पीड़ाकर्षांशुकावेष्टपादाध्यासे शतं दमः ॥ २१७ ॥

Prose—पादकेशांशुककरोल्लुञ्चनेषु (एषां झटित्याकर्षणेषु) दश पणान् दण्डः (स्यात् वा विधेयः)। पीड़ाकर्षांशुकावेष्टपादाध्यासे शतं दम (दण्डः) स्यात् वा विधेयः।

Beng—পা বা কেশ বা অংশুক (বস্ত্র) বা হস্ত, হঠাৎ টানিয়া ধরিয়া আকর্ষণ করিলে, অপরাধী দশপণ দণ্ড দিবে। আবার যে, কাপড় দিয়া আবেষ্টন করিয়া অর্থাৎ বাঁধিয়া আঘাত দেয় ও টানাটানি করে বা পাদাধ্যাস (পদাঘাত) করে সে শতপণ দণ্ড দিবে।

Eng.—If one suddenly drags another either by the leg the hair or his cloth or his hand, then such accused is to pay a fine of ten panas; but a fine of hundred panas will be imposed if there is painful dragging after tying by a cloth or there is kicking so as to produce hurt.

Mita—किञ्च पादकेशवस्त्रकराणामन्यतमं गृहीत्वा च उल्लुञ्चति झटित्याकर्षति असौ दशपणान् दण्ड्यः। पीड़ा च कर्षश्च अंशुकावेष्टश्च पादाध्यासश्च पीड़ाकर्षांशुकावेष्टपादाध्यासम्, तस्मिन् समुच्चिते शतं दण्ड्यः। [ वस्त्रेण

भवति—अंशुकेनावेष्ट्य पादमापीड्य आकृष्य च यः पादेन घट्टयति, तं शतं पणान् दापयेत् इति ] ॥ २१७ ॥

## CHARHCA

1. पादकेश etc.—first प्राण्यङ्गत्वात् द्वन्द्व। Then पादकेशादीनां उल्लुञ्चनानि। तेषु। अधि ७मी। In such दण्डपारुष्य। उल्लुञ्चन is sudden dragging.

2. पीड़ाकर्ष etc.—parse as above. पीड़ा च कर्षः ( आकर्षणं ) च पीड़ाकर्षौ paining & dragging। द्वन्द्व। अंशुकेन आवेष्टः ( घञ् ) आवेष्टनम् tying by a cloth। ततत्। पादेन आध्यासः ( आघातारोपः ) इति पादाध्यासः=पादाघातः kicking ॥ पीडाकर्षः च अंशुकावेष्टश्च पादाध्यासश्च इति समाहार by "सर्वो द्वन्द्वः विभाषा एकवद् भवति"। or अंशुकावेष्टश्च पादाध्यासश्च समाहार द्वन्द्व as before। पीड़ाकर्षयुक्त अंशुकावेष्टपादाध्यासम् शाकपार्थिवादि। तस्मिन्। In a पारुष्य where there is pain and dragging after tying with a cloth or after kicking. The reading पीड़ाकरांशुकावेष्टपादाध्यासे will also serve this purpose. But कर्ष is more painful & deprecatory. So Mita reads कर्ष here.

218-19. Punishment in bloodless or bloody hurts and in cutting or damaging of hands etc.

> शोणितेन विना दुःखं कुर्वन् काष्ठादिभिर्नरः।
> द्वात्रिंशतं पणान् दण्ड्यो द्विगुणं दर्शनेऽसृजः ॥ २१८ ॥
> करपाददन्तभङ्गे छेदने कर्णनासयोः।
> मध्योदण्डो व्रणोद्भेदे मृतकल्पहते तथा ॥ २१९ ॥

Prose—( कश्चित् ) नरः शोणितेन विना काष्ठादिभिः अन्यस्य दुःखं कुर्वन् द्वात्रिंशतं पणान् दण्ड्यः। असृजः ( रक्तस्य ) दर्शने ( सति ) द्विगुणं प्रर्व-



दण्ड्यः। करपाददन्तभङ्गे, तथा कर्णनासयोः छेदने ( सति ) मध्यो दण्डः ( विधेयः ), व्रणोद्भेदे मृतकल्पहते तथा वेदितव्यः।

Beng—কেহ যদি অন্যকে কাষ্ঠাদি দ্বারা আঘাত করিয়া দুঃখ দেয় কিন্তু তাতে যদি রক্ত নির্গম না হয়, তবে বত্রিশপণ দণ্ড হইবে। আর রক্ত দেখা গেলে তার দ্বিগুণ পণ অর্থাৎ চৌষট্টি পণ দণ্ড হইবে। হস্ত, চরণ ও দন্ত ভঙ্গ হইলে বা কাণ ও নাসিকার ছেদন হইলে মধ্যমসাহসকথিত দণ্ড হইবে, আর পুর্বে সঞ্জাত কোন ব্রণ আঘাত দ্বারা আরো বাড়াইলে বা প্রহার দ্বারা মৃতপ্রায় করিলেও মধ্যমসাহসকথিত দণ্ডে দণ্ড হইবে।

Eng.—If some one strikes another with wood etc. and causes bloodless pain, then there will be a fine of thirty two panas for the accused ; if blood is seen in such cases then the fine will be twice as much ; in cases of mutilation of hand or leg or of teeth, and in cutting of ear and nose the punishment will be as in मध्यमसाहस ; similarly in hurt on an wound or in death-like thrashing or beating there will be मध्यमसाहसदण्ड।

Mita—किञ्च—यः पुनः शोणितं यथा न दृश्यते तथा मृदुताडनं काष्ठलोष्टादिभिः करोति असौ द्वात्रिंशतं पणान् दण्ड्यः। यदा पुनर्गाढताडनेन लोहितं दृश्यते तदा द्वात्रिंशतो द्विगुणं चतुःषष्टिपणान् दण्डनीयः। [ त्वङ्मांसास्थिभेदे पुनर्विशेषो मनुना दर्शितः—"त्वग्भेदकः शतं दण्ड्यो लोहितस्य च दर्शकः। मांसभेत्ता च षट् निष्कान् प्रवास्यः त्वस्थिभेदकः" इति ] ॥ २१८ ॥

किञ्च करपाददन्तस्य प्रत्येकं भङ्गे कर्णनासस्य च प्रत्येकं छेदने, रूढव्रणस्य उद्भेदने मृतकल्पो यथा भवति तथा हते ताड़िते मध्यमसाहसो ( दण्डो ) वेदितव्यः। [ अनुबन्धादिना ( कारणादिना ) विषयस्य साम्य-मवगापादनीयम् ] ॥ २१९ ॥

## CHARCHA

1. द्वात्रिंशतम्—द्वौ च त्रिंशच्च द्वात्रिंशत्। तत्पुरुष with आत् by "द्व्यष्टनः संख्यायाम् अवहुव्रीह्यशीत्योः"। Such संख्यावाचक शब्द are always singular by "विंशत्याद्याः सदैकत्वे"। Qual. पणान् (which is अनुक्त प्रधान कर्म)। Thus राजा तं द्वात्रिंशतं पणान् दण्डयेत्=राज्ञा सः द्वात्रिंशतं पणान् दण्ड्यः in voice change.

2. दर्शने, भङ्गे, छेदने—भावे ७मी। विषयाधिकरणे ७मी can also be established. The reading करपाददतः भङ्गे is bad in gram. for there is no rule to change दन्त into दत् in such cases. The vedic rule "छन्दसि च" to change दन्त into दत् is in बहुव्रीहि and not in द्वन्द्व (comp. व्यालांश्च उभयतोदतः in Manu I. 39). The rule "पद्दन्नो—" also dees not apply here, for दन्त is पदान्त here and the rule "पद्दन्नो—" applies to independent पाद, दन्त etc. only—"समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधः"। Mita reads दन्त भङ्गे as in ours here.

3. व्रणोद्भेदे=व्रणस्य (रूढ़व्रणस्य) उद्भेदः। तस्मिन्॥ Parse as above.

4. मृतकल्पहते—हन+क्त नुपुंसके भावे=हतम् ie आघात। मृतेन तुल्यः वा ईषदूनः मृत इति मृतकल्पः (with तद्धित कल्पप्प्रत्ययः)। मृतकल्पं यथा तथा हतम्। सुप्सुपा। भावे or अधि ७मी। or हन+क्त कर्मणि=हत i.e. ताड़ित। मृतकल्पं यथा तथा हतम्। तस्मिन्। विषयाधिकरणे ७मी॥ In कर्णनासयोः (कर्णौ च नासा च) there is irregular समाहाराभाव though प्राण्यङ्ग॥

220. Punishments in वाक्रोध, ऊरूभङ्ग etc.

चेष्टाभोजनवाक्रोधे नेत्रादिप्रतिभेदने।
कन्धरावाहुसक्थ्नां च भङ्गे मध्यमसाहसः॥ २२०॥



Prose—चेष्टाभोजनवाग्रोधे, नेत्रादिभेदने, कन्धरावाहुसक्थ्नां भङ्गे च मध्यमसाहसः दण्डः स्यात्।

Eng.—In obstructions of locomotion, of eating and speaking, in piercing of eyes, tongue etc. and in breaking (fracture) of neck, arm and thigh, punishment will be as in मध्यमसाहस।

Mita—किञ्च गमनभोजनभाषणनिरोधे, नेत्रस्य [आदिशब्दात् जिह्वायाश्च] प्रतिभेदने। कन्धराग्रीवा, बाहुःप्रसिद्धः, सक्थि ऊरुः, तेषां प्रत्येकं भञ्जने मध्यमसाहसः दन्डः॥ २२०॥

221. Punishment will be twice in above cases if many hurts one; stolen goods in such cases will be paid with fine.

एकं घ्नतां बहूनाञ्च यथोक्ताद्द्विगुणो दमः।
कलहापहृतं देयं दण्डश्च द्विगुणस्ततः॥ २२१॥

Prose—एकं घ्नतां बहूनाञ्च यथोक्तात् (पूर्वकथितात्) द्विगुणो दमः (प्रत्येकं प्रति द्विगुणोदमः) देयः वा विधेयः। (किञ्च) कलहापहृतं (द्रव्यं) देयम्। दण्डश्च ततः (अपहृतद्रव्यात्) द्विगुणः (देयः)।

Beng.—অনেকে মিলিয়া একজনের অঙ্গভঙ্গাদি করিলে পূর্ব-কথিত অর্থাৎ (যে যে অপরাধে যে যে দণ্ড বিহিত আছে) তার দ্বিগুণ দণ্ড প্রত্যেকেই দিবে। কলহে দ্রব্য অপহৃত হইলে, তাহা ফেরৎ ত দিবেই, উপরন্তু দ্রব্যমূল্যের দ্বিগুণ দণ্ড দিতে হইবে (বা রাজা দেওয়াইবেন)।

Eng.—If many hurts the limbs of one, then each is to pay fine twice of that which is declared before; in case of stealing of goods during such quarrel, the good or article

is to be returned, and a fine is to be imposed amounting twice the value of the stolen good or article.

Mita—अपि च, यदा पुनर्बहवो मिलिता एकस्याङ्गभङ्गादिकं कुर्वन्ति, तदा यस्मिन् यस्मिन् अपराधे यो यो दण्ड उक्त स्तत्र तस्मात् द्विगुणः दण्डः प्रत्येकं वेदितव्यः। [अतिकूरत्वात् तेषां प्रातिलोम्यानुलोम्यापराधयोरपि एतस्यैव सवर्णविषये अभिहितस्य दण्डजातस्य वाक्पारूष्योक्तक्रमेण हानिं वृद्धिं च कल्पयेत्। "वाक्पारुष्ये च एव उक्तः प्रतिलोम्यानुलोमतः। स एव दण्डपारुष्ये दाप्यो राज्ञा यथाक्रमम्" इति स्मरणात्]। किञ्च कलहे वर्त्तमाने यद् येनापहृतं तत्तेन प्रत्यर्पणीयम्। अपहृतद्रव्याद्, द्विगुणश्च अपहारनिमित्तो दण्डो देयः॥ २२१॥

222. In causing wounds, expenses for healing and fine then are to be given as stated.

दुःखमुत्पादयेद्यस्तु स समुत्थानजं व्ययम्।
दाप्यो दण्डं च यो यस्मिन् कलहे समुदाहृतः॥ २२२॥

Prose—यः (ताड़नात् हेतोः) अन्यस्य दुःखमुत्पादयेत्, स समुत्थानजं (व्रणरोपणजन्यं) व्ययम् दाप्यः, यस्मिन् कलहे य दण्डः समुदाहृतः तं दण्डंच दाप्यः (राज्ञा दाप्यः)।

Beng.—যদি কেহ প্রহার দ্বারা অন্যের ক্ষত ও দুঃখ উৎপাদন করে, তবে সে ক্ষতারোগ্যজন্য ব্যয় বহন করিবে। এবং যে কলহে যে যে দণ্ড কথিত বা উল্লিখিত হইয়াছে সেই দণ্ডও রাজা তাকে দিয়া দেওয়াইবেন।

Eng.—If anyone causes wound and sorrow in another then he is to pay the expenses of healing of wound; and he is to pay a fine as well, as is enumerated in particular quarrels (=hererin before stated).



Mita—किञ्च यो यस्य ताड़नाद् दुःखमुत्पादयेत् सतस्य व्रणरोपणार्थौषधार्थं पथ्यार्थं च यो व्ययः क्रियते तं दद्यात्। "समुत्थानं" व्रणरोपणम्। यस्मिन्कलहे यो दण्डः तं च दद्यात्। न पुनः समुत्थानजव्ययमात्रम्॥ २२२॥

## CHARCHA

1. दुःखम्—It implies both bodily and mental pain; for charaka says of diseases as "विकारो दुःखमेव च"।

2. समुत्थानजम्—Q. व्ययम्। समुत्थान is rising, recovering i.e., व्रणरोपण (healing of wound) here. समुत्थानात् जातम् इति समुत्थानजम् (जनेर्डप्रत्ययः)।

223. Punishment of fine and repairing expenses are to be given if another's wall is broken down.

अभिघाते तथा छेदे भेदे कुड्यावपातने।
पणान् दाप्यः पञ्च दश विंशतिं तद्व्ययं तथा॥ २२३॥

Prose—कुड्यावपातने (भित्तिपातनविषये) अभिघाते छेदे, भेदे च (सति) यथाक्रमं पञ्च दश विंशतिं पणान् दाप्यः। तथा तद्व्ययं दाप्यः (कुड्यसंपादनार्थं व्ययम् अपराधी दाप्यः)।

Beng.—দেয়াল বা ভিত্তিনাশের উদ্দেশ্যে দেওয়ালে আঘাত করিলে, উহা বিদীর্ণ করিলে বা দুই ভাগে ভাঙ্গিয়া ফেলিলে যথাক্রমে পাঁচপণ, দশপণ বা বিংশতিপণ দণ্ড দিবে এবং কুড্য সম্পাদন ব্যয়ও দিতে হইবে।

Eng.—If one strikes, pierces or brings down a wall while trying to demolish it, then he is to pay a fine of five, ten or twenty panas respectively and he is also to bear the cost of repairing (or construction).

Mita—परगात्राभिद्रोहे दण्डमुक्त्वा अनन्तरम् वहिरङ्गार्थनाशे दण्डमाह—मुद्गरादिना कुड्यस्य अभिघाते, विदारणे, द्विधाकरणे च यथाक्रमं पञ्चपणो दशपणो विंशतिपणश्च दण्डो वेदितव्यः। अवपातने पुनः कुड्यस्य एते त्रयो दण्डाः समुच्चिता ग्राह्याः। पुनः कुड्यसम्पादनार्थं च धनं स्वामिने दद्यात् ॥ २२३ ॥

## CHARCHA

1. कुड्यावपातने—कुड्य is wall, foundation-wall. कुड्यस्य अवपातनम् नाशनम्। ६ तत्। तस्मिन्। विषये अर्थे ७मी। If one with a view it कुड्यपातन, strikes the wall (अभिघाते सति), tears open (छेदे सति) or breaks in twain (भेदे=द्विधाकरणे सति) then the fine is respectively 5, 10, 20 panas.

224. Punishment in throwing thorns, poisons etc. in other's houses.

दुःखोत्पादि गृहे द्रव्यं क्षिपन् प्राणहरं तथा।
षोड़शाद्यःपणान् दाप्यो द्वितीयो मध्यमं दमम् ॥ २२४ ॥

Prose—गृहे दुःखोत्पादि (कण्टकादि) द्रव्यं क्षिपन् आद्यः (एष प्रथम-अपराधी) षोड़श पणान् (दण्डः) दाप्यः, तथा प्राणहरं (विषसर्पादि) द्रव्यं क्षिपन् द्वितीयः (एष अपराधी) मध्यमं (मध्यमसाहसोक्तं) दमं दाप्यः।

Beng.—পরের গৃহে কণ্টকাদি দ্রব্য নিক্ষেপ করিলে এই আদ্য (প্রথম) অপরাধী ষোলপণ দণ্ড দিবে। আর প্রাণনাশক বিষসর্পাদি নিক্ষেপ করিলে এই দ্বিতীয় অপরাধী মধ্যমসাহস কথিত দণ্ড দিবে।

Eng.—If one throws some tormenting thorn or bone etc. in another's house then this one will be punished with a fine of sixteen panas; if one throws life-endangering poison or snake, then this second one is to be punished as stated in मध्यमसाहस।



Mita—अपि च परगृहे दुःखजनकं कण्टकादिद्रव्यं प्रक्षिपन् षोड़श पणान् दण्ड्यः। प्राणहरं पुनर्विषभुजङ्गादिकं प्रक्षिपन् मध्यमसाहसं दण्ड्यः ॥

## CHARCHA

1. दुःखोत्पादि—दुःखमुत्पादातीति साधुकारिणि णिनि। Qual. द्रव्यम्।

2. षोड़श पणान्—षोड़शन् is declined like पञ्चन् or दशन्।

3. आद्यः—आदौ भव इति आद्यः the first one i.e. who throws कण्टक etc. So द्वितीय here is one who throws प्राणहरं विषसर्पादि द्रव्यम्।

225. Punishment if another's small animals are wounded.

दुःखे च शणितोत्पादे शाखाङ्गच्छेदने तथा।
दण्डः क्षुद्रपशूनां तु द्विपणप्रभृतिः क्रमात् ॥ २२५ ॥

Prose—क्षुद्रपशूनाम् (अजहरिणादीनां) दुःखे (ताड़नेन दुःखोत्पादने) शणितोत्पादे तथा शाखाङ्गच्छेदने (शृङ्गकरचरणादिच्छेदने सति) क्रमात् द्विपणप्रभृतिः दण्डः दाप्यः।

Beng.—ছাগল ভেড়া হরিণ প্রভৃতি ক্ষুদ্রপশুর আঘাত দ্বারা দুঃখ ঘটাইলে, তাদের দেহ হইতে রক্তস্রাব ঘটাইলে, বা তাদের শৃঙ্গ ও করচরণাদির অঙ্গের ছেদন করিলে যথাক্রমে দ্বিপণ, চারপণ, আটপণ দণ্ড দিতে হইবে।

Eng.—If one causes pain by striking another's small animal as goat, deer etc. or causes oozing of blood from their bodies, or mutilates their horns, hands, legs etc. then the fine respectively will be two panas, four panas and eight panas.

Mita—पश्वभिद्रोहे दण्डमाह—क्षुद्राणां पशूनां अजाविकहरिणप्रायाणां ताडनेन दुःखोत्पादने असृक्स्रावणे शाखाङ्गच्छेदने [शाखाशब्देन प्राणसञ्चार-

-रहितं शृङ्गादिकं लक्ष्यते।· अङ्गानि-करचरणप्रभृतीनि ] शाखा च अङ्गं च शाखाङ्गं, तस्य छेदने द्विपणप्रभृतिर्दण्डः [ द्वौ पणौ यस्य दण्डस्य स "द्विपणः" ]। द्विपणः प्रभृतिरादिर्यस्य दण्डगणस्यासौ द्विपणप्रभृतिः ॥ [ स च दण्डगणो द्विपणः चतुष्पणः अष्टपण इत्येवंरूपो न पुनर्द्विपणः त्रिपणः चतुष्पणः पञ्चपण इति। कथमिति चेदुच्यते ?—अपराधगुरुत्वात् तावत् प्रथमदण्डात् गुरुतरं उपरितनं दण्डत्रितयमवगम्यते। तत्र चाश्रुतत्रित्वादिसंख्याश्रयणात् वरं श्रुतिद्विसंख्याया (? श्रुतद्वित्वसंख्याया ) एवाभ्यासाश्रयणेन गुरुत्वसम्पादनम् इति (?) निरवद्यम् ] ॥ २२५ ॥

Notes on Mita—The दण्डक्रम is 2, 4, 6 and 8, panas and not 2, 3, 4 and 5 here. If you ask how it is known? The answer is, due to gravity of crime, the second दण्ड will be graver than the first, and the दण्ड will be द्विगुण serially as said in the next sloka ( द्विगुणो दमः )। It is better to take recourse to heard ( उक्त ) twice number here, than unheard three four etc ; and thus everything is consistent here.

CHARCHA

1. दुःखे—दुःखं करोति इति दुःखयति। Then दुःखयतीति gives दुःखम् i. e., दुःखकरम् ( by कर्त्तरि पचाद्यच् )। भावे ७मी। दुःखकरे आघाते मति।

2. शणितोत्पादे—शोणितस्य उत्पादः ( उद्भवः ॥ भावे घञ् )। भावे ७मी। शाखाङ्गच्छेदने—for समास see Mita. भावे ७मी ॥ Three crimes are stated here and दण्ड is क्रमात्, द्विपणप्रभृतिः ( समास in Mita ) i.e. द्विपण, चतुष्पण, अष्टपण ॥ क्रमात् takes हेतौ वा ल्यब्लोपे पञ्चमी as in "क्रमादमुं नारद इत्यबोधि सः"—Sisu I. 3.





226. Punishment in killing क्षुद्रपशु, and the same in case of great animals like cow, horse etc:

लिङ्गस्य छेदनेमृत्यौ मध्यमो मूल्यमेव च।
महापशूनामेतेषु स्थानेषु द्विगुणो दमः ॥ २२६ ॥

Prose—क्षुद्रपशूनां लिङ्गस्य छेदने मृत्यौ च मध्यमः ( मध्यमसाहसः ) च दण्डः ( विधेयः )—मूल्यमेव च देयम्। महापशूनाम् ( गवाश्वप्रभृतीनां ) एतेषु स्थानेषु ( ताड़नलौहित्योत्पादनशाखाङ्गच्छेदनेषु विषयेषु ) पूर्वोक्तात् द्विगुणो दमः विधेयः।

Beng.—ছাগাদি ক্ষুদ্রপশুর লিঙ্গচ্ছেদ করিলে বা তাদের হত্যা করিলে মধ্যমসাহসোক্ত দণ্ড দিবে, পশুমূল্যও দিবে। আর গবাশ্ব প্রভৃতি বৃহৎ পশুর দুঃখোৎপাদন, রক্তোৎপাদন বা শাখাঙ্গচ্ছেদন করিলে যথাক্রমে পূর্বোক্ত হইতে দ্বিগুণ দণ্ড দিবে।

Eng.—In case of mutilation of generative organ of small animals or in case of their slaughter, the punishment will be as in मध्यमसाहस ; and the price of animal is also to be given ( by way of punishment ); again in case of hurting, causing bloodshed and mutilation of horses or limbs of great animals, punishment will be twice of that said here in case of क्षुद्रजन्तु।

Mita—किञ्च तेषां क्षुद्रपशूनां लिङ्गच्छेदने मरणे=मारणे च मध्यमसाहसो स्वामिने दण्डः। च मूल्यं दद्यात्। महापशूनां पुनर्गोगजवाजिप्रभृतीनाम् एतेषु स्थानेषु ताड़नलोहितद्रावणादिषु निमित्तेषु पूर्वोक्तात् "द्विगुणोदमः" दण्डो वेदितव्यः ॥

227. Punishment in cutting branches etc of banian trees etc.

प्ररोहिशाखिनां शाखास्कन्धसर्वविदारणे।
उपजीव्यद्रुमाणाञ्च विंशतेर्द्विगुणो दमः ॥ २२७ ॥

Prose—प्ररोहिशाखिनां (वटाश्वत्थादिवृक्षाणां), उपजीव्यद्रुमाणां (उपकारिपनसाम्रादिवृक्षाणां) च शाखास्कन्धसर्वविदारणे विंशतेः (विंशतिमारभ्य) (क्रमेण) द्विगुणः दमः वेदितव्यः। [N.B.—शाखाविदारणे, स्कन्धविदारणे, सर्वविदारणे च। शाखास्कन्धसर्वम्—द्वन्द्व। तेषां विदारणम्। "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते"]

Beng.—বটাদি প্ররোহি বৃক্ষ এবং উপকারী আম্র পনসাদি বৃক্ষের শাখাচ্ছেদ, প্রধান স্কন্ধচ্ছেদ বা সমূলে বিদারণ বা উৎপাটন করিলে ২০ পণ হইতে আরম্ভ করিয়া যথাক্রমে দ্বিগুণ অর্থাৎ ৪০ এবং ৮০ পণ দণ্ড দিবে।

Eng.—In case of cutting boughs or branches, trunks (स्कन्ध) and in uprooting of ever-growing banian trees or benefactory trees etc, the fine will be twice after each beginning with twenty panas.

Mita—स्थावराभिद्रोहे दण्डमाह—"प्ररोहाः" अंकुराः तद्वन्तः प्ररोहिणः। याश्छिन्नापुनस्ता प्रतिकाण्डं प्ररोहन्ति ताः शाखाः येषां वटादीनां ते "प्ररोहिशाखिनः"। तेषां शाखाच्छेदने। यतो मूलशाखा निर्गच्छन्ति स स्कन्धः। तस्य छेदने। समूलवृक्षच्छेदने च यथाक्रमं विंशतिपणदण्डात्आरभ्य पूर्वस्मात् पूर्वस्मात् उत्तरोत्तरो दण्डः द्विगुणः। [एतदुक्तं भवति—विंशतिपणः चत्वारिंशत्पणो अशीतिपण इत्येवं त्रयो दण्डा यथाक्रमं शाखाच्छेदनादिष्वपराधेषु भवन्तीति। अप्ररोहिशाखिनाम् अपि उपजीव्यवृक्षाणाम् आम्रादीनां पूर्वोक्तेषु स्थानेषु पूर्वोक्ता एव दण्डाः अनुपजीव्याप्ररोहिशाखिषु पुनर्वृक्षेषु कल्प्याः ॥ २२७ ॥



CHARCHA

1. प्ररोहिशाखिनाम्—प्ररोहिणश्च (अंकुरवन्तश्च) ते शाखिनश्च वृक्षाःच, कर्मधा। These are वट, अश्वत्थ etc see Mita also.

2. उपजीव्यद्रुमाणाम—उप+जीव वा जीवि+ण्यत् वा यत्=उपजीव्य that which sustains us. उपजीव्याः द्रुमाः। These are mango, jackfurit trees etc एषां शाखाविदारणे सति, स्कन्धविदारणे, सर्वविदारणे सति &c. यथाक्रमं विंशति पणमारभ्य दण्डः।

3. विंशतेः—ल्यप् लोपे ५मी। विंशतिमारभ्य।

228-29. Same topic about monastaries temples, creepers flowers, herbs etc.

चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये।
जातद्रुमाणां द्विगुणो दमो वृक्षेच विश्रुते ॥ २२८ ॥
गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम्।
पूर्वस्मृतादर्धदण्डः स्थानेषूक्तेषु कर्त्तने ॥ २२९ ॥

Prose—चैत्यश्मशानसीमासु, पुण्यस्थाने, सुरालये जातद्रुमाणां (शाखादि-सर्वविदारणे), विश्रुते वृक्षे च (विदारिते) पूर्वोक्तात् द्विगुणः दमः ज्ञेयः। गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम् उक्तेषु स्थानेषु कर्त्तने पूर्वस्मृतात् (पूर्वकथितात्) अर्धदण्डः ज्ञेयः (स्यात् वा)।

Beng.—চৈত্য অর্থাৎ বৌদ্ধবিহার, শ্মশান ও গ্রামাদি সীমায় উৎপন্ন কিংবা কোন পুণ্য স্থানে বা দেবালয়ে উৎপন্ন বৃক্ষাদির শাখা স্কন্ধ বা সমূল ছেদ করিলে, বা কোন প্রখ্যাত সুপ্রসিদ্ধ (গ্রন্থপ্রসিদ্ধ) বৃক্ষের ছেদ করিলে পূর্বকথিত দণ্ডের দ্বিগুণ দণ্ড দিতে হইবে। গুল্ম (নিবিড় লতাসংঘ) গুচ্ছ (কুরণ্টাদি গোছযুক্ত ক্ষুদ্রবৃক্ষ), ক্ষুপ (হ্রস্বশাখাবিশিষ্ট সরল ক্ষুদ্রগাছ), করবীরাদি লতা (দ্রাক্ষাদি),

প্রতান (শিখাময় সারিবাদি), ঔষধি (ধান্য, যব প্রভৃতি), বীরুধ্ (ছিন্ন হইলেও যে লতার অঙ্কুর জন্মে গোলঞ্চাদি) উক্ত স্থানেতে (শাখায়, মূলকাণ্ডে বা সমূলে) কাটিলে পূর্বোক্ত দণ্ডের অর্ধদণ্ড হইবে।

Eng.—In cutting boughs, trunks or roots of trees grown on Bauddha monasteries, on cremation grounds or in village boundaries or of a tree reputed among all and in treatises, punishment will be twice than that already stated before; in such cuttings of small plants etc growing in clusters, of slender plants rising straight, of creepers running long, of plants having tendrils, of herbs like paddy, of evergrowing creepers—punishment will be half of what is spoken before

Mita—चैत्यादिषु जातानां वृक्षाणां शाखाच्छेदनादिषु पूर्वोक्ताद् द्विगुणः (दमः)। विश्रुते च पिप्पलपालाशादिके द्विगुणो दण्डः।। गुल्मादीनाह—गुल्मा" अनतिदीर्घनिविडलतामालत्यादयः, "गुच्छा" अवल्लीरूपा अमरलप्राया कुलरण्टकादयः, "क्षुपाः" करवीरादयः सरलप्रायाः, "लताः" दीर्घयायिन्यः द्राक्षातिमुक्तादयः। "प्रतानाः" काण्डप्ररोहरहिताः सरलयायिन्यः सारिवाप्रभृतयः। औषध्यः" फलपाकावसानाः शालिप्रभृतयः, "वीरुधः" छिन्ना अपि या विविधं प्ररोहन्ति ताः गुडुचीप्रभृतयः, एतेषां पूर्वोक्तेषु स्थानेषु विकर्त्तने छेदने पूर्वोक्ताद् अर्धदण्डः वेदितव्यः।। २२९।। इति दण्डपारुष्यप्रकरणम्।। Charcha—See Mita.

## अथ साहसप्रकरणम्

[ **The section on forcible taking of other's goods etc.**

**"सहसा बलेन कृतं असत्कर्म साहसमुच्यते"** ]

**230. साहस is forcible taking; & usual fine in this is twice the value of the good taken.**

सामान्यद्रव्यप्रसभहरणात् साहसं स्मृतम्।
तन्मूल्याद् द्विगुणो दण्डो निह्नवे तु चतुर्गुणः।। २३०।।

Prose—सामान्यद्रव्यप्रसभहरणात् साहसं स्मृतम्। अत्र तन्मूल्यात् द्विगुणः दण्डः विधेयः। निह्नवे (अपलापे) तु चतुर्गुणः दण्डः विधेयः।

Beng.—জনসাধারণের বা পরের দ্রব্য জোর করিয়া অপহরণ করিলে তাহাকে "সাহস" বলা হয়। এতে যে দ্রব্য জোর করিয়া অপহরণ করিবে, তার দ্বিগুণমূল্য দণ্ড দিতে হইবে। আর অপহরণ করিয়া অপলাপ বা অস্বীকার করিলে দ্রব্যমূল্যের চতুর্গুণ দণ্ড হইবে।

Eng.—Forcible taking away of other's goods is called "Sahasa" here; the fine will be twice the value of the goods taken; but if the forcible stealer denies this, then the fine will be four times of the good taken. [N.B.—निह्नवे=अपलापे, in case of denial.]

संप्रति साहसं नाम विवादपदं व्याचिख्यासुस्तल्लक्षणं तावदाह—

"सामान्यद्रव्यप्रसभहरणात्साहसं स्मृतम्।"

सामान्यस्य साधारणस्य यथेष्टविनियोगानर्हत्वाविशेषेण परकीयस्य द्रव्यस्यापहरणं साहसम्। कुतः? प्रसभहरणात् प्रसह्य हरणात्, बलावष्टम्भेन.

हरणादिति यावत् ॥ : कटुकं भवति—राजदण्डं जनाक्रोशं चोल्लङ्घ्य राजपुरुषेतरजनसमक्षं यत्किंचिन्मारणहरणपरदारप्रधर्षणादिकं क्रियते तत्सर्वं साहसमिति साहसलक्षणम् । अतः साधारणधनपरधनयोर्हरणस्यापि बलावष्टम्भेन क्रियमाणत्वात्साहसत्वमिति । नारदेनापि साहसस्य स्वरूपं विवृतम् (२।१४)—'सहसा क्रियते कर्म यत्किंचिद्बलदर्पितैः । तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥ इति । तदिदं साहसं चौर्यवाग्दण्डपारुष्यस्त्रीसंग्रहणेषु व्यासक्तमपि बलदर्पावष्टम्भोपाधितो भिद्यते इति दण्डातिरेकार्थं पृथगभिधानम् । तस्य च दण्डवैचित्र्यप्रतिपादनार्थं प्रथमादिभेदेन त्रैविध्यमभिधाय तल्लक्षणं तेनैव विवृतम् (१४।३-६)—'तत्पुनस्त्रिविधं ज्ञेयं प्रथमं मध्यमं तथा । उत्तमं चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥ फलमूलोदकादीनां क्षेत्रोपकरणस्य च । भङ्गाक्षेपोपमर्दाद्यैः प्रथमं साहसं स्मृतम् ॥ वासःपश्वन्नपानानां गृहोपकरणस्य च । एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥ व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम् । प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम् ॥ तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः । मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्चशतावरः ॥ उत्तमे साहसे दण्डः सहस्रावर इष्यते । वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने । तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे ॥' इति ॥ वधादयश्चापराधतारतम्यादुत्तमसाहसे समस्ता व्यस्ता वा योज्याः ॥

अथ परद्रव्यापहरणरूपे साहसे दण्डमाह—

तस्यापहृतद्रव्यस्य मूल्यात् द्विगुणो दण्डः । यः पुनः साहसं कृत्वा 'नाहमकार्षम्' इति निन्हुते तस्य मूल्याच्चतुर्गुणो दण्डो भवति । एतस्मादेव विशेषदण्डविधानात्प्रथमसाहसादिसामान्यदण्डविधानमपहारव्यतिरिक्तविषयं गम्यते ॥ २३० ॥

## CHARCHA

1. सामान्यद्रव्य etc.—सामान्यं द्रव्यम् a common article—not one's own, कर्मधा । Hence सामान्यद्रव्यम् means another's good. प्रसभ means an act done without deliberation. A rash outrageons act. Raghunatha says" गता सभा (विचारः) यत्र । "क्लीवन्तु प्रसभं हठः" इति गोपालितः । प्रसभं (यथातथा) हरणम्, सुपसुपा । वा कर्मधा । प्रसभहरणम् is thus प्रसह्य-हरणम् । सामान्य द्रव्यस्य प्रसभहरणम् । ६ तत् । तस्मात् । हेतौ ५मी ।

2. साहसम्—सहस is strength बलम् । सहसा कृतम् इति सहस +अण्=साहसम् a forcible or outragaous act. Narada says—"सहसा क्रियते कर्म यत् किंचिद्बलदर्पितैः । तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते" । Mita says—"राजदण्डं जनाक्रोशम् उल्लंघ्य जनसमक्षं यत्मारणहरणपरदारप्रधर्षणादिकं क्रियते तत् सर्वं साहसम्" । Though वाक्दण्डपारुष्य चौर्य्य-स्त्रीसंग्रहण many come under this head, still it is separately spoken here, for it is mainly based on बलदर्प and because there is different specification of punishments here.

It is divided into three Varieties—(i) प्रथम (ii) मध्यम (iii) उत्तम । (i) Forcible taking of फल, मूल, जल वा alike produce of others is प्रथम साहस । (ii) Forcible taking of cloth, cattle, household articles of others is मध्यम साहस । (iii) Killing by poison, weapons and outrage on other's wife, and other life-extingishing acts are उत्तम साहस ।

Punishment in प्रथम साहस is up to 100 coins, in मध्यम साहस up to 500 coins, in उत्तम साहस up to 1000 coins, banishment, अङ्गच्छेद and capital punishment too are included in उत्तम साहस according to the gravity of crime or offence.

231. Puinshment of one who abets साहसकर्म ।

यः साहसं कारयति स दाप्यो द्विगुणं दमम् ।
यश्चैवमुक्त्वाहं दाता कारयेत् स चतुर्गुणम् ॥ २३१ ॥

Prose—यः साहसं कारयति स द्विगुणं दमम् (दण्डं) दाप्यः। यश्च एवमुक्त्वा ("साहसं कुरु" इत्येवमुक्त्वा) अहम् (एतदर्थं) दाता (तुभ्यं धनंदाता) सन् कारयेत् स चतुर्गुणं दमं दाप्यः।

Beng—যে ব্যক্তি অন্যকে "তুমিকর" বলিয়া সাহসে প্ররোচিত করে, সে দ্রব্যমূল্যের বা সাহসকারীর দণ্ডাপেক্ষা দ্বিগুণ দণ্ড দিবে। আর যে "তুমি কর" বলিয়া, "আমি তজ্জন্য তোমাকে টাকা দিব" বলিয়া অনেককে দিয়া সাহসকর্ম করায় যে চতুর্গুণ দণ্ড দিব।

Eng—It one abets and persuades another to some outrageous act then the fine will be twice the Value of the good' or as of the perpetrator. If one after abetting another offers money too to do such offensive act then the fine will he four times as much.

Mita —साहसिकस्य प्रयोजयितारं प्रत्याह—यस्तु 'साहसं कुरु' इत्येवमुक्त्वा कारयति असौ साहसिकात् दण्डात् द्विगुणं दमं दाप्यः। यः पुनः "अहंतुभ्यं धनं दास्यामि त्वं कुरु" इत्येवमुक्त्वा साहसं कारयति स चतुर्गुणं दण्ड दाप्यः। अनुवन्धातिशयात (for the provocation is greater here) ॥ २३१ ॥

## CHARCHA

1. द्विगुणं दमम्—Acc to Mita, this द्विगुण refers to द्विगुण of the दण्ड of a साहसकर्मकारी। But now-a-days usually aider and abetter get longer punishment than the perpetrator of the crime. So we propose द्विगुणदम to refer to तत्तुल्यात् द्विगुण as in the previous case. Similarly चतुर्गुणदम in persuasion following offer of money.

232-233—Special दण्ड for doer of special साहसकर्म।



अर्घ्याक्षेपातिक्रमकृद् भ्रातृभार्याप्रहारकः।
सन्दिष्टस्याप्रदाता च समुद्रगृहभेदकृत् ॥ २३२ ॥
सामन्तकुलिकादीनामपकारस्य कारकः।
पञ्चाशत्पणिको दण्ड एषामिति विनिश्चयः ॥ २३३ ॥

Prose—अर्घ्याक्षेपातिक्रमकृत् (पूज्यावमाननाकारी) भ्रातृभार्य्याप्रहारकः, सन्दिष्टस्य (प्रतिश्रुतस्य) अप्रदाता, च समुद्रगृहभेदकृत् (मुद्रितगृहस्य उद्घाटयिता), सामन्तकुलिकादीनाम् अपकारस्य कारकः इति एषाम् पञ्चाशत्-पणिकः दण्डः स्यात् इति विनिश्चयः।

Beng—পূজনীয় আচার্য্য প্রভৃতির নিন্দাকারী বা তাঁদের আজ্ঞা লঙ্ঘনকারক, ভ্রাতৃবধূর প্রহারকারী, প্রতিশ্রুতি লঙ্ঘনকারী, রুদ্ধ গৃহের দ্বার ভেদকারী, এবং স্বগৃহসীমার নিকটবর্ত্তী ক্ষেত্রের স্বামীর বা স্বকুলোদ্ভব ব্যক্তির অপকারকারী—এদের পঞ্চাশ পণ করিয়া দণ্ড হইবে—ইহা শাস্ত্রের স্থিরসিদ্ধান্ত।

Eng—Deprecators and disobeyers of superior professors etc, beaters of brother's wife, violators of promise, breakers of some locked room, malefactors of adjoining field-holder or of some one of ones own race—these should be fined fifty panas each—this is the declaration or decision of Smriti shashtras.

Mita—साहसिकविशेषं प्रत्याह—'अर्घ्यस्य' आर्घार्हस्य पूजनीयस्य आचार्यादेः आक्षेपम् आज्ञातिक्रमं च यः करोति, यश्च भ्रातृभार्य्यां ताड़यति। तथा "सन्दिष्टस्य" प्रतिश्रुतस्य अर्थस्य अप्रदाता यः "मुद्रितं गृहम्" उद्घाटयति, तथा स्वगृहे (? स्वगृह) क्षेत्रादिसंसक्ते क्षेत्रादिवासिनां कुलिकानां स्वकुलोद्भवानां [आदि-ग्रहणात् स्वग्राम-स्वदेशीयानां] चापकर्त्ता, तेसर्वे पञ्चाशत्पणपरिमितेन दण्डेन दण्डनीयः॥ २३२-२३३ ॥

## CHARCHA

1. अर्घ्याक्षेप etc.—अर्घ is worship (or mode of worship) "मूल्ये पूजाविधौ अर्घः"। Then अर्घार्थमिदम् इति अर्घ्यम् that which deserves or is required for worship i.e. पूजनीय here. "पादार्घाभ्याञ्च" इति सूत्रेण तादार्थ्ययत्। आक्षेप is निन्दा। अतिक्रम is trangsression of orders of superiors. आक्षेपश्च अतिक्रमश्च आक्षेपातिक्रमौ, द्वन्द्व। अर्घ्यस्य आक्षेपातिक्रमौ। तत्कारी इति अर्घ्याक्षेपातिक्रमकृत् (क्विप्)।

2. सन्दिष्टस्य अप्रदाता=प्रतिश्रुतस्य अप्रदाता॥ समुद्रं गृहं (मुद्रितं गृहम्)—कर्मधा। A locked or secretroom. तस्य भेदं। तत्कारी इति णिन्। वा समुद्रगृह is a pleasure-house fitted with springs; usually reserved for kings or such persons, compare—समुद्रगृहमित्युक्तं जलयन्त्रनिकेतनम्—इति हारावली। जलयन्त्रगृहमिति त्रिकाण्डशेषः। such a costly गृह reserved by some should not be broken open. See our "समुद्रगृहके किल शय्या आस्तीर्णा" in swapna. P 210.

3. सामन्त etc.—Here सामन्त is one whose home or land is adjoining to one. कुलिक is स्वकुलोद्भव। सामन्ताश्च कुलिकाश्च। इतरेतर द्वन्द्व। तेषाम्। शेषे षष्ठी। these take दमः in connection with इति understood.

4. पञ्चाशत्पणिकः—पञ्चाशत्पणः अस्ति अस्य वा अस्मिन् इति मत्वर्थठन्। Qual. द्वन्द्वः।

234-37—other Punishments in adulterating widows, in nonhelper of terrorstricken persons, and in other malefactors etc.



स्वच्छन्दविधवागामी विक्रुष्टेऽनभिधावकः॥
अकारणेचविक्रोष्टा चण्डालश्चोत्तमान् स्पृशेत् ॥ २३४ ॥
शूद्रःप्रव्रजितानां च दैवे पित्र्ये च भोजकः।
अयुक्तं शपथं कुर्वन् अयोग्यो योग्यकर्मकृत् ॥ २३५ ॥
बृषक्षुद्रपशूनाञ्च पुंस्त्वस्य प्रतिघातकृत्।
साधारणस्यापलापी दासीगर्भविनाशकृत् ॥ १३६ ॥
पितापुत्रस्वसृभ्रातृ-दम्पत्याचार्य्य-शिष्यकाः।
एषाम् अपतितान्योन्यत्यागी च शतदण्डभाक् ॥ २३७ ॥

Prose—स्वच्छन्दविधवागामी, विक्रुष्टे (चौरादिभयार्त्ते तद्विषये) अनभिधावकः (शक्तोपि साहाय्यार्थमनागतः), अकारणे (सति) च विक्रोष्टा (अपकारकारी), चण्डालः यदि उत्तमान् (विप्रादीन) स्पृशेत्, दैवे पित्र्ये च कर्मणि यः शूद्रः प्रव्रजितानां (दिगम्बरक्षपणकादीनाम्) भोजकः, अयुक्तं (अयोग्यं) शपथं कुर्वन्, अयोग्यः (शूद्रादिः) योग्यकर्मकृत् (ब्राह्मणयोग्यकर्मकारी), बृषक्षुद्रपशूनां पुंस्त्वस्य प्रतिघातकृत्, साधारणस्य (द्रव्यस्य) अपलापी (बलात् ग्रहणकारी=वञ्चकः), दासीगर्भविनाशकृत, पितापुत्रस्वसृभ्रातृदम्पत्याचार्य्यशिष्यकाः इति एषाम् अपतितान्योन्यत्यागी च शतदण्डभाक् भवति।

Beng.—যে ব্যক্তি নিযোগানুমতি ব্যতীত বিধবাস্ত্রীতে উপগত হয়, চৌরাদিভয়ে আর্ত্তের প্রতি যে সমর্থ ব্যক্তি ধাবিত না হয়, বিনাকারণে যে পরের আক্রোশ করে, যে চণ্ডাল উত্তমজাতিকে স্পর্শ করে, যে শূদ্র প্রব্রজিতসন্ন্যাসীদের দৈবকর্মে বা পিত্র্যকর্মে অযথা ভোজনকরায়, যে অযোগ্য শপথ করে, যে অযোগ্য শূদ্র যোগ্য ব্রাহ্মণাদির অধ্যাপনাদি কর্ম করে, যে বৃষ ও অজাদিক্ষুদ্রপশুর প্রজননশক্তি নাশ করে, যে বলপূর্বক পরদ্রব্য গ্রাহী, যে দাসী গর্ভনাশ করে, যে পিতা অপতিত পুত্রকে, যে পুত্র অপতিত পিতাকে, যে ভ্রাতা অপতিত

ভগিনীকে, যে ভগিনী তাদৃশ ভ্রাতাকে, যে স্বামী অপতিত স্ত্রীকে বা যে স্ত্রী অপতিত স্বামীকে, যে আচার্য অপতিত শিষ্যকে বা যে শিষ্য অপতিত আচার্য্যকে ত্যাগ করে—তারা প্রত্যেকেই শত পণে দণ্ডিত হইবে।

Eng.—One who goes to a widow out of his desire only, one who though able does not go to help a terror-stricken, the causeless malefactor, the chandala who touches a high one (against his will), a sudra who causes a mendicant to take food in his divine or ancestral rites, an improper swearer, one who destroys the generative power of a bull or goat etc, one who steals public good, one causing abortion of a maidservant, and deserter of unfallen son, or deserter of unfallen father, deserter of unadulterated sister or deserter of such a brother, deserter of undefiled disciple, deserter of unfallen preceptor—all these should be severally fined one hundred panas each,

Mita—किञ्च नियोगं विना यः स्वेच्छया विधवां गच्छति, चोरादि-भयाकुलैर्विक्रुष्टे च यः शक्तः अपिनाभिधावति, यश्च चण्डालो ब्राह्मणादीन् स्पृशति, यश्च शूद्रः प्रव्रजितान् दिगम्बरादीन् दैवे पित्र्ये च कर्मणि भोजयति, यश्चायुक्तं मातरं "गमिष्यामि" इत्यवं शपथं करोति, तथा यश्च अयोग्य एव शूद्रादिः योग्य कर्माध्ययनादि करोति, बृषवलीवर्दाः, क्षुद्रपशवः अजादयः (तेषां पुंस्त्वस्य) प्रजननशक्तेः विनाशकः ["बृक्षक्षुद्रपशुनाम्" इति पाठे हिंग्वादि-औषधप्रयोगेण वृक्षादेः फलप्रसूनानां पातयिता] साधारणमपलपति साधारणद्रव्यस्य च वञ्चकः, दासीगर्भस्य च पातयिता, ये च पित्रादय अपतिता एवं सन्तः अन्योन्यं त्यजति तेसर्वे पणशतं दण्डार्हा भवन्ति ॥ २३४-३७ ॥ इति साहसप्रकरणम् ॥



## CHARCHA

1. विक्रोष्टा—विक्रोष्टृ is आक्रोशकारी ॥ वि+क्रुश+तृच वा तृन् ॥ अकारके =भावेऽमी ॥

2. चण्डालः उत्तमान् स्पृशेत्, शूद्रः प्रव्रजितानां भोजकः—All these acts are evidently against the will of the other.

3. पितृ etc—इतरेतर द्वन्द्व। In this द्वन्द्व—पिता-पुत्र, स्वसृ—भ्रातृ, दम्पति, आचार्य्य-शिष्यक (स्वार्थे कन्) are taken as pairs. If any one of these pairs deserts the other though not fallen, then a fine of 100 pana will be imposed. ऊह्य इतिशब्दयोगे १मा।

4. अपतितान्योन्यत्यागी—अन्योन्यं त्यजतीति अन्योन्यत्यागी with णिनुण्। अपतितम् (यथातथा) अन्योन्यत्यागी सुपसुपा। Nom to भवति वा स्यात् etc understood.

5. Remark-main साहसकर्म is stated above; now will follow other punishments in other cases of offences or crimes allied to साहसकर्म as said before. It is here may be called—साहसे प्रासङ्गिकप्रकरणम् ॥

Mitakshara here says—"साहसप्रसङ्गात् ततसदृशापराधेषु निर्णेज-कादीनां दण्डमाह--

234. Washerman's punishment in using other's cloths etc.

वसानस्त्रीन्पणान्दण्ड्यो नेजकस्तु परांशुकम्।
विक्रयावक्रयाधानयाचितेषु पणान् दश ॥ २६८ ॥

Prose—नेजकः (वस्त्रधावकः) परांशुकम् (परवस्त्रम्) वसानः त्रीन् पणान् दण्ड्यः (स्यात्)। विक्रयावक्रयाधानयाचितेषु (विषयेषु) दशपणान् दण्ड्यः।

**Beng.**—বস্ত্রধাবক যদি পরের (অর্থাৎ কোন গৃহস্থের) মলশোধনার্থ দত্তবস্ত্র পরিধান করে, তবে তিন পণ দণ্ড দিবে; আর যদি বিক্রয় করে অর্থাৎ বেচিয়া ফেলে, বা অবক্রয় করে অর্থাৎ ভাঁড়া দেয়; বা পরের নিকট আধান করে অর্থাৎ বন্ধক রাখে বা বন্ধুকর্ত্তৃক যাচিত হইয়া তাদের বস্ত্র দেয়, তবে তার দশপণ দণ্ড হইবে।

**Eng.**—A washerman wearing another's cloth given to him for washing should pay a fine of three panas. If he sells it, or gives it on hire, or keeps it as mortgage to other, or gives it to friends on request, then he is to pay a fine of ten panas.

Mita—नेजको वस्त्रस्य धावकः, स यदि निर्णेजनार्थं समर्पितानि वासांसि स्वयमाच्छादयति तदाऽसौ पणत्रयं दण्ड्यः। यः पुनस्तानि विक्रीणीते, अवक्रयं वा 'एतावत्कालमुपभोगार्थं वस्त्रं दीयते, 'मह्यमेतावद्धनं देयम्' इत्येवं भाटकेन यो ददाति, आधित्वं वा नयति, स्वसुहृद्भ्यो याचितं वा ददात्यसौ प्रत्यपराधं दशपणान्दण्डनीयः। तानि च वस्त्राणि श्लक्ष्णशाल्मलीफलके क्षालनीयानि न पाषाणे, नच स्वगृहे वासयितव्यानि; इतरथा दण्ड्यः। (८।३९६)—'शाल्मलीफलके श्लक्ष्णे निज्याद्वासांसि नेजकः। नच वासांसि वासोभिर्निर्हरेन्न च वासयेत्॥' इति मनुस्मरणात्॥ यदा पुनः प्रमादात्तानि नाशयति तदा नारदेनोक्तं द्रष्टव्यम्—'मूल्याष्टभागो हीयेत सकृद्धौतस्य वाससः। द्विः पादस्त्रिस्तृतीयांशश्चतुर्धौतेऽर्धमेव च॥ अर्धक्षयात्तु परतः पादांशापचयः क्रमात्। यावत्क्षीणदशं जीर्णस्यानियमः क्षयः॥' इति। अष्टपणक्रीतस्य सकृद्धौतस्य वस्त्रस्य नाशितस्याष्टमभागपणोनं, मूल्यं देयं, द्विर्धौतस्य पादोनं, त्रिर्धौतस्य पुनस्तृतीयांशन्यूनम्। चतुर्धौतस्तार्धं पणचतुष्टयं देयम्। ततः परं प्रतिनिर्णेजनमवशिष्टं मूल्यं पादपादापचयेन देयम्। यावज्जीर्णं जीर्णस्य पुनर्नाशितस्येच्छातो मूल्यदानकल्पनम्॥ २३८॥



Remark—Mita says "तानि वस्त्राणि शाल्मलीफलके क्षालनीयानिन पाषाणे" etc. i. e, the cloths given to a washermen should be washed on a flat piece of salmali wood and not on stone slabs, these should also not be changed with other's cloths (न व्यत्यासनीयानि), and these should not be kept in his house as soon as these are washed Manu also supports it by "शाल्मलीफलके श्लक्ष्णे निज्याद् वासांसि नेजकः" etc. If the नेजक carelessly destroy these, then he is to pay वस्त्रमूल्य as stated by Narada. [for meanings of विक्रय, अवक्रय, आधान and याचित see tran. and Mita—तेषु—विषयाधिकरणे ७मी] ।

239. Fine of witnesses etc in पितापुत्रकलह ।

पितापुत्रविरोधे तु साक्षिणां त्रिपणोदमः ।
अन्तरे च तयोर्यः स्यात् तस्याप्यष्टगुणोदमः ॥ २३९ ॥

Prose—पितापुत्राविरोधे तु साक्षिणां त्रिपणोदमः (दण्डः) स्यात्। यः तयोः अन्तरेच स्यात् (न तु कलहं निवारयेत अपिचवर्धयेत्) तस्य अष्टगुणः (त्रिपणात् अष्टगुणो) दमः स्यात्।

Beng.—পিতাপুত্রে কলহ হইলে যে এক পক্ষে সাক্ষী হয় সে যদি কলহ মিটাইতে চেষ্টা না করে তবে তিনপণ দণ্ড দিবে। আর পিতা পুত্রের অর্থবিষয়কবিবাদে যে মধ্যস্থ জামিন হয়, সে যদি কলহ নিবারণ না করে বরং বাড়ায় তবে তার ত্রিপণের আটগুণ অর্থাৎ ২৪ পণ দণ্ড হইবে।

**Eng.**—A witness in a quarrel between father and son, will be fined three panas (coins) if he does not try to dissuade them from this; and a guarantor in a money

quarrel between father and son, should he fined eight times as much if he foments the same and does not dissuade them from such quarrel.

Mita—पितापुत्रयोः कलहे यः साक्ष्यमङ्गीकरोति, न पुनः कलहं निवारयति असौ पणत्रयं दण्ड्यः। यश्च तयोः सपणे विवादे पणदानप्रतिभूर्भवत्यसौ [ चकारात् तयोर्यः कलहं वर्धयति, सोपि त्रिपणादष्टगुणं चतुर्विंशतिपणान् दण्डनीयः। दम्पत्यादिषु अयमेव दण्डोनुसरणीयः ]॥ २३९॥

## CHARCHA

1. पितापुत्रविरोध—पिता च पुत्रश्च पितापुत्रौ द्वन्द्व with आनङ added by the rule "आनङ् ऋतो द्वन्द्वे "where Bhattoji says 'पुत्रे अन्यतरस्याम' इत्यतो मण्डूकप्लुत्या पुत्रे इत्यनुवृत्तेः पितापुत्रौ"। So we prefer the reading पितापुत्र in sl. 237. विषयाधिकरणे ७मी।

240. Forgerer of seales, documents and coins will be fined as in उत्तमसाहस।

> तुलाशासनमानानां कूटकृन्नाणकस्य च।
> एभिश्चव्यवहर्त्तायः स दाप्यो दमुत्तमम् ॥ २४० ॥

Prose—तुलाशासनमानानां नाणकस्य ( स्वर्णमुद्राविशेषस्य ) च यः कूटकृत् ( व्याजकारी ), यश्च ( जानन्नपि एभिः ) व्यवहर्त्ता स उत्तमम् ( उत्तमसाहसकथितं ) दमं दाप्यः ( राज्ञा दाप्यः )।

Beng —তুলাদণ্ড ( ওজনপাল্লা ), শাসন ( দলিলপত্র ) এবং মান ( ওজনের পরিমাণসূচক প্রস্থাদি মান ) এবং নাণক ( অর্থাৎ নিষ্কাদি স্বর্ণ মুদ্রার ) যে কূটকারী হয়, এবং যে জানিয়াও ঐ জাল-দ্রব্যাদি ব্যবহার করে ( ব্যবসায় করে ) সে উত্তম সাহস কথিত দণ্ডে দণ্ডিত হইবে।





Eng—A forgerer of scales, documents, weights and golden coins, also one who uses or deals with these forged articles, should be fined as in उत्तमसाहस।

Mita—"तुला" तोलनदण्डः, "शासनं" पूर्वोक्तं, "मानं" प्रस्थद्रोणादि, "नाणकं" मुद्रादिचिह्नितं द्रम्मनिष्कादि, एतेषां यः "कूटकृत्" देशप्रसिद्ध परिमाणाद् अन्यथा न्यूनत्वमाधिक्यं वा द्रम्मादेः अव्यवहारिकमुद्रात्वं ताम्रादिगर्भत्वं वा करोति यश्च तैः कूटैः जानन्नपि व्यवहरति, ताबुभौ प्रत्येकम् उत्तमसाहसं दण्डनीयौ।॥ २४०॥

## CHARCHA

1. तुला etc—शेषे ६ष्ठी। तुला is scale; शिष्यते अनेन इति शासनम् document; मान is weights तुला च शासनञ्च, मानञ्च इतरेतरद्वन्द्व। तेषाम्।

2 व्यवहर्त्ता—वि+अव+हृ तृन् वा तृच् व्यवहर्त्ता user, trader. That is one who uses it, also one who deals with these as his trade—articles.

241. Punishment for experts who declares counterfeits as real or viceversa.

> अकूटं कूटकं ब्रूते कूटं यश्चाप्यकूटकम्।
> स नाणकपरीक्षी तु दाप्य उत्तमसाहसम् ॥ २४१ ॥

Prose—यः नाणकपरीक्षी अकूटं कूटकं ब्रूते, कूटम् अपि अकूटकं ब्रूते स तु उत्तमसाहसं दमं दाप्यः। [ N B.=नाणकं परीक्षते इति नाणकपरीक्षिन् with णिनि ]।

Beng.—যে উক্তপ্রকার নাণকমুদ্রা পরীক্ষক (=এ বিষয়ে যে দক্ষ) সে যদি অজাল মুদ্রাকে জাল বলে বা জালকে অজাল বলে তবে তার উত্তমসাহস কথিত দণ্ড হইবে।

Eng—It an expert tester of Nanaka-coin declares an unforged coin as forged or a forged coin as unforged, then he is to be fined as declared in "uttamasahasa".

Mita—नाणकपरीक्षिणं प्रत्याह—यः पुनर्नाणकपरीक्षी ताम्रादिगर्भमेव द्रम्भादिकं सम्यग् इति ब्रूते, सम्यक च कूटकमिति ( ब्रूते ) असौ उत्तमसाहसं दण्ड्यः ॥ २४१ ॥ Charcha—Easy.

242. A quack posing himself as a physician is to be punished acc. to his experiments on animals or men.

भिषङ् मिथ्याचरन् दण्ड्यस्तिर्यक्षु प्रथमं दमम् ।
मानुषे मध्यमं राजपुरूषेषूत्तमं दमम् ॥ २४२ ॥

Proso—भिषङ् मिथ्या आचरन् ( अनभिज्ञोपि चिकित्सकवदाचरन्, समिथ्याचारः चिकित्सक इत्यर्थः )—तिर्यक्षु ( प्राणिषु ) चिकित्सन् प्रथमं दम दण्ड्यः, मानुषे मध्यम दमं, राजपुरूषेषु उत्तमं दमम् दाप्यः ( राज्ञा दाप्यः इत्यर्थः )।

Beng.—ভিষক্ বা চিকিৎসক আয়ুর্বেদজ্ঞ না হইয়া ও যদি, নিজেকে চিকিৎসক বলিয়া প্রচার করতঃ পশু পক্ষী প্রভৃতি তির্য্যক জাতির চিকিৎসা করিলে প্রথমসাহস কথিত দণ্ডে দণ্ডিত হইবে। জনসাধারণের চিকিৎসা করিলে মধ্যমসাহস দণ্ড এবং রাজ পুরুষের চিকিৎসা করিলে উত্তমসাহস দণ্ডে দণ্ডিত হইবে।

Eng.—If an inexperienced physician poses himself to be a good physician and treats animals and birds then he is to be fined as in प्रथमसाहस ; if he treats persons in general then the fine will be as in मध्यमसाहस ; if he treats officers of the king then his fine will be as in उत्तमसाहस ।



Mita—चिकित्सकं प्रत्याह—"यः पुनर्भिषक् मिथ्या" आयुर्वेदानभिज्ञ एव जीवनार्थं "चिकित्सितज्ञोऽहम्" इति, तिर्यक्-मनुष्य-राजपुरुषेषु चिकित्सामाचरति असौ यथाक्रमेण प्रथममधमोत्तमसाहसान् दण्डनीयः। [ तत्रापि तिर्य्यगादिषु मूल्यविशेषेण, वर्णविशेषेण राजप्रत्यासत्तिविशेषेण दण्डस्य लघुगुरुभावः कल्पनीयः=lightness or gravity of दण्ड is to be determined by reference to price of animals, birds etc., by reference to castes of Brahmana etc, by referance to officer's nearness of status with the king ] ॥

CHARCHA

1. मिथ्या आचरन्—This means one who wrongly poses himself as a physician though not an adept in Ayurveda. मिथ्याचार in religion is called a भण्ड, मिथ्याचार in चिकित्सा is called a quack ( हातुड़े )।

243. Royal officer's punishment in his negligence of duty.

अवन्ध्यं यश्च बध्नाति बद्धं यश्च प्रमुञ्चति ।
अप्राप्तव्यवहारं च स दाप्यो दममुत्तमम् ॥ २४३ ॥

Prose—यश्च अवन्ध्यं वध्नाति, यश्च बद्धं प्रमुञ्चति, अप्राप्तव्यवहारम् ( आहूतेपि व्यवहारमकृत्वा एव कश्चित् जनम् ) प्रमुञ्चति, स उत्तमं ( उत्तमसाहस-कथितं ) दमं दाप्यः

Beng.—যদি কেহ অর্থাৎ রাজপুরুষ বন্ধনের অযোগ্য নিরপরাধকে আবদ্ধ করে, যদি বা কেহ বদ্ধ অপরাধীকে মুক্তি দেয়, অথবা বিবাদে আনীত ব্যক্তিকে ব্যবহারশেষ হইবার আগেই ছাড়ে, তবে সে উত্তমসাহস দণ্ডে দণ্ডিত হইবে।

**Eng.**—If one arrests a guiltless one, or releases an arrested criminal or again if one let go an accused person even before his trial is over, then too such persons will be punished as in उत्तमसाहस ।

**Mita**—यः पुनर्बन्धनार्हम् अनपराधिनं राजाज्ञयाविना बध्नाति, यश्च वद्धं व्यवहारार्थमाहूतम् अनिवृत्तव्यवहारं चोत्सृजति, असौ उत्तमसाहसं दाप्यः ॥

CHARCHA

1. अवन्ध्यम्—वन्ध+ण्यत् कर्मणि=अवन्ध्य not to be arrested. Adj. used substantively.

2. अप्राप्त etc.—अप्राप्तः व्यवहारः येन, वहु। तादृशम्, adj. used substantively. One called in for trial i.e. an accused whose trial is not over.

244. Punishment of traders for using wrong scales or weights.

मानेन तुलया वापि योंशमष्टमकं हरेत् ।
दण्डं स दाप्यो द्विशतं वृद्धौ हानौ च कल्पितम् ॥ २४४ ॥

**Prose**—यः मानेन तुलया वापि ( पण्यस्य ) अष्टमकं अंशं हरेत् ( कूटतुलया अपहरेत् ) स द्विशतं (पणं) दण्डं दाप्यः। ( अपहृत पण्यस्य ) वृद्धौ हानौ च कल्पितं ( विचारककल्पितं ) दण्डं दाप्यः ।

**Beng.**—যে বণিক্ জাল ওজন বা জাল বাটখারা দ্বারা খরিদ্দারকে নিজ পণ্যের অষ্টমাংশ কম দেয়, তার দ্বিশত পণ দণ্ড দিতে হইবে। অষ্টমের কম বা বেশী হইলে দণ্ডও কম বা বেশী হইবে।



**Eng.**—If a trader by using wrong weight or scale gives one eighth less in weight to his customer, then he is to pay a fine of two hundred panas; if it be less or more than this one eighth, then fine also will be proportionately less or more.

**Mita**—यः पुनर्वणिक् व्रीहिकार्पासादेः पण्यस्य अष्टमंशं कूटमानेन कूटतुलया वा अन्यथा वा परिहरति असौ पणानां द्विशतं दण्डनीयः। अपहृतस्य द्रव्यस्य वृद्धौ हानौ च दण्डस्यापि वृद्धिहानी कल्प्ये ॥ २४४ ॥

CHARCHA

1. तुलया, मानेन—करणे ३या। These refer to wrong ( जाल ) weight or scale.

2. हरेत्=It means अपहरेत् वा परिहरेत् ॥ अष्टममेव etc अष्टमकम् ( स्वार्थेकन् ) ।

3. वृद्धौ, हानौ—विषयाधि ७मी ॥ कल्पितम refers to दण्डम् ॥

245. Punishment in adulteration of drugs, oils, molass etc.

भेषजस्नेहलवण गन्धधान्य गुडादिषु ।
पण्येषु प्रक्षिपन् हीनं पणान् दाप्यस्तु षोड़श ॥ २४५ ॥

**Prose**—तु भेषजस्नेहलवणगन्धधान्यगुड़ादिषु पण्येषु हीनं ( असारद्रव्यं ) प्रक्षिपन् जनः षोड़शपणान् दाप्यः ।

**Beng.**—ঔষধে, ঘৃত তৈলাদি স্নেহ দ্রব্যে, লবণে, এবং উশীর চন্দনাদি গন্ধ দ্রব্যে, ধান্যাদিতে এবং গুড়াদি পণ্যদ্রব্য বা কোন অসারবস্তু মিশাইলে ষোড়শ ( ষোল ) পণ দণ্ড দিতে হইবে।

Eng.—If one adulterates drugs, oily substances (=oil, ghee, etc.) salts, fragrant spices, paddy and molass etc. by mixing with some bad substitutes then the fine will be sixteen panas.

Mita—भेषजम औषधद्रव्यम्, स्नेहोघृतादिः, लवणं प्रसिद्धम, गन्धद्रव्यम् ऊशीरादि, धान्यगुड़ौ प्रसिद्धौ | आदिशब्दात् हिङ्गुमरीचादि |-- एतेषु असारं द्रव्यं विक्रयार्थं मिश्रयतः षोडशपणो दण्डः ॥ २४५ ॥

### CHARCHA

1. भेषज etc.—इतरेतर द्वन्द्व (because we have द्रव्यविवक्षा here). Qual. पण्येषु। विषयाधि ७मी ॥ construe—एषु हीनम् (आसरं) द्रव्यं प्रक्षिपन् मिश्रयन् जनः—पणान् दाप्यः ॥

246. Similarly fine is to be imposed if one sell imitation goods as real.

मृच्चर्ममणिसूत्रायःकाष्ठवल्कलवाससाम ।
अजातौ जातिकरणे विक्रेयाष्टगुणो दमः ॥ २४६ ॥

Prose—मृच्चर्ममणिसूत्रायः-काष्ठवल्कलवाससाम अजातौ (अतात्त्विके) जातिकरणे (तात्त्विकत्वकथने सति) विक्रेयाष्टगुणो (विक्रेयद्रव्यमूल्यात् अष्टगुणः) दमः देयः।

Beng—মৃত্তিকাতে সুগন্ধিদ্রব্যে সুবভিত আমলকীত্ব কথন। বিড়ালচর্মে বর্ণাধানদ্বারা ব্যাঘ্রচর্মত্ব সম্পাদন, স্ফটিকমণিতে বর্ণসংযোগ করিয়া মরকতত্ব আরোপণ, কার্পাসসূত্রে পট্টসূত্রত্ব স্থাপন, লৌহকে সাদা করিয়া রজতত্ব কথন, বিল্বকাষ্ঠে গন্ধযোগে চন্দনকাষ্ঠত্ব করণ, বাজে কক্কোলাদি ছালকে লবঙ্গ বা দারুচিনিত্ব কথন এবং



কার্পাস বস্ত্রে (বাসস্) প্রক্রিয়াযোগে কৌশেয়ত্ব সম্পাদন—এভাবে অজাতি (অতাত্ত্বিক) দ্রব্যকে বিশুদ্ধ তাত্ত্বিক দ্রব্য বলিয়া বিক্রয় করিলে, বিক্রয় দ্রব্যের মূল্যের আটগুণ পণ দণ্ড হইবে।

Eng.—If one passes a false piece of scented clay as Amalaka, cat's skin as tiger's (by tanning dexterity), a crystal as emerald (by colouring), a cotton thread as silken, a piece of iron as silver (by whitening it), a Bael or Devadaru wood as sandal, ordinary barks as cinnamon or clove, a cotton cloth as a silken one—thus making imitations as real, should be fined eight times of the value of the sold article.

Mita—किञ्च. न विद्यते वहुमूल्याजातिर्यस्मिन् मृगचर्मादिके तद् "अजाति", तस्मिन् जातिकरणे विक्रयार्थं गन्धवर्णरसान्तरसञ्चारणेन वहुमूल्यजातीय-साद्दश्यसम्पादने—[ यथा, मल्लिकामोदसंचारेण मृत्तिकायां सुगन्धामलकमिति, मार्जारचर्मणि वर्णोत्कर्षापादनेन व्याघ्रचर्मेति, स्फटिकमणौ वर्णान्तरकरणेन पद्मराग इति, कार्पासिके सूत्रे गुणोत्कर्षाधानेन पट्टसूत्रमिति, कालायसे वर्णोत्कर्षाधानेन रजतमिति, विल्वकाष्ठे चन्दनामोदसंचारेण चन्दनमिति, कक्कोले त्वगाद्व्यं लवङ्गमिति, कार्पासके वाससि गुणोत्कर्षाधानेन कौशेय मिति ]—विक्रेयस्य आपादितसाद्दश्यमृच्चर्मादेः पण्यस्य अष्टपणो दण्डो वेदितव्यः ॥ २४६ ॥

### CHARCHA

1. अजातौ—In a false unstandard good. अधि ७मी।

2. जातिकरणे—जाति is a real standard article. जातेः करणम् (doing the imitation as standard)। ६ तत। भावे ७मी। Here अजाति is made जाति by dexterity, so there is अभूत तद्भाव। Hence the reading should better have been जातीकरणे

( by अभूततद्भाव च्वि by the rule "कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः"। Such passing of false imitations as real is current now-a-days.

**247-248.** Punishment or fine in case of cheating by false show.

> समुद्गपरिवर्त्तं च सारभाण्डं च कृत्रिमम् ।
> आधानं विक्रयं वापि नयतो दण्डकल्पना ॥ २४७ ॥
> भिन्ने पणे च पञ्चाशत्पणे तु शतमुच्यते ।
> द्विपणे द्विशतो दण्डो मूल्यवृद्धौ च वृद्धिमान् ॥ २४८ ॥

Prose—सारभाण्डं ( सारद्रव्यपूर्णभाण्डं ) च समुद्गपरिवर्त्तं ( कृत्वा ततः ) कृत्रिमम् च भाण्डं आधानंनयतः ( आधिं नयतः ) विक्रयं नयतः ( कुर्वतः जनस्य ) दण्डकल्पनास्यात् । ( यथा ) पणे ( मूल्यभूते पणे ) भिन्ने ( न्यूने सति विक्रेयद्रव्यस्य मूल्ये पणात् न्यूने सति ) पञ्चाशत् दण्डः, पणे तु शतं दण्डः, द्विपणे द्विशतो दण्डः, मूल्येवृद्धौ च वृद्धिमान् दण्डः उच्यते ( See charcha also ).

Beng—মুক্তাদি সারবস্তুপূর্ণ ঢাকনাযুক্ত ভাণ্ড দেখাইয়া, হস্তকৌশলে পরিবর্ত্তিত করিয়া তাদৃশ অন্যভাণ্ডে কৃত্রিম ( মেকি কাচপাথরাদি ) দ্রব্য ভরিয়া যদি সেই অন্য ভাণ্ড কেহ বাঁধা দেয় বা বিক্রয় করে, তবে একপণের কমমূল্যে বিক্রয়াদি করিলে পঞ্চাশপণ দণ্ড, পণমূল্যে বিক্রয়াদি করিলে শতপণ দণ্ড, দুইপণে দুইশত দণ্ড এবং আরো বেশী মূল্য হইলে আনুপাতিক দণ্ড বৃদ্ধি হইবে।

Eng.—If one first shows a covered casket as full of essential pearls and then changes it through sleight of hands and give another same filling it with imitations of mirrorbeads and then keeps it as pawn or sells it ataprice less than a pana then the fine will be fifty panas, if the transaction be one pana, the fine is hundred panas. if it be of two panas then the fine is two hundred panas and the fine will be proportionately higher if the transaction-price is more still.



Mita—मुद्गः पिधानं, मुद्गेण सह वर्त्तत इति समुद्गं करण्डकम । परिवर्त्तनं व्यत्यासः, योऽन्यदेव मुक्तानां पूर्णं करण्डकं दर्शयित्वा हस्तलाघवेन अन्यदेव स्फटिकानां पूर्णं करण्डकं समर्पयति, यश्च सारभाण्डं कस्तूरिकादिकं कृत्रिमं कृत्वा, विक्रयमाधिं वानयति तस्य दण्डकल्पना वक्ष्यमाणा वेदितव्या। कृत्रिमकस्तूरिकादेः मूल्यभूते पणे न्यूने, न्यूनपणमूल्ये इतियावत्। तस्मिन कृत्रिमे विक्राते पञ्चाशत् पणो दण्डः। पणमूल्ये पुनः शतम्। द्विपणमूल्ये द्विशतो दण्ड इत्येवं मूल्य वृद्धौ दण्ड वृद्धिरून्नेया ॥ ४४७-४४८ ॥

## CHARCHA

1. समुद्ग परिवर्त्तम—मुद्ग is lid or cover ( ढाकना इतिभाषा ), परि+वृत+घञ=परिवर्त i.e. परिवर्त्तन changing (व्यत्यास)। मुद्गेन सहवर्त्तमान इति समुद् having covering. तम्। pred to सारभाण्डम्। तस्य परिवर्त्तम्। ( which is obj. of कृत्वा )। one first shows a समुद्ग सारभाण्ड, then he through हस्तकौशल gives another similar casket with similar covering but having no essential ( सार or pearls &c he make परिवर्त्तन—it is then made कृत्रिम artificial outside & inside, and then this कृत्रिम one is placed as आधि ( mortgage or pawn ) or sold ( कृत्रिमम्भाण्डम् आधानं विक्रयं वा नयतः जनस्य दण्ड कल्पना )। Vijnaneswara here wrongly construes—समुद्गपरिवर्त्त सारभाण्डं कृत्रिमं कृत्वा । for it does not well emphasises the परिवर्त्तन, but the construction is—'सारभाण्ड' समुद् परिवर्त्त कृत्वा,

कृत्रिमं ( भाण्डं ) आधानं नयतः etc. नी is द्विकर्मक, so this construction is more—grammatical clear simpler and brings out the छलना better and more prominently ; for the भाण्ड is first of all समुद्ग, परिवर्त्तित and then made into a कृत्रिम भाण्डं and then made into आधि or sale.

2. मूल्यवृद्धौ—भावे ७मी ॥ वृद्धिमान्=दण्डः वृद्धिमान् भवेत् ।

249-50 Fide of traders deceiving artists under them or not selling goods rightly,

सम्भूय कुर्वतामर्घं संबाधं कारुशिल्पिनाम ।
अर्घस्य ह्रासंवृद्धिं वा जानतांदम उत्तमः ॥ २४९ ॥
सम्भूय वणिजां पण्यमनर्घेणोपरुन्धताम् ।
विक्रीणतां वा विहितो दण्ड उत्तमसाहसः ॥ २५० ॥

Prose—( राजनिरूपितस्य ) अर्घस्य मूल्यस्य ह्रासं वृद्धिं वा जानतां सम्भूय कारुशिल्पिनां संबाधं ( पीड़ाकरम् ) अर्घं ( मूल्यं ) कुर्वतां वाणिजां दम उत्तमः ( उत्तमसाहस कथितः दमः ) वा सम्भूय पण्यमनर्घेण अनुचितमूल्येन उपरून्धतां विक्रीणतां वा दण्डः उत्तमसाहसः ।

Beng.—রাজনিরূপিত মূল্যের হ্রাস বা বৃদ্ধি জানিয়াও বণিকগণ যদি মিলিত হইয়া রজকাদি বা চিত্রকর প্রভৃতি শিল্পীদের পীড়াকর কম মূল্যদেয়, তবে তাদের উত্তমসাহস কথিত ( সহস্র পণ ) দণ্ড হইবে। তদ্রূপ বণিকগণ মিলিত হইয়া যদি দেশান্তরাগত পণ্য-সমূহ অনুচিতমূল্যে আটকাইয়া নিজেরকাছে রাখিতে চায় বা অনুচিত উচ্চমূল্যে বিক্রয় করে, তাহা হইলেও তাদের উত্তমসাহস দণ্ড হইবে।

Eng.—Fully knowing the fixed high or low prices of goods ( standardised by the king ), if the traders in union



pay their dyers or painters ( of cloths etc. ) still strained prices, then their fine will be as in उत्तमसाहस। Similarly the traders who in union stock goods ( come from another country ) at a low price or try to sell such goods at an exhorbitant price then also the fine will be as in उत्तमसाहस।

Mita—वणिजः प्रत्याह—राजनिरुपितस्य अर्घस्य ह्रासं वृद्धिं वा जानन्तोपि वणिजः सम्भूय मिलित्वा रजकादीनां चित्रकरादीनां संबाधं पीडाकरं अर्घान्तरं लाभलोभात् कुर्वन्तः पणसहस्रं दण्डनीयाः ॥ २४९ ॥

किञ्च, ये पुनर्वणिजो मिलित्वा देशान्तरागतं पण्यमनर्घेण हीनमूल्येन प्रार्थयमाना ( अपि ) उपरुन्धन्ति, महार्घेण वा विक्रीणते तेषामुत्तमसाहसो दण्डो विहितः मन्वादिभिः ॥ २५० ॥

## CHARCHA

1. अर्घम्—अर्घ is here मूल्य, but in अर्घ्याक्षेप &c ( श्लो. २३२ ) अर्घ is पूजा वा पूजाविधि। "मूल्ये पूजाविधौ अर्घः"। obj. of कुर्वताम् ( qual वणिजाम् understood or as in next sloka ) संबाधम् here means संबाधकरम् ( by णिच् and कर्त्तरि अच् ) and qualifies अर्घम् ॥ The reading of the second line in sl. 249 is also "अर्घस्य ह्रासे वृद्धौ वा साहस्रो दण्ड उच्यते"। The दण्ड here is definite.

2. अनर्घेण—अर्घ is मूल्य and अनर्घ is अनुचितअर्घ ( नञ् denoting तदन्यत्व i.e. उचितान्यत्व। The वणिक् try in union to buy देशान्तरागत पण्य at a low price then stock and suppress it ( उपरुन्धताम्—उप+रुध शतृ ), or sells it at an unusual high price ( अनर्घेण अनुचितमूल्येन विक्रीणताम् वणिजाम् )—will be punished as in उत्तमसाहस।

251. Transactions at the rate to be fixed by the king.

राजनि स्थाप्यते योऽर्घः प्रत्यहं तेन विक्रयः ।
क्रयो वा निःस्रवस्तस्माद्वणिजां लाभकृत् स्मृतः ॥ २५१ ॥

Prose—राजनि (सति) यः अर्घः (मूल्यं) स्थाप्यते (निरूप्यते) तेन प्रत्यहं विक्रयः क्रयः वा स्यात । तस्मात् निःस्रवः (उद्वृत्तः अवशेषः) एव लाभकृत स्मृतः । [N. B.—अहनि अहनि इति प्रत्यहम्, "वीप्सायामव्ययीभावः" —See our sak. II ]

Beng.—রাজার উপস্থিতিতে যে মূল্য নিরূপিত হইবে, সেই মূল্যেই প্রত্যহ ক্রয় বিক্রয় হইবে এবং অবিশিষ্ট উদ্বৃত্ত অংশই লাভ বলিয়া গণ্য হইবে।

Eng.—If the price is fixed in the presence of the king, sale and purchase should be at that price daily ; and in each case the excess residue (निःस्रव—see Mita) got is the profit.

Mita.—केन पुनरर्घेण पणितव्यमित्याह—राजनि सन्निहिते सति, यस्तेन अर्घः स्थाप्यते निरूप्यते तेनार्घेण प्रतिदिनम क्रयो बिक्रयो वा कार्य्यः । निर्गतः स्रवः "निःस्रव" अवशेषः । तस्मात राजनिरूपितात अर्घात यः निःस्रव स एव वणिजां लाभकारी, न पुनः स्वच्छन्दपरिकल्पितात् । [मनुना अर्घप्रकरणे विशेषो दर्शितः—"पञ्चरात्रे पञ्चरात्रे पक्षे मासे तथा गते । कुर्वीतचैषां प्रत्यक्षमर्घसंस्थापनं नृपः" ॥ इति ] ॥ २५१ ॥

252. Amount of Profit to be done on internal or external पण्य ।

स्वदेशपण्ये तु शतं वणिग् गृह्णीत पञ्चकम् ।
दशकं पारदेश्ये तु यः सद्यः क्रयविक्रयी ॥ २५२ ॥

Prose—वणिक् स्वदेशपण्ये तु पञ्चकं शतम् गृह्णीत । पारदेश्ये पण्ये—य



पणः सद्यः क्रयविक्रयी—तत्र दशकं शतं गृह्णीत । [N.B.—for पञ्चकं शतं दशकं शतं see ante sl. 37 and 199 etc ].

Beng.—স্বদেশজাত পণ্যে বণিক্ শতকরা পাঁচপণ লাভ লইবে। আর পরদেশজাত পণ্যে যাহা সদ্যঃ অর্থাৎ সেই দিনই বিক্রয় হইয়া যায়—তাতে শতকরা দশপণ লাভ লইবে।

Eng.—The trader should take five per cent profit on one's own country-products ; but on external country-products that are sold then and there (on that very day) should take ten percent profit.

Mita—किञ्च स्वदेशप्राप्तं पण्यं गृहीत्वा योविक्रणीते असौपञ्चकं शतं, पणशते पणपञ्चकं लाभं गृह्णीयात् । परदेशात् प्राप्ते पुनः पण्ये शतपणमुल्ये दशपण लाभं गृह्णीयात । यस्य पणस्य ग्रहणदिवसे एव विक्रयः सम्पद्यते । यः पुनः कालान्तरे विक्रीणीते तस्य कालोत्कर्षवशात् लाभोत्कर्षः कल्प्यः । एवञ्च यथार्घे निरुपिते पणशते पञ्चपणो लाभो भवति, तथैवार्घो राज्ञा स्वदेशपण्यविषये स्थापनीयः ॥ २५२ ॥

CHARCHA

1. गृह्णात—ग्रह+लिङ ईत । कर्त्रभिप्राये क्रियाफले आत्मनेपदम् ॥ for पञ्चकं शतम् see sl. 37 and 199 ante etc

2. पारदेश्ये—परः देशः परदेशः anothers or external country. कर्मधा— । परदेशे साधु इति परदेश+साध्वर्थयत्=परदेश्यः । thus vamana says "राजवंश्यादयः साध्वर्थेयं भवन्ति" । then परदेश्य एवं इति स्वार्थे प्रज्ञादि अण्=पारदेश्यः—तस्मिन् । अधि ७मी । वा देशे भव इति दिगादियत्=देश्य । परस्य (सम्बन्ध) देश्य इति परदेश्यः । ततः स्वार्थे अण् ॥ Qual पण्ये ॥ Here यः (पणः) सद्यः क्रय विक्रयी i. e. सद्यः क्रय

विक्रययुक्तः with मत्वर्थइन् after क्रयविक्रय ) is a parenthetical clause ; on such परदेशजात पण्य profit should be 10%.

253. Determination of price on परदेशपण्य ।

पण्यस्योपरि संस्थाप्य व्ययं पण्यसमुद्भवम् ।
अर्घोऽनुग्रहकृत् कार्य्यः क्रेतुर्विक्रेतुरेव च ॥ २५३ ॥

Prose—पण्यस्य उपरि पण्यसमुद्भवं व्ययं संस्थाप्य, क्रेतुः विक्रेतुः एव च अनुग्रहकृत् अर्घः ( मूल्यं ) कार्य्यः ( विधेयः ) ।

Beng.—বিদেশ হইতে আনীত পণ্যের দরের উপর পণ্য সংগ্রহ এবং শুল্ক ব্যয়াদি ধরিয়া ক্রেতা ও বিক্রেতার সুবিধাজনক মূল্য ধার্য্য করিবেন ।

Eng.—As regards external articles. the expenses for its securing, revenue charges etc should be added, to the original price and then a price is to be fixed suitable for both the buyer and seller.

Mita—पारदेश्यपण्ये अर्घनिरूपणप्रकारमाह—देशान्तरादागत पण्ये, देशान्तरगमनागमन—भाण्डग्रहण—शुल्कादिस्थानेषु यावानुपयुक्तोर्थः तावन्तमर्थं परिगणय्य पण्यमूल्येन सह मेलयित्वा यथा पणशते दशपणो लाभः सम्पद्यते तथा क्रेतृविक्रेत्रोरनुग्रहकारी अर्घः राज्ञा स्थापनीयः ॥ २५३ ॥ इति प्रासङ्गिक साहस-प्रकरणं समाप्तम् ॥

## CHARCHA

1. पण्यस्य उपरि—That is on the original cost-price of the पण्यद्रव्य ।

2. अनुग्रहकृत्—Qual. अर्घः । अनुग्रहं ( आनुकुल्यं ) करोतीति



अनुग्रहकृत् ( क्विप् )—which will be beneficial to both the buyer and the seller. Hence here अनुग्रह is "advantageous or suitable."

## अथ विक्रीयासंप्रदानप्रकरणम्

[ The section on non-delivery of goods after selling these ]

Remark—Not to give to the customer the good sold to him after taking money thereof constitutes a point of litigation And this is called "विक्रीयासम्प्रदानम्" । Thus Narada says 'विक्रीय पण्यंमूल्येन क्रेतुर्यन्न प्रदीयते । विक्रीयासम्प्रदानं तद्विवादपदमुच्यते" बस्त ।

Mitakshara ( Introductory )—प्रासङ्गिकं परिसमाप्य अधुना विक्रीयासम्प्रदानम् प्रक्रमते ( ततस्वरूपं च नारदेनाभिहितम्—"विक्रीय पण्यं मूल्येन यत्क्रेतुर्न प्रदीयते । विक्रीयासम्प्रदानं तद्विवादपदमुच्यते" इति । तत्रविक्रेयद्रव्यस्य चराचरभेदेन द्वैविध्यमभिधाय पुनः षडविधत्वं तेनैव प्रत्यपादि—" लोकेस्मिन द्विविधं पण्यं जङ्गमं स्थावरं तथा ( पण्यद्रव्य are of two types—स्थावर and जङ्गम ) । षड़विधस्तस्य तु बुधैदानादानविधिःस्मृतः । गणितं तुलितं मेयं क्रियया रूपतः श्रिया ।—इति गणितं ( to be counted ) क्रमुकफलादि ( arecanuts etc ), तुलितं ( to be weighed ) कणककस्तूरी कुङ्कुमादि, मेयं ( to be measured ) शाल्यादि ( sali paddy etc ), क्रियया वाहदोहादिरूपया उपलक्षितं अश्वमहिष्यादि । रूपतः उपलक्षितं पण्याङ्गनादि, श्रिया दीप्तया उपलक्षितं मरकतपद्मरागादि इति ॥ एतत्षट्-प्रकारकमपि पण्यं विक्रीय असंप्रयच्छतो ( जनस्य ) दन्हमाह—

254. If पण्य is not given to the buyer after taking price of it, then it is to be paid along with interest.

गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति ।
सोदयं तस्य दाप्योसौ दिग्लाभं वा दिगागते ॥ २५४ ॥

Prose—यः गृहीतमुल्यं पण्यं क्रेतुः (सम्बन्धे, क्रेत्रे उत्यर्थः) नैव प्रयच्छति, असौ राज्ञा तस्य (क्रेतुः सम्बन्धे) सोदयं पण्यं दाप्यः। दिगागते (देशान्तरागतविषये) दिग्लाभं पण्यं दाप्यः (असौ राज्ञा दाप्यः)।

Beng.—যদি কেহ পণ্য মূল্য লইয়া, সেই পণ্য ক্রেতাকে না দেয়, তবে রাজা তাকে দিয়া সসুদ পণ্য ক্রেতাকে দেওয়াইবেন। আর দেশান্তরাগত পণ্যদ্রব্যে দেশান্তরে বিক্রয়দ্বারা যে লাভ হইবে সেইলাভ সমেত পণ্য বিক্রেতাদ্বারা ক্রেতাকে দেওয়াইবেন।

Eng.—If any one (i. e. a seller) does not deliver to the buyer goods after taking the price of the same, then the king will cause the seller to hand over the good to the buyer along with difference of the price; and in cases of goods from outside country the seller will hand over the good along with the propfit done in outside country.

Mita—गृहीतं मूल्यं यस्य पण्यस्य विक्रेत्रा तद्गृहीतमूल्यं, तद्यदि विक्रेता प्रार्थ्यमानाय स्वदेशवणिजे क्रेत्रे न समर्पयति, तच्च पण्यं यदि क्रयकाले बहुमूल्यं सत्कालान्तरेऽल्पमूल्येनैव लभ्यते, तदार्घह्रासकृतो य उदयो वृद्धिः पण्यस्य स्थावरजङ्गमात्मकस्य तेन सहितं पण्यं विक्रेता क्रेत्रे दापनीयः। [तदा मूल्यह्रासकृतः पण्यस्योदयो नास्यि, किं तु क्रयकाले यावदेवेयतो मूल्यस्येव पण्यमिति प्रतिपन्नं तावतेव तदा तत्पण्यमादाय तस्मिन्देशे विक्रीणानस्य, यो





लाभस्तेनोदयेन सहितं द्विकं त्रिकमित्यादिप्रतिपादितवृद्धिरूपोदयेन वा सहितं क्रेतृवाञ्छावशाद्दापनीयः; यथाह नारदः (८।५)—'अर्घश्चेदवहीयेत सोदयं पण्यमावहेत्। स्थानिनामेष नियमो दिग्लाभं दिग्विचारिणम्॥' इति। यदा त्वर्घमहत्त्वेन पण्यस्य न्यूनभावस्तदा तस्मिन्पण्ये वस्त्रगृहादिके य उपभोगस्तदाच्छादनसुखनिवासादिरूपो विक्रेतुद्गततत्सहितं पण्यमसौ दाप्यः; यथाह नारदः—'विक्रीय पण्यं मूल्येन यः क्रेतुर्न प्रयच्छति। स्थावरस्य क्षयं दाप्यो जङ्गमस्य क्रियाफलम्॥" इति। विक्रेतुरुपभोगः क्षय उच्यते; क्रेतृसंबन्धित्वेन क्षीयमाणत्वात्, न पुनः कुड्यपातसस्यधातादिरूपः। तस्य तु—'उपहन्येत वा पण्यं दह्येतापह्रियेत वा विक्रेतुरेव सोऽनर्थो विक्रीयासंप्रयच्छतः॥' इत्यत्रोक्तत्वात्। यदा त्वसौ क्रेता देशान्तरात्पण्यग्रहणार्थमागतस्तदा तत्पण्यमादाय देशान्तरे विक्रीणानस्य यो लाभस्तेन सहितं पण्यं विक्रेता क्रेत्रे दापयितव्यः। अयं च क्रीतपण्यसमर्पणनियमोऽनुशयाभावे द्रष्टव्यः॥ सति त्वनुशये 'क्रीत्वा विक्रीय वा किंचिदि'त्यादि मनूक्तं वेदितव्यम्॥ २५४॥

## CHARCHA

1. दिगागते—that is दिगागते पण्ये—विषयाधिकरणे ७मी। दिशः (देशान्तरात्) आगतम्। सुप्सुपा। तस्मिन्॥ दिग्लाभम्—दिशः (देशान्तरात प्राप्तः) लाभः। तद्युक्तम्। Refers to पण्यम्। उक्तकर्म of दाप्यः।) construe—असौ पण्यम् राज्ञा दाप्यः॥ सोदयं—ऊदयेन वृद्ध्या सहवर्त्तमानम्। or सहोदयम्। Refers to पण्यम्।

255. If buyer does not take the sold good, then loss if any is to be made up by the buyer.

विक्रीतमपि विक्रेयं पूर्वक्रेतर्यगृह्णति।
हानिश्चेत् क्रेतृदोषेण क्रेतुरेव हि सा भवेत्॥ २५५॥

Prose—विक्रीतमपि पण्यं पूर्वक्रेतरि अगृह्णतिसति विक्रेयं भवेत्। चेत् (यदि) क्रेतृदोषेण हानिः स्यात्, तदा सा हानिः क्रेतुरेव भवेत्॥

Beng.—বিক্রীত বস্তু পূর্বক্রেতা যদি না নেয়, তবে পুনরায় তাকে অন্যত্র বিক্রয় করা যাইবে। আর ক্রেতৃদোষে যদি বিক্রেতার হানি বা ক্ষতি হয়, তবে সে ক্ষতি পূর্বক্রেতাব বহন করিতে হইবে।

Eng.—If a buyer does not take a good, sold to him then it can be resold again ; and if loss accrues or ensues somehow in this then this loss will be borne by the first buyer ( पूर्वक्रेता )।

Mita—किञ्चयदा पुनर्जातानुशयः क्रेता पण्यं न जिघृक्षति, तदा "विक्रीतमपि पण्यमन्यत्र विक्रेयम्। यदा पुनर्विक्रेत्रा दीयमानं क्रेताऽन गृह्णाति, तच्च पण्यं राजदैविकेनोपहतं; तदा क्रेतुरेवासौ हानिर्भवेत् पण्याग्रहणरूपेण क्रेतृदोषेण नाशितत्वात् ॥ २५५ ॥

CHARCHA

1. अगृह्णति—ग्रह+शतृ। ७मी १ वचन। Pred to पूर्वक्रेतरि ( wh has भावे ७मी )। The अग्रहण is due to this अनुताप—that he is deceived due to this.

2. क्रेतृदोषेण—हेतौतया वा करणे तया। The दोष or loss of पण्य due to राजन् वा दैव दोष or due to fall of price etc is to be borne by पूर्वक्रेता। cp.—"क्रेतृदोषेण नाशितत्वात्"॥ हानि here is ( acc. to विज्ञानेश्वर ) राजदैविक। But हानि may be due to fall of price of the good after it is first sold

256. The seller is to bear the loss if after asking by the buyer, the good is damaged due to royal or divine dispensation.

राजदैवोपघातेन पण्ये दोषमुपागते।
हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः ॥ २५६ ॥



Prose—राजदैवोपघातेन पण्ये दोषमुपगते, याचितस्य ( सम्बन्धे ) अप्रयच्छतः विक्रेतुरेव असौ हानिः स्यात् ( न तु क्रेतुर्हानिः )।

Beng.—বিক্রেতা প্রার্থিত হইয়াও যদি বিক্রীত দ্রব্য ক্রেতাকে না দেয়, তখন রাজজন্য বা দৈবকৃত আঘাতে বা কারণে পণ্যের দুষ্টতা ( ক্ষতি ) দেখা দিলে, সেই ক্ষতি বিক্রেতারই হইবে।

Eng.—If the seller does not give the sold good to the buyer even if asked, then the subsequent loss due to revolution or divine dispensation will be of the seller ( विक्रेता )।

Mita—अपिच, तदा पुनः क्रेत्रा प्रार्थ्यमानमपि पण्यं विक्रेता न समर्पयति अजातानुशयोपि, तच्च राजदैविकेनोपहतं भवति, तदासौ हानिर्विक्रेतुरेव। अतोन्यददुष्टं पण्यं विनष्टसदृशं क्रेत्रे देयम् ॥ २५६ ॥

CHARCHA

1. राजदैवोपघातेन—राजन् here is राजकृत by लक्षणा, and दैव is दैवकृत by लक्षणा। राजा च दैवश्च राजदैवम्, समाहार by "अध्ययनतोऽविप्रकृष्टानाम्—"। तेन उपघातः ( आघातः विपद इत्यर्थः ) ततत्। तेन। करणे तया is better here due to क्रिया in दोषमुपागते ॥ or राजदेवे भवम् can give राजदैविकम् with ठञ् and उभयपदवृद्धि ( अनुशतिकादि ) or irregular उत्तरपदवृद्धि as in गुरूलाघवम् पितृपैतामह & पुत्रपौत्रिकम्। see ante also. st. 197 etc.

257. If seller again resells good without buyer's permission then he is to pay fine double the value of the good &c.

अन्यहस्ते च विक्रीय दुष्टं वा अदुष्टवद् यदि।
विक्रीणीते दमस्तत्र मूल्यात्तु द्विगुणो भवेत् ॥ २५७ ॥

Prose—यदि पण्यम् अन्तहस्ते विक्रीय पुनः विक्रीणीते, यदि च दुष्टं (पण्यम्) अदुष्टवत विक्रीणीते, तदा तत्र मूल्यात (पण्यमूल्यात) द्विगुणः दमः भवेत्।

Beng.—যদি কেহ কোন পণ্য একজনকে বিক্রয় করিয়া পুনর্বায় অপরকে তাহা বেচে, বা যদি দুষ্টদ্রব্য অদুষ্টবলিয়া বেচে, সে স্থলে পণ্য দ্রব্যমূল্যের দ্বিগুণ অর্থ দণ্ড হইবে।

Eng.—If any one after selling a good to one resells it (without the buyer's permission), or sells a damaged good as if new, then he is to pay a fine double the amount of the sold good.

Mita—किञ्च यः पुनर्विनैव अनुशयम एकस्य हस्ते विक्रीतं पुनरन्यस्य हस्ते विक्रीणीते, सदोषं वा पण्यं प्रच्छादितदोषं विक्रीणीते, तदा तत्पण्यमूल्यात् द्विगुणो दमो वेदितव्यः। [ नारदेनाप्यत्र विशेषोदर्शितः—"अन्यहस्ते च विक्रीय योन्यस्मै तत्प्रयच्छति। द्रव्यं तद्द्विगुणं दाप्यो विनयस्तावदेव तु। निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति। स मूल्याद्द्विगुणं दाप्यो विनयं तावदेव तु।" इति।। सर्वश्चायं विधिर्दत्तमूल्ये पण्ये द्रष्टव्यः। अदत्तमूल्ये पुनः पण्ये वाङ्मात्रक्रये क्रेतविक्रेतोर्नियमकारिणः समयाद्दते (exception where there is stipulation between क्रेता+विक्रेता) प्रवृत्तौ निवृत्तौ वा न कश्चिद्दोषः। यथाह नारदः—"दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्तितः। अदत्ते अन्यत्र समयान्नविक्रेतुरविक्रयः" ।। इति ] ।। २५७ ।। Charcha—Easy.

258. There should be no remorse after transaction carefully done ; if still remore arises then there should be a fine of one sixth amount.

क्षयं वृद्धिं च वणिजा पण्यानामविजानता।
क्रीत्वा नानुशयः कार्य्यःकुर्वन्षड्भागदण्डभाक् ।। २५८ ।।



Prose—पण्यानां क्षयं (मूल्यक्षयं) वृद्धिं (मूल्यवृद्धिम्) अविजानता वणिजा क्रीत्वा अनुशयः न कार्य्यः। अनुशयं कुर्वन् षड्भागदण्डभाक् भवेत्।

Beng—পরীক্ষা করিয়া কিনিবার সময় পণ্যের মূল্যের হ্রাস বা বৃদ্ধি না জানিয়া কিনিবার জন্য পরে আর অনুশয় বা অনুতাপ চলে না। (মূল্য অধিকে ক্রয় হইয়াছে বা কম মূল্যে বিক্রয় হইয়াছে—এভাবে অনুতাপ, পরীক্ষিত ভাবে কিনিবার পর কোন পক্ষেই আর চলে না)। তথাপি যদি ক্রেতা বা বিক্রেতা পরে এভাবে অনুতাপ করে, তবে রাজার নিকট দ্রব্যমূল্যের ষষ্ঠাংশ মূল্য দণ্ড দিতে হইবে।

Eng.—If one does not well know the less or higher current price of a good, but only transacts the same with another after due consideration then no remorse or repentance should not be entertained by either of them ; if still one of them do create repentance later on then he is to pay a fine of one sixth amount of the value of the good.

Mita—विक्रयानुशयोभिहितः। क्रीतानुशयस्वरूपं तु प्राक् प्रपञ्चितम्। तदुभयंसाधारणं धर्ममाह—परीक्षितक्रीतपण्यानां क्रयोत्तरकालं क्षयकालपरिमाणतः अर्घकृतां वृद्धिमपश्यता क्रेता अनुशयः न कार्य्यः। विक्रेता च महार्घनिबन्धनं पण्यक्षयमपश्यता नानुशयितव्यम्। वृद्धिक्षयपरिज्ञाने पुनः क्रेतृविक्रेत्रोरनुशयः भवतीति व्यतिरेकाद्युक्तं भवति। [ अनुशयकालावधिस्तु नारदेन उक्तः—"क्रीत्वा मूल्येन यः पण्यं दुःक्रीतं मन्यते क्रयी। विक्रेतुः प्रतिदेयं तत् तस्मिन् अहन्यविक्षतम्। द्वितीयेह्नि ददत् क्रेतामुल्यात् त्रिंशांशमारहेत्। द्विगुणं तु तृतीयेह्नि परतः क्रेतुरेव तत्।।" इति ]। अपरीक्षित क्रयविक्रये पुनः पण्यवैगुण्यनिबन्धनानुशयावधिः "दशैकपञ्चसप्ताहे" इत्यादिना दर्शित एव। तदनया वाचोयुक्त्या-

वृद्धिक्षयपरिज्ञानस्य अनुशयकारणत्वमवगम्यते। यथा—गण्यपरीक्षाविधिवलात् पण्यदोषाणामनुशय कारणत्वम् अतः पण्यदोषतद्वृद्धिक्षयकारण-त्रितयाभावे अनुशय कालाभ्यन्तरेपि यद्यनुशयं करोति तदा पण्यषड्भागं दण्डणीयः। अनुशय-कारणसद्भावेपि अनुशयकालातिक्रमेण अनुशयं कुर्वतः अयमेव दण्डः। उपभोगेन अविनश्वरेषु स्थिरार्घेषु अनुशयकालातिक्रमेण अनुशयं कुर्वतः मनूक्तो दण्डो द्रष्टव्यः—"परेण तु दशाहस्य न दद्यात् नापि दापयेत्। आददानो ददच्चैव राज्ञा दण्ड्यः शतानिषट्" ॥ इति ॥ २५८ ॥ इति विक्रयासम्प्रदानं नाम प्रकरणं समाप्तम् ॥

## CHARHCA

1. क्षयं वृद्धिम् अविजानता—If the transaction is of सुपरीक्षित-द्रव्य but without paying heed to price, then there should be no remorse; but if still at a later time, either the seller or buyer creates and shows repentance, then he is rather to be fined by the king. See Mita also for details here.

2. षड्भाग—षट (षष्ठः) भागः इति षड् भागः। कर्मधा। here षट् means षष्ठ by the dictum "संख्याशब्दस्य वृत्तिविषये क्वचित् पूरणार्थ-त्वमिष्यते"। See our तपः षड्भागमक्षय्यम् in sak III. षड्भागः दण्डः। कर्मधा। षड्भागदण्डं भजति इति षड्भागदण्डभाड् with ण्विप्रत्यय। construe अनुशयं कुर्वनं वणिक् दण्डभाग् भवेत् ॥

## अथ सम्भूयसमुत्थानप्रकरणम्

[ The section on business by united effort or co-operation—समवायव्यवसाय ]

Remark—सम्भूय means मिलित्वा by co-operation. and समुत्थान is an enterprise or business. Such cooperative business involves विवादपद or litigation if the parties do not act. acc. to promise or contract as to loss, profit and share So here Vijnaneshwara says—'सम्भूयसमुत्थानं नाम विवादपदमिदानीमभिधीयते—

259. Loss and profit in co-operative business should be acc. to capital laid out or promise or contract

समवायेन वणिजां लाभार्थं कर्मकुर्वताम्।
लाभालाभौ यथाद्रव्यं यथा वा संविदाकृतौ ॥ २५९ ॥

Prose—समवायेन (मिलितकर्मकरणेन) लाभार्थं कर्मकुर्वतां वणिजां लाभालाभौ यथाद्रव्यम् (द्रव्यार्थे दत्तधनानुसारेण) वा संविदा (समयरूपया प्रतिश्रुत्या) कृतौ (स्थिरीकृतौ वेदितव्यौ)।

Beng.—"আমরা মিলিত ভাবে কর্ম করিব" এইরূপ সমবায় বা মিলিতপ্রথায় লাভের জন্য যে বণিগাদিগণ ব্যবসায় কর্ম করে, তাতে পণ্যদ্রব্যজন্য প্রদত্তধনানুসারে বা পরস্পর মধ্যে প্রতিশ্রুতি অনুসারে লাভলাভ স্থিরীকৃত হইবে।

Eng.—Traders carrying on business on co-operative system (समवायप्रथा) should get profit or loss according to

money laid out for buying merchandise ( पण्यद्रव्य ) or according to mutual agreement or contract.

Mita—"सर्वे वयं इदं कर्ममिलिताः कुर्मः" इत्येवं रूपा संप्रतिपत्तिः समवायः ( समवाय here is mutual understanding that we will do this unitedly )। तेन ये वणिक्-नटनर्त्तकप्रभृतयः लाभलिप्सवः प्रातिस्विकं ( according to his own ) कर्म कुर्वते, तेषां लाभालाभौ उपचयापचयौ "यथाद्रव्यं" येन यावद्धनं पण्यग्रहणाद्यर्थं दत्तं तदनुसारेण अवसेयौ। यद्वाप्रधान-गुणभावपर्य्यालोचनया "अस्य भागद्वयम् अस्य एको भाग" इत्येवं रूपया "संविदा" समयेन यथा संप्रतिपन्नौ तथा वेदितव्यौ ॥ २५९ ॥

## CHARCHA

1. समवायेन—सम्+अव+अय घञ्=समवाय acting in union ; in co-operation ; तेन। करणे ३या ॥ लाभार्थम्=लाभाय इदम् लाभार्थम्। नित्य सत् of ४र्थी तत् class. adv Qual कुर्वताम् ( in कर्म कुर्वताम् )।

2. यथाद्रव्यम्—द्रव्य is here both धन ( capital ) and पण्यद्रव्य। That is, पण्यजन्य दत्तधन। द्रव्यस्य अनतिक्रम इति यथाद्रव्यम् acc. to capital given for पण्यद्रव्य। अव्यर्यीभाव। adv. qual. कृतौ ॥ संविदा—संविद is समय or promise of understanding i.e, mutual agreement or contract. करणे ३या ॥ See also Mita

260. Loss in समवाय due to one's misdeed or carelessness should be made up.

प्रतिषिद्धमनादिष्टं प्रमादाद् यच्च नाशितम्।
स तद्दद्याद विप्लवाच्च रक्षिताद् दशमांशभाक्॥ २६० ॥

Prose—प्रतिषिद्धम् ( "इदं पण्यम् इत्थं न व्यवहर्त्तव्यम्" इति प्रतिषिद्ध-पण्यम् ), अनादिष्टम् ( यस्मिम् पण्ये किमपि व्यवहारानुज्ञानं नास्ति, तत अनादिष्टं



पण्यम् ) आचरता, तथा प्रमादात् यच्च ( पण्यं ) येन नाशितम्, सः ( येन नाशितं सः ) तद् दद्यात् ( अन्यवणिग्भ्यो क्षतिपूरणरूपेण दद्यात् )। च ( किन्तु ) विप्लवात् ( राष्ट्रविप्लवात् ) रक्षितात् पण्यात् सः रक्षिता दशमांशभाक् भवेत्।

Beng.—"এ দ্রব্য এভাবে বেচাকেনা করিবে না" এইরূপ প্রতিষিদ্ধ পণ্য, আর যে পণ্যের বেচাকেনার কোন নির্দেশ নাই তাদৃশ অনাদিষ্ট পণ্যের যথেচ্ছ ব্যবহার করিতে যাইয়া বা নিজ অসাবধানতা-বশতঃ যে পণ্য নষ্ট হইবে, তা হইলে যে নষ্ট করিবে সে অন্যদের সেই ক্ষতিপূরণ দিবে। আবার যদি কেহ রাষ্ট্রবিপ্লব হইতে কোন পণ্যদ্রব্য রক্ষা করে, তবে রক্ষিতা, রক্ষিতদ্রব্যের দশমাংশ পাইবে।

Eng.—In dealing with a पण्य otherwise ( as instructed ), or in dealing with a पण्य where no instruction is given, or if out of one's carelessness some merchandise is lost, then it is to be made up to other partners ; but if one save some merchandise out of revolution, then the saviour is to get one tenth value of this ( evidently in addition to his share in the co-operative business. )

Mita—किञ्च तेषां सम्भूयप्रचरतां मध्ये "पण्यमिदम् इत्थं न व्यवहर्त्तव्यम्" इति "प्रतिषिद्धम्" आचरता यन्नाशितम्, "अनादिष्ट" अननुज्ञातं वा कुर्वाणेन, तथा "प्रमादात्" प्रज्ञाहीनतया वा येन यन्नाशितं स तत् पण्यं वणिग्भ्यो दद्यात्। य पुनस्तेषां ( सम्भूय कुर्वतां ) मध्ये चौरराजादिजनितात् व्यसनात् पण्यं पालयति स "तस्मात् रक्षितात् पण्यात्दशमांशं लभते" ॥ २६० ॥

## CHARCHA

1. प्रतिषिद्धं. अनादिष्टम्—Refers to पण्यम् ( which is obj. of आचरता &c. understood ). प्रमादात् has हेतौ ५मी।

2. विप्लवात्—mainly it refers to राष्ट्रविप्लव। comp. "दुर्भिक्षेराष्ट्रविप्लवे" in hito. Mit takes it as व्यसन् due to both चौर and राष्ट्रविप्लव। अपादाने ५मी by "भीत्रार्थानां भयहेतुः"। If here रक्षितात is the reading then रक्षितात् has अपादाने ५मी ॥ The reading here is also is "रक्षिता दशमांशभाक्" this is more forceful and easy of understanding due to mention of the nom. Here "च" in विप्लवाच्च has sense of पक्षान्तर ॥

261. King's due revenue is to be given ; and punishment in selling of prohibited articles.

अर्घप्रक्षेपणाद्विंशं भागं शुल्कंनृपो हरेत् ।
व्यासिद्धं राजयोग्यञ्च विक्रीतं राजगामि तत् ॥ २६१ ॥

Prose—अर्घप्रक्षेपणात् ( राज्ञा अर्घनिर्द्धारणात् हेतोः ), नृपः विंशं भागं ( मूल्यात् विंशतितममंशं ) शुल्कं ( शुल्कस्वरूपं ) हरेत् ( गृह्णीयात् )। व्यासिद्धम् ( अन्यत्र न विक्रेयमिति राज्ञा प्रतिषिद्धं ) राजयोग्यं च पण्यं विक्रीतं ( राजाज्ञया विना विक्रीतं ) चेत् तत् ( पण्यं ) राजगामि भवेत् ।

Beng.—রাজা মূল্য নির্দ্ধারণ করেন বলিয়া, রাজা শুল্ক বা আয় কর স্বরূপ মূল্যের কুড়ি ভাগের এক ভাগ পাইবেন। "ইহা অন্যত্র বিক্রয় করিবেনা" এইরূপ রাজনিষেধ থাকিতেও ( যথা মদ্যাদি ) অথবা রাজযোগ্য মরকতাদি রাজাকে না জানাইয়া বিক্রয় করিলে, রাজাই সব পণ্য পাইবেন।

Eng.—As the king fixes the price of commodities or merchandise so he is entitled to one-twentieth part as revenue ( or income tax ); but the whole of पण्य will go to the king if any prohibited article ( as wine etc ) or



gems fit for kings are sold without prior intimation to the king.

Mita—"इयतः पण्यस्य इयन्मूल्यम्" इत्यर्घः, तस्य "प्रक्षेपणात्" राजतो निरूपणात् हेतोः असौ मूल्याद् विंशतितमंशं शुल्कार्थं राजा गृह्णीयात्। यत पुन- "र्व्यासिद्धम्" "अन्यत्र न देयम् इति राज्ञा प्रतिषिद्धं, यच्च राजयोग्यं मणिमाणिक्याद्यप्रतिषिद्धमपितद्राने अनिवेद्य लाभलोभेन विक्रीतं चेत् ( तत् ) राजेगामि। मूल्यदाननिरपेक्षं ततसर्वं पण्यं राजा अपहरेदित्यर्थः ॥ २६१ ॥

## CHARCHA

1. अर्घप्रक्षेपणात—अर्घ=मूल्य। प्रक्षेपण is fixing ( निर्धारण ); अर्घस्य प्रक्षेपणम्। तस्मात्। हेतौ ५मी।

2. विंशम् भागम्—It may mean both one twentieth of sale price or 1/20th of the profit Mit seems to take it in the first sense.

3. व्यासिद्धम—वि+आ+सिध क्त। It means prohibition as not to sell to other. Q. पण्यम्।

262. Punishment in showing wrong weight or seceding from the point of revenue or in selling stolen goods

मिथ्यावदन् परीमाणं शुल्कस्थानादपासरन् ।
दाप्यस्त्वष्टगुणं यश्च सव्याजक्रय-विक्रयी ॥ २६२ ॥

Prose—परीमाणं ( परिमाणं वा ) मिथ्यावदन् ( गोपनं कृत्वा ), शुल्कस्थानात् अपासरन् ( अपगतो भूत्वा शुल्कमदत्त्वा च ), यश्च सव्याजक्रयविक्रयी ( विवादास्पदीभूतं पण्यं क्रीणाति विक्रीणीते वा )—स पण्यात् अष्टगुणं दण्डं दाप्यः ( राज्ञा दाप्यः )।

Beng.—যে পণ্য পরিমাণ কম দেখাইয়া পণ্যপরিমাণ গোপন

করে, বা কর ফাঁকিদিবার জন্য যে শুল্কস্থান হইতে দূরে সরিয়া থাকে, বা যে চোরাইমাল বা অন্যের দ্রব্য ক্রয় বিক্রয় করে—এই তিনপ্রকার ব্যক্তিই পণ্যমূল্যের আটগুণ দণ্ডে দণ্ডিত হইবেন।

Eng.—If one shows less amount of commodities ( and suppresses weight, accounts ), or if anyone secedes from the place of taxation ( and thus evades Incometax ), or if anyone carries on transaction of stolen and other's good—then all these will have to pay a fine eight times as much as the price of goods ( thus sold ).

Mita—यः पुनर्वणिक् शुल्कवञ्चनार्थं पण्यपरिमाणं निन्हुते, शुल्कग्रहणस्थानाद् वा अपसरति, यश्च "अस्येदम् अन्यस्य इदं वा" इत्येवं विवादास्पदीभूतं पण्यं क्रीणाति विक्रीणीते वा ते सर्वे पण्यादष्टगुणं दण्डनीयाः ॥ २६२ ॥

CHARCHA

1. परीमाणम् मिथ्यावदन्—Both परीमाण and परिमाण are correct by the dictum "क्विप्घञादौ क्वचित् उपसर्गस्य दीर्घत्वम्"। falsification of weight and amount etc. of goods sold.

2. सव्याज etc.—व्याज is falsehood. व्याजेन सह वर्त्तमानम्, सव्याजम्, बहु। क्रयविक्रयौ, द्वन्द्व। सव्याजः क्रयविक्रयः अस्तिअस्य इति मत्वर्थे इनिः। सव्याजक्रयविक्रयी transacting stolen goods or other's good.

263. Punishment of officer in taking स्थलजकर whileone is crossing a river by boat.

तारिकः स्थलजं शुल्कं गृह्णन् दाप्यः पणान्दश।
ब्राह्मणप्रातिवेश्यानामेतदेवानिमन्त्रणे ॥ २६३ ॥



**Prose**—तारिकः ( तरणे नियुक्तः राजपुरुषः ) स्थलजं शुल्कं (अन्यायेन) गृह्णन् दशपणान् दाप्यः। ( विभवश्राद्धादौ ) ब्राह्मणप्रातिवेश्यानाम् अनिमन्त्रणे अपि एतदेव ( एतत्परिमाणं पणं ) वेदितव्यम्।

Beng.—নৌকাতরণ স্থানে নিযুক্ত রাজপুরুষ যদি স্থলজকর বা শুল্ক অযথা আদায় করে, তবে সে দশপণ দণ্ড দিবে। আর বৈভবশ্রাদ্ধে যদি প্রতিবেশী শ্রুতসম্পন্ন ব্রাহ্মণের নিমন্ত্রণ না হয়, তবে যে ঐরূপ করিবে তারও দশপণ দণ্ড হইবে।

Eng.—If the king's officer appointed in crossing ghats realise wrongfully land revenues; then in so doing he is to pay a fine of ten panas; and one not inviting alearned Brahman, his near neighbour in a sraddha on grand scale, should be similarly fined.

Mita—अपि च, शुल्कं हि द्विविधं—स्थलजं जलजं च। तत्रस्थलजम्—'अर्घप्रक्षेपणाद्विंशं भागं शुल्कं नृपो हरेत्' ( व्य० २६१ ) इत्यत्रोक्तम्। जलजं तु मानवेऽभिहितम् 'पणं यानं तरे दाप्यं पुरुषोऽर्धपणं तरे। पादं पशुश्च योषिच्च पादार्धं रिक्तकः पुमान् ॥ भाण्डपूर्णानि यानानि तार्यं दाप्यानि सारतः। रिक्तभाण्डानि यत्किंचित्पुमांसश्चापरिच्छदाः॥ गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः। ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं नराः॥' इति॥ शुल्कद्वयेऽप्ययमपरो विशेषः—'न भिन्नकार्षापणमस्ति शुल्कं न शिल्पवृत्तौ न शिशौ न दूते। न भैक्षलब्धे न हृतावशेषे न श्रोत्रिये प्रव्रजिते न यज्ञे॥' इति॥ तर्यतेऽनेनेति तरः नावादिः, तज्जन्यशुल्केऽधिकृतस्तरिकः? ( तारिकः ) स यदा स्थलोद्भवं शुल्कं गृह्णाति तदा दशपणान्दण्डनीयः। वेशो वेश्म, प्रतिवेश इति स्ववेश्माभिमुखं स्ववेश्मपार्श्वस्थं चोच्यते ; तत्र भवाः प्रातिवेश्याः (?) ब्राह्मणाश्च ते प्रातिवेश्याश्च ब्राह्मणप्रातिवेश्याः, तेषां श्रुतवृत्तसंपन्नानां श्राद्धादिषु विभवे सतिअनिमन्त्रणे एतदेक दशपणात्मकं दण्डनं वेदितव्यम् ॥ २३६ ॥

## CHARCHA

1. तारिकः—तर्य्यते अनेन इति तॄ+अप्करणे=तरः a boat. तत्र नियुक्त इति ठक् ( by the rule "तत्र नियुक्तः" )=तारिकः an officer engaged in crossing ghats to realise जलज tax and revenue there. The reading everywhere and in Mitakshara too is तरिक, but in the sense of नियुक्त वा अधिकृत the form should be तारिकः। If तरिक is the पाठ here, then defend thus—तर is boat. स अस्ति अस्य कार्य्यत्वेन इति तर+ठन्=तरिकः an officer with ref. to boat. Here मत्वर्थीय ठन् comes by the rule "अत इनिठनौ" ॥ or if तरि boat is taken as the base then also with ठक् we get=तारिक in the sense अत्र नियुक्त वा अधिकृत। So we prefer the reading तारिक here. Such water officers should not realise land revenues. Then they will be so fined.

2. ब्राह्मणप्रातिवेश्यानाम्—Vijnaneshwara says "वेशो वेश्म। स्ववेश्माभिमुखम् (i.e वेशस्य अभिमुखम् इति प्रतिवेशम्)...तत्र भवा प्रातिवेश्याः" । In प्रतिवेशम् we have अव्ययीभाव by the rule "लक्षणेनाभिप्रती आभिमुख्ये" । Then भवार्थे ञ्य comes by the rule "अव्ययीभावाच्च" as in "परिमुखं भवं पारिमुख्यम्" । But this is questionable ; for Dikshit quotes here the varthka, "परिमुखादीनामेव इष्यते" and says "नेह—ऊपकूलः" and then परिमुखादि list does not include प्रतिवेश, nor it is an आकृतिगण। So better proceed thus—वेशम् प्रतिगतः इति प्रतिवेशः, प्रादितत्। प्रतिवेशे भव इति दिगादिभ्योयत्=प्रतिवेश्यः। or better वेशे भव or साधु=वेश्य for दिगादि list has देश देश etc. and not प्रतिवेश or परदेश etc. Then प्रतिष्ठितः ( समीपस्थितः ) वेश्यः। स एव इति प्रातिवेश्यः। स्वार्थे अण् or चतुर्वर्णादित्वात् स्वार्थे ष्यञ् ॥ See पारदेश्य also in 152&c. ब्राह्मणाश्च ते प्रातिवेश्याश्च। तेषाम्।



264. Share of such समवायव्यवसायी if he dies abroad should go to his दायादपुत्रादि।

देशान्तरगते प्रेते द्रव्यं दायादवान्धवाः।
ज्ञातयो वा हरेयुस्तदागतास्तैर्विना नृपः ॥ २६४ ॥

Prose—( सम्भूयकारिणां मध्ये कस्मिंश्चित् ) देशान्तरगते प्रेते सति तस्य द्रव्यं दायादवान्धवा ज्ञातयो वा, तदागताः वा ( देशान्तरागता सम्भूयकारिवणिजः वा ) हरेयुः ( गृह्णीयुः )। तैः विना ( एतेषां सर्वेषामभावे ) नृपः गृह्णीयात्।

Beng.—সমবায় ব্যবসায়িদের মধ্যে কোন বণিক্ যদি বিদেশে যাইয়া মৃত হয়, তবে তার অংশ পুত্রাদি দায়াদ, তদভাবে ( মাতুলাদি বান্ধব ) তদভাবে জ্ঞাতিগণ, তদভাবে যাহারা তার বিদেশের সঙ্গীছিল, এ সর্বাভাবে নৃপতিই এই অংশ পাইবে।

Eng.—If any one of co-operative traders die abroad then his share will go to his sons etc, or to his maternal relations, or to kindreds or to those who went abroad with him as the case may be ; if all such heirs are not available then the king will get it. (See Mita for details here).

Mita—देशान्तर मृतवणिक् रिक्थं प्रत्याह—

यदा संभूयकारिणां मध्ये यः कश्चिद्देशान्तरगतो मृतस्तदा तदीयमंशं दायादाः पुत्राद्यपत्यवर्गाः, वान्धवाः मातृपक्षा मातुलाद्याः, ज्ञातयोऽपत्यवर्गव्यतिरिक्ताः सपिण्डा वा, आगताः संभूयव्यवहारिणो ये देशान्तरादागतास्ते वा गृह्णीयुः। तैर्विना दायादाद्यभावे राजा गृह्णीयात्। [ 'वा' शब्देन च दायादीनां वैकल्पिकमधिकारं दर्शयति। पौर्वापर्यनियमस्तु 'पत्नी दुहितर' ( व्य० १३५ )

इत्यादिना प्रतिपादित एवात्रापि वेदितव्यः। शिष्यसब्रह्मचारिब्राह्मणनिषेधो वणिकप्राप्तिश्च वचनप्रयोजनम्। वणिजामपि मध्ये यः पिण्डदानर्णदानादिसमर्थः स गृह्णीयात्। सामर्थ्यविशेषे पुनः सर्वे वणिजः संसृष्टिनो विभज्य गृह्णीयुः। तेषामप्यभावे दशवर्षं दायादाद्यागमनं प्रतीक्ष्यानागतेषु स्वयमेव राजा गृह्णीयात् तदिदं नारदेन स्पष्टीकृतम् 'एकस्य चेत्स्यान्मरणं दायादोऽस्य तदाप्नुयात्। अन्यो वाऽसति दायादे शक्ताश्चेत्सर्व एव ते॥ तदभावे तु गुप्तं तत्कारयेद्दशवत्सरान्। अस्वामिकमदायादं दशवर्षस्थितं ततः॥ राजा तदात्मसात्कुर्यादेवं धर्मो न हीयते॥' इति॥ २३४॥

CHARCHA

1. तदागताः—तस्मात् देशान्तरात् आगताः, तदागता, सुपसुपा। Those traders who were with him abroad. Here this sloka shows special inheritance by co-operative traders excluding शिष्य-सब्रह्मचारिण् etc, stated before. Thus Mita says "शिष्यसब्रह्मचारि ब्राह्मणनिषेधो वणिक् प्राप्तिश्च (इति) बचनप्रयोजनम्" ॥

265. A deceiver among such co-operative traders should be ousted; this section-rule applies to agriculturists, artists etc.

जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत्।
अनेन विधिराख्यात ऋत्विक-कर्षक-कर्मिणाम् ॥ २६५ ॥

Prose—(सम्भूयवणिजां मध्ये) जिह्मं (वञ्चकं) निर्लाभम् यथातथा (लाभमदत्वा) त्यजेयुः (अन्येवणिजः तं वहिष्कुर्य्युः)। एषांमध्ये अशक्तः अन्येन (कर्म) कारयेत्। अनेन (उक्तकथनेन) आख्यातः विधिः ("लाभालाभौ यथाद्रव्यम्" इत्यादिविधिः) ऋत्विक-कर्षककर्मिणाम अपिस्यात्।

Beng.—সম্ভূয় ব্যবসায়িগণের মধ্যে কেহ যদি জিহ্ম বা বঞ্চক





প্রমাণিত হয়, তবে তাকে লাভাদি না দিয়াই সমবায় হইতে বহিষ্কৃত করিবে। এদের মধ্যে কেহ কার্য্যে অপারগ হইলে, সে অন্যকে দিয়া নিজ কাজ করাইবে। সমবেতকারিবণিকদের প্রাপ্যভাগাদি যেরূপ কথিত হইল, ঋত্বিক (পুরোহিত বর্গ) কৃষিজীবী এবং শিল্পীজীবী গণেরও তাদৃশ ব্যবস্থা জানিবে।

Eng.—If any one of these co-operative traders be proved a deceiver then he is tobe turned out of the union without giving any profit; if any one is unable to do his own work then he will have it done by other; the rule of distribution of shares among the priests (sacrificers), the agriculturists, and artisans too should be the same as said here (in "लाभालाभौ यथाद्रव्यम्").

[ ऋत्विक is used hre in the general sense of all priests & senators-see Mita ]

Mita—किञ्च "जिह्मो" वञ्चकः, "तं निर्लाभं" निर्गतलाभं लाभमाच्छिद्य तत्त्यजेयुर्वहिष्कुर्य्युः। यश्च सम्भूयकारिणां मध्ये भाण्डप्रत्यवेक्षणादिकं कर्त्तुमसमर्थः असौ अन्येन "स्वकं कर्म" भाण्डभारवहन—तदायव्ययपरीक्षणादिकं कारयेत्॥ प्रागुपदिष्टं वणिग्धर्मम् ऋत्विगादिष्वपि अतिदिशति—"अनेन" "लाभालाभौ यथाद्रव्य" इत्यादि वणिक्कर्मकथनेन "ऋत्विजां" होत्रादीनां कृषीवलानां नटनर्त्तक तक्षादीनां च शिल्पकर्मोपजीविनां विधिर्वर्त्तनप्रकार आख्यातः॥ [तत्रच ऋत्विजां धनविभागे विशेषो मनुना दर्शितः—"सर्वेषामर्धिनो मुख्यास्तदर्धेन अर्धिनोपरे। तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः" इति। अस्यायमर्थःज्योतिष्टोमेन "तंशतेन दीक्षयन्ति" इति बचनेन गवां शतं ऋत्विगानतिरूपे दक्षिणाकार्य्ये विनियुक्तम्। ऋत्विजश्च होत्रादयः षोडश। तस्य कस्य कियानंश इत्यपेक्षाया-मिदमुच्यते। सर्वेषां होत्रादीनां षोडशर्त्विजां मध्येये मुख्याश्चत्वारो होत्रध्वर्युब्रह्मोद्गातारः, ते गोशतस्यार्धिनः सर्वेषां भागपूरणोपपत्तिवशात् अष्टाचत्वारिं-

कुपार्थेन अर्धभाजः अर्धभाजः। अपरे मैत्रावरुण प्रतिप्रस्थातृ ब्राह्मणाच्छंसि प्रस्त
तदर्धेन, तस्यमुख्यांशस्यअर्धेन चतुर्विंशतिरूपेण अर्धभाजः। ये पुनस्त
आच्छावाकनेष्ट आग्नीध्रप्रतिहर्तारस्ते तृतीयिनः मुख्यांशस्य
तृतीयांशेन तृतीयांशभाजः। ये तु पादिनः ग्रावस्तु-नेतृपोतृ
मुख्यभागस्य यश्चतुर्थांश द्वादशगोरूपः तद्भाजः। ] ननु कथमयं अंशवि
न तावदत्र समयः, नापिद्रव्य समवायः, नापिवचनम्—यद्वशात् ई
स्यात्? अतः "समंस्यादश्रुतत्वात् इति न्यायेन सर्वेषां स
कर्मानुरूपेण वा अंशभाक्त्वम् इति युक्तम्। अत्रोच्यते–
द्वादशाहे अर्धिनः तृतीयिनः पादिनः इति सिद्धवदनुवादो
प्रकृतिभूते ज्योतिष्टोमे अर्धतृतीयचतुर्थांशभाक्त्वं मैत्राव
अतो वैदिकर्द्धिप्रभृतिसमाख्याबलात् प्रागुक्तोंशनियमो
निरवद्यम् ] ॥ इति सम्भूयसमुत्थानप्रकरणं समाप्तम् ॥

Note on Mitaksha

1. The division of half etc wi
cows in द्वादशाहव्यापि ज्योतिष्टोम is
"सर्वेषामर्धिनः मुख्याः—" with respe
ज्योतिष्टोम the chief 4 priests होता
get in all half दक्षिणा of 100 i
50 can't be divided equally int
beings, so the chief four ह
rest 52 will be divided t
=24 ; third set 1/3 of 4
i.e.=52 in all ; thus 4
second set the next
मुख्यांश i.e. 48—next
this मुख्यांश, last four



in the first अर्ध। and this point or procedure may be adhered to here as exact division can't be had in. ज्योतिष्टोम etc. such mode of अर्द्धभागक्रम is done with ref to and on the analogy of समाख्यभाग of vedic ऋद्धि i.e. vedic श्रेयस् etc, where exact half can't be determined.

## अथ स्तेयप्रकरणम्

[ The section on theft. Note that स्तेय is theft and स्तेन is both thief and theft ; compare our Manu VII. 83 'न तं स्तेना नामित्रा हरन्ति' etc. ]

Remark—साहस is forceful act or outrageous act even before officers, whereas स्तेय is (i) stealing away not before anyone (ii) स्तेय also constitutes in stealthy stealing before द्रव्यस्वामी but denying the same. Punishment is stated in both these kind of thefts. Thus here as introduction Mitakshara has—

Mita—इदानीं स्तेयं प्रस्तूयते। तल्लक्षणं च मनुनाभिहितम्—"स्यात् साहसं त्वन्वयवत्प्रसभं कर्म यत् कृतम्। निरन्वयं भवेत् स्तेयं कृत्वापन्हूयते च यत्" इति। अन्वयवत्—द्रव्यरक्षिराजाध्यक्षादिसमक्षम् प्रसभं बलावष्टम्भेन यत्परधनहरणादिकं क्रियते तत् साहसम्। स्तेयं तद्विलक्षणं निरन्वयं—द्रव्य-स्वाम्याद्यसमक्षं वञ्चयित्वा यत् परधनहरणं तदुच्यते। यच्च सान्वयमपि कृत्वा 'न मयेदं कृतमिति' भयात् निन्हुते तदपि स्तेयम्॥ नारदेनाप्युक्तम्—"उपायै-र्विविधैरेषां छलयित्वाऽपकर्षणम् सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिणः" ॥ इति ॥

266. How to detect or find out thieves.

ग्राहकैर्गृह्यते चौरो लोप्त्रेणाथ पदेन वा ।
पूर्वकर्मापराधी च तथा चाशुद्धवासकः ॥ २६६ ॥

Prose—ग्राहकैः ( राजपुरुषैः ), लोप्त्रेण ( अपहृतद्रव्यैकदेशेन ) वा पदेन ( चौर्य्य-चिन्हेन, चौरपदानुसरणेन ) चौरः गृह्यते । पूर्वकर्मापराधी चौरः गृह्यते, ( तथा ) अशुद्धवासकः ( अज्ञातवासस्थानकः पलायित इत्यर्थः ) अपि चौरः गृह्यते ।

Beng.—অপহৃতদ্রব্যের একদেশ দেখিয়া বা কর্দমাদিতে চৌরপদাঙ্কানুসরণ দ্বারা, রাজপুরুষগণ চোরকে ধরিবেন। যে পূর্বে চৌর্য্যকর্ম হেতু চোর বলিয়া খ্যাত, আর যে পলায়িত হইয়া অজ্ঞাত বাসে ( নিখোঁজ হইয়া ) থাকে তাকেও চোর বলিয়া ধরিবে।

Eng.—By detecting a fragment of stolen goods, or finding out and pursuing footprints in muddy places, the police officer usually arrests thieves ; similarly a former notorious thief culprit is also arrested in theft cases, so also an absconding one is arrested as a thief ( on suspicion ).

Mita—तत्रतस्करग्रहणपूर्वकत्वाद्दण्डनस्य, ग्रहणस्य च ज्ञानपूर्वकत्वात्, ज्ञानोपायं ( चौरज्ञानोपायं ) तावदाह—यः 'चौरोयम्' इति जनैर्विख्याप्यते असौ, ग्राहकैः राजपुरुषस्थानपालप्रभृतिभिः ग्रहीतव्यः । "लोप्त्रेण" अपहृतभाजनादिना वा चौर्य्य-चिन्हेन, नाशदेशादारभ्य चौर्य्यपदानुसरणेन वा ग्राह्यः । यश्च "पूर्व-कर्मापराधी" प्राक् प्रख्यातचौर्य्यः, अशुद्धः अप्रज्ञातः वासः स्थानं यस्य असौ "अशुद्धवासकः"—सोपि ( चौर इति ) ग्राह्यः ॥ २६६ ॥

CHARCHA

1. लोप्त्रेण—लोप्त्र here means अपहृतद्रव्यैकदेश । तेन । करणे ३या ॥ पदेन-पद means चौर्य्य-चिह्न i.e. पादाङ्कानुसरण । पांशुकर्दमादिवर्त्ती पादाङ्कः पदं, तस्य पुरुषस्य पादेन सम्मितम् । करणे ३या ।



2. पूर्वकर्मापराधी—पूर्वं कर्म i.e. चौर्य्य कर्म । तस्य वा स एव अपराधः । स अस्ति यस्य इति पूर्वकर्मापराधी ( with मत्वर्थीय इनि ) । Refers to चौर । A culprit notorious for his previous theft. Such a culprit is usually गृह्यते as चौर on suspicion.

3. अशुद्धवासकः—अशुद्धः अप्रज्ञातःवासः यस्य स, अशुद्धवासकः । बहु । समासान्तकप् । Refers to चौर । An absconding one going hither & thither is also to be so arrested on suspicion ; or better अशुद्धः अपवित्रः वासः वासस्थानं वस्त्रं च यस्य, बहु । Such an one residing in filthy quarter and wearingdirty rags are to be arrested or searched to detect stolen good ; for a poor & a pauper can do anything out of poverty, cp "बुभुक्षितः किं न करोति पापम्" । or again शुद्ध is मूल्यशुद्ध—comp "द्रव्यं शुध्यतिमूल्येन ; व्ययः शुध्यति दानेन", so anything bought by usual price is faultless ; and अशुद्धवासक is one who wears unbought cloths or stray rags got, and one who now lives here, now there having no fixed rented habitation. Such vagrants are objects of suspicion even now-a-days, and are searched for stolen goods. Such interpretations of the word अशुद्धवासक is more natural ; अशुद्ध also is not seen to mean अप्रज्ञात, so we reject Vijnaneshwara's interpretation here

267-268. Such others are also to be arrested as thief on suspicion.

अन्येपि शङ्कया ग्राह्या जातिनामादिनिह्नवैः ।
द्यूतस्त्रीपानसक्ताश्च शुष्कभिन्नमुखस्वराः ॥ २६७ ॥

परद्रव्य-गृहाणां च पृच्छका गूढ़चारिणः।
निराया व्ययवन्तश्च विनष्टद्रव्यविक्रयाः ॥ २६८ ॥

Prose—ये जातिनामादिनिह्नवैः (उपलक्षिताः), द्यूतस्त्रीपानसक्ताश्च, (ग्राहिभिः पृष्टाः) शुष्कभिन्नमुखस्वराः (शुष्कमुखा भिन्नस्वरा वा ये), ये च (निष्कारणं) परद्रव्यगृहाणां पृच्छकाः, गूढ़चारिणः, (तथा) निराया व्ययवन्तश्च विनष्टद्रव्यविक्रयाः च ये, ते अन्येपि शङ्कया (चौर्य्यशङ्कया) ग्राह्याः (राजपुरुष-ग्राहिभिः ग्राह्याः)।

Beng.—যাহারা জাতি, নাম, দেশ, কুলাদি ভাঁড়াইয়া বেড়ায়, যারা দ্যূত ক্রীড়ায় বেশ্যাস্ত্রীতে ও মদ্যপানে আসক্ত, যারা গ্রাহি-পুরুষ কর্ত্তৃক জিজ্ঞাসিত হইলে শুষ্কমুখ যুক্ত ও ভিন্নস্বর যুক্ত হয়, যারা নিষ্কারণ পরদ্রব্য (ধনরত্ন) ও পরগৃহ বিষয় জিজ্ঞাসা করে, যারা পলাইয়া প্রচ্ছন্নবেশে বেড়ায়, যারা আয়হীন অথচ ব্যয়কারী, এবং ভগ্ন নষ্ট ভাণ্ড বাসনাদি বিক্রয় করে—সন্দেহক্রমে তাদের গ্রাহিপুরুষ ধরিতে পারেন।

Eng.—Police officers may arrest on suspicion those who suppress their caste, name and whereabouts, those who are addicted to gambling wine and public women, those who become pale-faced and of faltering speech on asking, who causelessly ask of other's goods and houses, who wander in disguise, who expends much though without income and who sell broken goods or materials etc.

Mita—किञ्च, न केवलं पूर्वोक्ता ग्राह्याः, किन्तु अन्येपि वक्ष्यमाणैर्लिङ्गैर्ग्राह्याः। "जातिनिह्नवेन"—नाहं शूद्र इत्येवं रूपेण, नामनिह्नवेन—नाहं डित्थ इत्येवंरूपेण, [आदिग्रहणात् स्वदेशग्रामकुलाद्यपलापेन] च लक्षिताः ग्राह्याः। द्यूतपण्याङ्गनामद्यपानादिव्यसनेषु अतिप्रसक्ताः। तथा "कुतस्त्योसि



त्वम्" इति चौरग्राहिभिः पृष्टोयदि "शुष्कमुखो भिन्नस्वरो वा भवति", तर्हि असावपि ग्राह्यः। [बहुवचनात् स्विन्नललाटादीनां ग्रहणम्]। तथा च ये निष्कारणं 'कियदस्य धनं, किंवास्यगृहम्" इति पृच्छन्ति, ये च वेषान्तरधारणेनात्मानं गूहयित्वा चरन्ति, ये च आयाभावेपि बहुव्ययकारिणः, ये वा विनष्टद्रव्याणां जीर्णवस्त्रभिन्नभाजनादीनाम् अविज्ञातस्वामिकानां विक्रेतारः, ते सर्वे चौर-सम्भावनया ग्राह्याः। एवं नानाविधचौरलिङ्गान् पुरुषान् गृहीत्वा एते चौराः किंवा साधव इति सम्यक् परीक्षेत, न पुनर्लिङ्गदर्शनमात्रेण चौर्य्यनिर्णयं कुर्य्यात्। अचौर्य्यस्यापि लोप्त्रादिलिङ्गसम्बन्धसम्भवात्। [यथाह नारदः—"अन्यहस्तात्-परिभ्रष्टम् अकामात् उच्छ्रितं भुवि। चौरेण वा परिक्षिप्तं लोप्त्रं यत्नात्परीक्षयेत्। तथा—"असत्याः सत्यसंकाशाः सत्याश्चासत्यसन्निभाः। दृश्यते विविधा भावास्तस्मादुक्तं परीक्षणम्" इति] ॥ २६७-६८ ॥

## CHARCHA

1. जातिनामादिनिह्नवैः—जातिनामनी इति द्वन्द्व। ते आदिनी येषाम्। तेषां निह्नवः। तैः। उपलक्षणे ३या। तैः उपलक्षिता इत्यर्थः। Qual. ये uuderstood ; or हेतौ ३या। (See Mita).

2. शुष्कभिन्न etc —शुष+क्त=शुष्क dry. शुष्कश्च भिन्नश्च शुष्कभिन्ने, द्वन्द्व। मुखञ्च स्वरश्च मुखस्वरम्, प्राण्यङ्गत्वादेकवद्भावः। (यथाक्रमं) शुष्कभिन्नं मुखस्वरम् येषाम्, बहु। Qual. ये understood. So Mita says "शुष्कमुखः भिन्नस्वरोवा"।

3. पृच्छकाः—पृच्छ+ण्वुल्=पृच्छकः asker. परद्रव्यगृहाणाम् has कृद्-योगे कर्मणि षष्ठी।

4. विनष्ट etc.—विक्रीणन्ति इति वि+क्री+पचादि अच् कर्त्तरि=विक्रयाः seller. विनष्टद्रव्यानां विक्रया (विक्रयकारिणः), etc ; or वि+क्री+अच्=विक्रयः selling. विनष्टद्रव्याणां विक्रयः, ६तत। स अस्ति येषाम् इति अर्शआदि मत्वर्थीय अच=विनष्टद्रव्यविक्रयाः। Qual. ये।

5. निरायाः—निर्गतः आयः येषाम् बहु—by "प्रादिभ्यो धातुजस्य—" । Qual. ग्रे । निरस्तायाः is also correct here.

269 One arrested on the charge of theft should absolve himself.

गृहीतःशङ्कया चौर्य्ये नात्मानं चेद्विशोधयेत् ।
दापयित्वा हृतं द्रव्यं चौरदण्डेन दण्डयेत् ॥ २६९ ॥

Prose—चौर्य्ये (चौर्य्यविषये) शङ्कया गृहीतः (जनः) आत्मानं न विशोधयेत्चेत्, तदा हृतं द्रवं दापयित्वा चौरदण्डेन तं दण्डयेत ।

Beng.—চৌর্য্যব্যাপারে কাহাকেও সন্দেহক্রমে ধরিলে, সে নিজেকে সাক্ষ্যাদি দ্বারা নির্দোষ প্রমাণ করিবে, নচেৎ রাজা তাকে অপহৃত দ্রব্য বা দ্রব্যমূল্য দেওয়াইয়া চোর দণ্ডে দণ্ডিত করিবেন ।

Eng.—If any one is arrested on charge of theft then he should absolve himself of crime, otherwise the king should compel him to pay back the stolen good or value thereof and punish him as of thieves ( stated in sl. 270 and in Mita there etc. )

Eng.—एवं चौर्य्यशङ्कया गृहीतेनात्मा सशोधनीय इत्याह—यदि चौर्य्यशङ्कया गृहीतस्तन्निस्तरणार्थमात्मानं न शोधयति तर्हि वक्ष्यमाणधनदापनवधादिदण्डभाग-भवेत् । अतोमानुषेण तदभावे दिव्येन वा आत्माशोधनीयः । [ ननु "नाहंचोरः" इति मिथ्योत्तरे कथं प्रमाणं सम्भवति ? तस्य अभावरूपत्वात् । उच्यतेदिव्यस्य तावद् भावाभावगोचरत्वं "रूच्या वा अन्यतरं कुर्य्यात्" इत्यत्र प्रतिपादितम । मानुषं पुनर्यद्यपि साक्षात् शुद्धमिथ्योत्तरे न सम्भवति, तथापि कारणेन संसृष्टे भावरूपमिथ्याकारणसाधनमुखेन अभावमपि गोचरयत्येव । यथा, "नाशाप्रहार-काले अहं देशान्तरस्थ" इत्यभियुक्ते भाविते चौर्य्याभावस्यापि अर्थात् सिद्धेः शुद्धिभवत्येव ॥ २६९ ॥



270. Punishment in cases of theft i.e, varieties of चौरदण्ड ।

चौरं प्रदाप्याहृतं घातयेद्विविधैर्वधैः ।
सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्रात् विप्रवासयेत् ॥ २७० ॥

Prose—राजा चौरम् अपहृतं द्रव्यं (तन्मूल्यं वा) प्रदाप्य (गुरूतरचौर्य्यापराधे सति) विविधैः वधैः घातयेत् । ब्राह्मणं चौरं (अपराधानुसारेण) सचिह्नं कृत्वा स्वराष्ट्रात् विप्रवासयेत् ।

Beng.—চৌরনিশ্চয়ের পর রাজা তাকে দিয়া অপহৃতদ্রব্য বা তন্মূল্য দ্রব্য স্বামীকে দেওয়াইবেন, গুরুতরস্তেয়াপরাধে জল্লাদকে দিয়া নানারূপ বধে হত্যা করাইবেন । ব্রাহ্মণ চোর হইলেও গুরুতর অপরাধ করিলেও তাকে বধ করাইবেন না, তবে লালটে কুকুর পদাদি চিহ্ন আঁকিয়া দিয়া নিজ রাষ্ট্র ( রাজ্যাধিকৃত স্থান ) হইতে নির্বাসিত করিবেন ।

Eng—Thief being determined, the king will order him pay back the stolen article ( or the value thereof ) to the onwer, and will have him killed by varions varieties of slaughter only in case of grave offences of theft ; but a Brahmin being a thief should be imprinted on the forehead with footprints of dogs, be driven out of his royal jurisdiction ( in case of grave offences ), [ See Mita ].

Mita—चौरदण्डमाह—यस्तु प्रागुक्तपरीक्षया तन्निरपेक्षं वा निश्चितचौर्य्यः तं स्वामिने अपहृतधनं स्वरूपेण मूल्यकल्पनया वा दापयित्वा विविधैर्वधैर्घातैः घातयेत् । [ एतच्च उत्तमसाहसदण्डप्राप्तियोग्योत्तमद्रव्यविषयम् । न पुनः पुष्पवस्त्रादिक्षुद्रमध्यमद्रव्यापहारविषयम् । "साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः । स एवदण्डः स्तेयेपिद्रव्येषुत्रिष्वनुक्रमात्"—इति नारदवचनेन वधरूपस्य उत्तमसाहसस्य

ब्उत्तमद्रव्यविषये व्यवस्थापितत्वात् ॥ यत्पुनर्वृद्धमनुवचनम्—"अन्यायोपात्तवित्तत्वात् धनमेषांमलात्मकम् । अतस्तान् घातयेद् राजा नार्थदण्डेन दण्डयेत्" इति तदपि महापराधविषयम् ] ॥ चौरविशेषे अपवादमाह—ब्राह्मणं पुनश्चौरं महत्यपि अपराधेपि न घातायेत्, अपि तु ललाटे अङ्कयित्वा स्वदेशात् निष्कामयेत् । [ अङ्कनं तु श्वपदाकारं कार्य्यम् ; तथा च मनुः—"गुरूतल्पे भगः ( भगचिह्न ) कार्य्यः सुरापाने सुराध्वजः । स्तेये च श्वपदं कार्य्यं ब्रह्महण्यशिराः पुमान्" इति । एतच्च दण्डोत्तरकालं प्रायश्चित्तम् अचिकीर्षतां द्रव्यष्टम् । यथाह मनुः—"प्रायश्चित्तं तु कुर्वाणाः सर्वेवणा यथोदितम् । नाङ्क्या राज्ञा ललाटे तु दाप्यास्तूत्तम साहसम्" । ] ॥ २९० ॥

## CHARCHA

1. घातयेत्—हन+णिच्+लिङ्यात् । Nom. प्रयोजककर्त्ता is राजा ॥ वधैः—करणे ३या । विविध वध will be acc. to विविध गुरूतरचौर्य्यापराध ॥ Thus घातकोचौरंहन्ति is णिच् becomes—राजा घातकेन चौरं घातयेत् ॥

2, Remark—A Brahman suddenly doing such चौर्य्य will he imprinted on the forehead with footprint of dog or other marks acc. to gravity of offence ( See Mita ) and be turned out from the king's jurisdiction if he does not agree to do प्रायश्चित्त । If he agrees to प्रायश्चित्त, then he is to be punished as said in उत्तमसाहस ( See Mita ) like 100 panas etc. ( See ante ).

271. ग्रामपति's duty to find out murder and theft in a ग्राम etc.

घातितेपहृते दोषो ग्रामभर्तुरनिर्गते ।
विवीतभर्त्तुस्तु पथि चौरोद्धर्त्तुरवीतके ॥ २७१ ॥

Prose—( ग्राममध्ये ) चौरेण मनुष्ये घातिते द्रव्येच अपहृते सति, किन्तु



( ग्रामात् ) चौरे अनिर्गते सति ग्रामभर्त्तुः एव दोषः स्यात् । एवं विवीते ( तृणकाष्ठादिरक्षणस्थाने ) द्रव्ये अपहृते विवीतभर्त्तुः दोषः । पथि अवीतके ( अविवीतस्थाने ) द्रव्ये अपहृते सतिचौरोद्धर्त्तुः मार्गपालकस्य दोषः स्यात् ।

Beng—কোন গ্রামমধ্যে হত্যা বা চুরি হইলে, আর চোর যদি গ্রাম হইতে বাহিরে পলাইয়া না যায় তবে গ্রামপালকেরই দোষ হইবে ( অর্থাৎ এবিষয়ে দায়িত্ব গ্রামপালকেরই হইবে )। বিস্তৃত তৃণকাষ্ঠাদির সঞ্চয় ও রক্ষণ স্থানকে বিবীত বলা হয়। বিবীত স্থানে চুরি হইলে বিবীত স্বামীই দাযী হইবেন। আব পথিমধ্যে বা অবিবীত স্থানে দ্রব্য অপহৃত হইলে মার্গপালকই বা রক্ষিপুরুষই দায়ী হইবেন। [ N. B.—যারা দায়ী বা দোষী তারাই চোব ধরাইবে বা মূল্য দিবে ]।

Eng.—If murder or theft happens in a village or if the perpetrator of such deed does not go out of the village, then the burden of fault will lie on the administrator of the village ; if it happens in a place within "Vivita" area, then the owner of such vast "Vivita" ( Where heaps of woods, straws are collected ) will he responsible for this ; if it take place on the way or in an area outside of any "Vivita" then the officer in charge of quarter will be responsible for this.

Mita—चौरादर्शने अपहृतद्रव्यप्राप्त्युपायमाह—यदि ग्राममध्ये मनुष्यादि-प्राणिवधो धनापहरणं वा जायते तदा ग्रामपतेरेव चौरोपेक्षादोषः । तत्परिहारार्थं एव चौरं गृहीत्वा राज्ञे अर्पयेत् । तदशक्तो हृतं धनं धनिने दद्यात् यदि चौरस्यपदं स्व ग्रामात् निर्गतं न दर्शयति । दर्शिते पुनस्तत्पदं यत्र ( चौरः ) प्रविशति तद्विषयाधिपतिरेव चौरं धनं दापयेत् । [ तथा चनारदः—" गोचरे यस्य

मुच्येत तेन चौरः प्रयत्नतः। ग्रामो दाप्योऽथवा शेषं पदं यदि न निर्गतम्। निर्गते पुनः एतस्मात् न चेदन्यत्र पातितम्। सामन्तान् मार्गपालांश्च दिक्पालांश्चैव दापयेत् इति।] विवीते तु अपहारे विवीतस्वामिन एव दोषः। यदा तु अध्वन्येव तद्वृत्तं भवति अवीतके वा विवीतादन्यत्र क्षेत्रे तदा" चौरोद्धर्तुः मार्गपालकस्य दिक्पालकस्य वा दोषः ॥ २७१ ॥

CHARCHA

1. घातिते—हन+णिच्+क्त कर्मणि। constrne—चौरेण मनुष्ये घातिते etc. Here हन has स्वार्थणिच् by the गणसूत्र "हन्त्यर्थाश्च" where Dikshita says "नवगण्यामुक्ता अपि हन्त्यर्थाः स्वार्थणिचंलभन्ते"।

2. विवीतभर्तुः—विवीत is a vast area where enough of wood, straws of various persons are heaped and kept; compare—"विवीतः प्रचुरतृणकाष्ठो रक्ष्यमाणत्वेन परिगृहीतो भूप्रदेश इति। प्राक्कथितम्" (see sl. 160 ante), विवीतस्य भर्त्ता (रक्षकः) तत्-तस्य ॥ अवीतक is अविवीत क्षेत्र॥ N. B.—Every village has an administrater; then there is another over five; another on ten villages etc.—see Manu VII 116-117. and next sl.

272. Villagers too are responsible for theft within their jurisdiction.

स्वमीन्नि दद्याद् ग्रामस्तु पदं वा यत्र गच्छति।
पञ्चग्रामी वहिः क्रोशाद्दशग्राम्यथवा पुनः ॥ २७२ ॥

Prose—स्वमीन्नि (हनने अपहरणे वा सति) ग्रामः (ग्रामवासिनः) एव दद्युरत् (चौरं धृत्वा द्रव्यं द्रव्यमूल्यं वा दद्युरित्यर्थः), वा यत्र पदं (चौरपदचिह्नं) गच्छति तत्रस्थग्रामवासी चौरं गृहीत्वा एव द्रव्यादिकं



273. Capital punishment described.

वन्दिग्राहांस्तथा वाजिकुञ्जराणाञ्च हारिणः।
प्रसह्यघातिनश्चैव शूलानारोपयेन्नरान् ॥ २७३ ॥

Prose—वन्दिग्राहान् (कारागारात् वन्दिग्राहिणः), वाजिकुञ्जराणां च हारिणः प्रसह्यघातिनः नरान् राजा शूलान् आरोपयेत्।

Beng—কারাগারে বন্দিলোকদের যারা হরণ করে, যারা অশ্বশালা হইতে অশ্ব এবং হস্তিশালা হইতে হস্তী অপহরণ করে এবং যাহারা অতর্কিতে নরহত্যা করে, রাজা তাদের শূলে চড়াইবেন।

Eng.—The king will put on stakes those who snatch away prisoners from the king's prison, those who steal horses and elephants from their stalls, and those who suddenly murders persons.

Mita—अपराधविशेषेण दण्डविशेषमाह—वन्दिग्राहादीन् बलावष्टम्भेन घातकांश्च नरान् शूलानारोपयेत्। अयं च वधप्रकारविशेषश्चोपदेशः। ["कोष्ठागारायुधागार देवतागारभेदकान्। हस्त्यश्वरथहर्तॄंश्च हन्यादेवाविचारयन्" इति मनुस्मरणात्] ॥ २७३ ॥

CHARCHA

1. वन्दिग्राहान्—वन्दि or वन्दिन् or वन्दी is prisoner; बन्दीन् गृह्णन्ति इति वन्दिग्राहाः with अण् प्रत्यय by "कर्मण्यण्"। तान्। Qual. नरान्। नरान् takes प्रयोज्यकर्मणि २या। Thus नराः शूलमारोहन्ति in णिच् becomes राजा नरान् शूलम् आरोहयति (or आरोपयति) by the rule "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्त्तासणौ (i.e., स णौ कर्मस्यात्)। Both आरोपयति वा आरोहयति is correct in णिच् by the rule "रुहः पोऽन्यतरस्याम्"॥ आ+रुह+णिच् लिङ्यात्=आरोपयेत्॥

The reading शूलमारोपयेत् is better than शूलानारोपयेत् of Mitakshara.

2. हारिणः—Qual. नरान् ॥ प्रसह्यघातिनः—प्रसह्य is an अव्यय meaning बलात् perforce, cp "प्रसह्य सिंहः किलतांचकर्ष" Rag. II. प्रसह्यघ्नन्ति इति प्रसह्य+हन+णिनि कर्त्तरि=प्रसह्यघातिनः। Qual. नरान्।

274. Punishments for cloth stealers, knot cutters

उत्क्षेपकग्रन्थिभेदौ करसन्दंशहीनकौ।
कार्यौ द्वितीयेऽपराधे करपादैकहीनकौ ॥ २७४ ॥

Prose—उत्क्षेपकग्रन्थिभेदौ (वस्त्रहारी तथा ग्रन्थिवद्धस्वर्णहारी) यथाक्रमं कर-सन्दंशहीनकौ कार्य्यौ। द्वितीये (एतादृशे) अपराधे करपादैकहीनकौ कार्य्यौ।

Beng.—যারা বস্ত্রাদি উঠাইয়া লইয়া যায় তারা উৎক্ষেপক, যারা সোণা টাকা প্রভৃতি মূল্যবান দ্রব্য গ্রন্থিবদ্ধ খুলিয়া নেয়, তারা গ্রন্থিভেদক। এদের যথাক্রমে করহীন ও সন্দংশহীন করিবেন। (সাড়াশার মত অঙ্গুষ্ঠ ও তর্জনীর মেলনকে সন্দংশ বলা হয়)। অর্থাৎ উৎক্ষেপকের কর নষ্ট করিয়া দিবেন আর গ্রন্থিভেদকের ঐ আঙ্গুল দুইটি নষ্ট করিয়া দিবেন। যে একবার এরূপ করিয়া দ্বিতীয়বার এই অপরাধ করে তাদের একহাত ও একপা ছেদন করিয়া দিবেন।

Eng.—A cloth stealer and a knot-cutter (of gold, money etc.) should be punished by making them destitute of hand and tong-like joined fingers of thumb and fore finger respectively; if they commit this crime a second time then each one of these should be punished by cutting one hand and one leg. [N.B.—This is also a Danda for उत्तमसाहस crime].





Mita.—किञ्च वस्त्रादुत्क्षिपति अपहरतीति "उत्क्षेपकः", वस्त्राविबद्ध स्वर्णादिकं विस्रस्य उत्कृत्य वा यः अपहरति असौ ग्रन्थिभेदकः; तौ यथाक्रमं करेण संन्दंशसदृशेन तर्जन्यङ्गुष्ठेन च हीनौ कार्य्यौ। द्वितीयापराधे पुनः—करश्च पादश्च करपादं, तच्च तदेकं च करपादैकं, तद्धीनं ययोस्तौ "करपादैकहीनकौ" कार्य्यौ। उत्क्षेपकग्रन्थिभेदकयोः एकं एकं करं पादं च छिन्द्यात् इत्यर्थः। एतदप्युत्तमसाहसप्राप्तियोग्यद्रव्यविषयम्। ["तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसः" इति नारदवचनात् ॥ तृतीयापराधे तु वध एव। तथा च मनुः—" अङ्गुली ग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे। द्वितीये हस्तचरणौ तृतीये वधमर्हति" इति]। जातिद्रव्यपरिमाणतो मूल्याद्यनुसारतो दण्डः प्रकल्पनीय इति (च) ॥ २७४ ॥

## CHARCHA

1. करपादैकहीनकौ—Refers to उत्क्षेपक-ग्रन्थिभेदकौ। करश्च पादश्च करपादम्, प्राण्यङ्गत्वात् समाहारः। करपादश्च तत् एकं च इति करपादैकम्। तेन हीनौ, ततः। for उत्क्षेपक, ग्रन्थिभेद, सन्दंश see Mita. and beng ग्रन्थिं भिनत्तीति ग्रन्थिभेदः with अण् by "कर्मण्यण्"। ग्रन्थिभेदक however is got with ण्वुल (अक)।

275. Gravity of punishment acc. to gravity of crime due to price of stolen articles.

क्षुद्रमध्यमहाद्रव्य-हरणे सारतो दमः।
देशकालवयः शक्तिं सञ्चिन्त्य दन्डकर्मणि ॥ २७५ ॥

Prose—क्षुद्रमध्यमहाद्रव्यहरणे सारतः (मूल्यानुसारतः) देशकालवयः-शक्तिं च सञ्चिन्त्य दण्डकर्मणि दमः कल्पनीयः।

Beng.—অল্পমূল্যের ক্ষুদ্রদ্রব্য (যথা কাষ্ঠ, তৃণ, অন্ন, ক্ষুদ্রবস্ত্রাদি) মধ্যমূল্যের মধ্যদ্রব্য (যথা, অজ মেষ, লৌহ প্রভৃতি), মহামূল্যের মহাদ্রব্য (গো, অশ্ব, স্বর্ণ, রত্ন, স্ত্রীলোক, ব্রাহ্মণাদি) হরণ করিলে,

দ্রব্যমূল্য বিষয় ও অপহরণ কারীর দেশ, কাল বয়স ও শক্তিবিচার করিয়া, যথাক্রমে প্রথম বা অধম, মধ্যম ও উত্তমসাহস দণ্ডে দণ্ড বিধান করিবেন।

Eng.—Punishment of अधमसाहस मध्यमसाहस and उत्तमसाहस is advised having considered the ordinary class, middle class or high class and such prices of the objects stolen, and having considered the circumstences of place, time, age and ability. (of the दोषिन्) [ See Mita all along—"मृन्मयेषु महिषमेषादिपशुषु च तरतमभावोस्ति इति उच्चावचदण्डविशेषाकाङ्क्षायां मूल्याद्यनुसारेण दण्डः कल्पनोयः। तत्र "देशकालवयः शक्तिमपि सम्यक् चिन्तनीयम्'' etc. ]

Mita—जातिद्रव्यपरिमाणपरिग्रहविनियोगवयःशक्तिगुणदेशकालादीनां दण्डगुरुलघुभावकारणानामानन्त्यात्प्रतिद्रव्यं वक्तुमशक्तेः सामान्येन दण्डकल्पनोपायमाह—क्षुद्राणां मध्यमानामुत्तमानां च द्रव्याणां हरणे सारतो मूल्याद्यनुसारतो दण्डः कल्पनीयः। क्षुद्रादिद्रव्यस्वरूपं च नारदेनोक्तम् 'मृद्भाण्डासनखट्वास्थिदारुचर्मतृणादि यत्। शमीधान्यं कृतान्नं च क्षुद्रं द्रव्यमुदाहृतम् ॥ वासः कौशेयवर्ज्यं च गोवर्जं पशवस्तथा। हिरण्यवर्जं लोहं च मध्यं व्रीहियवा अपि ॥ हिरण्यरत्नकौशेयस्त्रीपुंगोगजवाजिनः। देवब्राह्मणराज्ञां च द्रव्यं विज्ञेयमुत्तमम् ॥' त्रिप्रकारेष्वपि द्रव्येष्वौत्सर्गिकः प्रथममध्यमोत्तमसाहसरूपो दण्डनियमस्तेनैव दर्शितः (१४।२१)—'साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः। स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्रमात् ॥' इति। मृन्मयेषु मणिकमल्लिकादिषु गोवाजिव्यतिरिक्तेषु च महिषमेषादिपशुषु ब्राह्मणसंबन्धिषु च कनकधान्यादिषु तरतमभावोऽस्तीति उच्चावचदण्डविशेषाकाङ्क्षायां मूल्याद्यनुसारेण दण्डः कल्पनीयः। तत्र च दण्डकर्मणि दण्डकल्पनायां तद्धेतुभूतं देशकालवयःशक्तीति सम्यक् चिन्तनीयम्। एतच्च जातिद्रव्यपरिमाणपरिग्रहादीनामुपलक्षणम्। तथा हि—'अष्टापाद्यं स्तेयकिल्बिषं शूद्रस्य द्विगुणोत्तराणीतरेषां प्रतिवर्णं



विदुषोऽतिक्रमे दण्डभूयस्त्वम्' इति। अयमर्थः—'किल्बिष' शब्देनात्र दण्डो लक्ष्यते। यस्मिन्नपहारे यो दण्ड उक्तः स विद्वच्छुद्रकर्तृकेऽपहारेऽष्टगुण आपादनीयः। इतरेषां पुनर्विट्क्षत्रब्राह्मणादीनां विदुषां स्तेये द्विगुणोत्तराणि किल्बिषाणि षोडशद्वात्रिंशच्चतुःषष्टिगुणा दण्डा आपादनीयाः। यस्माद्विद्वच्छूद्रादिककर्तृकेष्वपहारेषु दण्डभूयस्त्वम्। मनुनाप्ययमेवार्थो दाशतः (८।३३७।३३८)—'अष्टापाद्यं तु शूद्रस्य स्तेये भवति किल्बिषम्। षोडशैव तु वैश्यस्य द्वात्रिंशत्क्षत्रियस्य तु ॥ ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतं भवेत्। द्विगुणा वा चतुःषष्टिस्तद्दोषगुणवेदिनः ॥' इति ॥ तथा परिमाणकृतमपि दण्डगुरुत्वं दृश्यते। यथाह मनुः (८।३२०)—'धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं बधः। शेषेष्वेकादशगुणं दाप्यस्तस्य च तद्धनम् ॥' इति ॥ विंशतिद्रोणकः कुम्भः। हर्तुर्ह्रियमाणस्वामिगुणापेक्षया सुभिक्षदुर्भिक्षकालाद्यपेक्षया वा ताडनाङ्गच्छेदनवधरूपा दण्डा योज्याः ॥ तथा संख्याविशेषादपि दण्डविशेषो रत्नादिषु। (मनुः ८।३२७।३२२)—'सुवर्णरजतादीनामुत्तमानां च वाससाम्। रत्नानां चैव सर्वेषां शतादभ्यधिके बधः ॥ पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते। शेषेष्वेकादशगुणं मूल्याद्दण्डं प्रकल्पयेत् ॥' इति ॥ तथा द्रव्यविशेषादपि (८।३२२)—'पुरुषाणां कुलीनानां नारीणां वा विशेषतः। रत्नानां चैव सर्वेषां हरणे वधमर्हति ॥' अकुलीनानां तु दण्डान्तरम्—'पुरुषं हरतो दण्डः प्रोक्त उत्तमसाहसः। स्त्र्यपराधे तु सर्वस्वं कन्यां तु हरतो वधः ॥' इति ॥ क्षुद्रद्रव्याणां तु माषतो न्यूनमूल्यानां मूल्यात्पञ्चगुणो दमः, 'काष्ठभाण्डतृणादीनां मृन्मयानां तथैव च ॥ वेणुवैणवभाण्डानां तथा स्नाय्वस्थिचर्मणाम् ॥ शाकानामार्द्रमूलानां हरणे फलमूलयोः। गोरसेक्षुविकाराणां तथा लवणतैलयोः ॥ पक्वान्नानां कृतान्नानां मत्स्यानामामिषस्य च। सर्वेषामल्पमूल्यानां मूल्यात्पञ्चगुणो दमः ॥' (२२।४) इति नारदस्मरणात् ॥ यः पुनः प्रथमसाहसः क्षुद्रद्रव्येषु शतावरः पञ्चाशत्पर्यन्तोऽसौ माषमूल्ये तदधिकमूल्ये वा यथायोग्यं व्यवस्थापनीयः ॥ यत् पुनर्मानवं क्षुद्रद्रव्यगोचरवचनं—'तन्मूल्याद्विगुणो दमः' इति; तदल्पप्रयोजनशरावादिविषयम्। तथापराधगुरुत्वादपि दण्डगुरुत्वम्। यथा—'संधिं भित्वा तु ये चौर्यं रात्रौ

कुर्वन्ति तस्कराः। तेषां छित्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेत् ॥' (८।२७६) इत्येवं सर्वेषामानन्त्यात्प्रतिद्रव्यं वक्तुमशक्ते र्जातिपरिमाणादिभिः कारणैर्दण्डगुरु-लघुभावः कल्पनीयः। पथिकादीनां पुनरल्पापहारे न दण्डः। यथाह मनुः (८।३४१)—'द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके। आददानः परक्षेत्रान्न दण्डं दातुमर्हति ॥' तथा—'चणकव्रीहिगोधूमयवानां मुद्गमाषयोः। अनिषिद्धैर्गृहीतव्यो मुष्टिरेकः पथि स्थितैः ॥ तथैव सप्तके भक्तं भक्तानि षडनश्नता। अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः ॥ २७५ ॥

CHARCHA

1. क्षुद्र etc.—क्षुद्राणां मध्याणां महाद्रव्याणां हरणम्। तस्मिन्। अधि ७मी।

2. सारतः—सार is essence, here price सारेण इति सारतः तृतीयायां तसिः।

3. देशकालवयः etc—देशश्च कालश्च वयश्च इति देशकालवयांसि, द्वन्द्व, देशकालवयःसहिता शक्तिः इति देशकालवयःशक्तिः, शाकपार्थिवादि। ताम्। obj of सञ्चिन्त्य। If the reading is देशेकालवयः शक्ति, then the whole is समाहारद्वन्द्व by the dictum "सर्वो द्वन्द्वो विभाषा एकवद् भवति"।

276. The aider & abetter of a thief will be punished.

भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान्।
दत्त्वा चौरस्य वा हन्तुर्जानतो दम उत्तमः ॥ २७६ ॥

Prose—भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान् दत्त्वा चरौस्य हन्तुः वा (दुष्टत्वं) जानतः (जनस्य) उत्तमः (उत्तमसाहसोक्तः) दमः स्यात्।

Beng.—চোর বা হত্যাকারীকে যে অন্ন, অবকাশ বা বাসস্থান, শীতবারণজন্য অগ্নি, পিপাসা নিবারণ জন্য জল, চৌর্য্যমন্ত্র, চৌর্যসাধন দাও, রজ্জু ও তার যাতায়াতের ব্যয় যে দেয় এবং তাদের দুষ্টাভিসন্ধি জানিয়াও সাহয্য করে তার উত্তমসাহসোক্ত দণ্ড হইবে।



Eng.—One who knowingly (deliberately) aids and abets a thief or a murderer by giving fooding, lodging, fire, water, special mode or incantations, and materials or weapons for this purpose will also be punished as in उत्तमसाहस।

Mita—अचौरस्यापि चौरोपकारिणः दण्डमाह—"भक्तम्" अशनम्, "अवकाशो" निवासस्थानम्, (वासस्थानम्), "अग्निः" चौरस्य शीतापनोदाद्यर्थम्, "उदकं" तृषितस्य, "मन्त्रः" चौर्य्यप्रकारोपदेशः, "उपकरणं" चौर्य्यसाधनम्, "व्ययः" अपहारार्थं देशान्तरं गच्छतः पाथेयम्, एतानि "चौरस्य हन्तुः वा" दुष्टत्वं "जानन्नपि यः प्रयच्छति तस्य उत्तमसाहसो दण्डः। चौरोपेक्षिणामपि दोषः—"शक्ताश्च च उपेक्षन्ते तेपि तद्दोषभागिनः" इति नारदस्मरणात् ॥ २७६ ॥

CHARCHA—See Mita. जानतः (ज्ञा+शतृ) is an adj. used substantively. See Prose & Mita. दुष्टत्वं जानतः (जनस्य) उत्तमःदमः स्यात् ॥

277. Punishment in causing abortion etc.

शस्त्रावपाते गर्भस्य पातने चोत्तमो दमः।
उत्तमो वाधमो वापि पुरुषस्त्रीप्रमापणे ॥ २७७ ॥

Prose—शस्त्रावपाते (परगात्रे शस्त्राघाते सति) गर्भस्य पातने (सति, पातन विषये वा) उत्तमः दमः स्यात्। पुरुषस्त्रीप्रमापणे (पुरुषस्त्रीजातिवधविषये) [कुशीलकारणादि विवेचनया स्थानविशेषे] उत्तमः (स्थानविशेषे) अधमः वा दमः (दण्डः) वेदितव्यः (वा स्यात्)।

Beng.—শস্ত্রদ্বারা পরগাত্রে আঘাত করিলে বা গর্ভপাত করিলে বা ঘটাইলে উত্তমসাহস দণ্ড হইবে। যে কোন পুরুষ বা স্ত্রীলোককে

বধবিষয়ে কুলশীলকারণাদি বিবেচনা করিয়া তবে উত্তম বা অধম দণ্ড ব্যবস্থা কর্ত্তব্য।

Eng.—In striking another with a weapon or in causing abortion of a woman, punishment will be as in उत्तमसाहस। Again in any case of murder of a male or a female, punishment will be as in उत्तमसाहस or as in अधमसाहस by considering the line habit & cause of the murderer.

Mita—किञ्च परगात्रेषु "शस्त्रस्यावपातने" दासीब्राह्मणगर्भव्यतिरेकेण "गर्भस्य पातने" चोत्तमो दमो दण्डः। [दासीगर्भनिपातने तु दासीगर्भविनाशकृत् (sl. 236 ante.) इत्यादिना शतदण्डोभिहितः। ब्राह्मणगर्भविनाशेतु "हत्वा-गर्भमविज्ञातम्" इत्यत्र ब्रह्महत्यातिदेशं वक्ष्यते]। पुरुषस्य प्रमापणे स्त्रियाश्च शीलवृत्ताद्यपेक्षया उत्तमो अधमो वा दण्डो व्यवस्थितो वेदितव्यः॥

CHARCHA

1. पुरुषस्त्रीप्रमापणे=पुरुष is any male=mankind. So स्त्री is any female. पुरुषश्च स्त्री च पुरुषस्त्रियौ, द्वन्द्व। तयोः प्रमापणम् (हननं, वधो वा), ६तत्। विषयाधिकरणे ७मी। Punishment in homicide will be highest or less according to the habits and causes etc of the murderer.

278. Punishment of women causing abortion, murder etc.

विप्रदुष्टां स्त्रियं चैव पुरुषघ्नीमगर्भिणीम्।
सेतुभेदकरीं चाप्सु शिलां बद्ध्वा प्रवेशयेत्॥ २७८॥

Prose—विप्रदुष्टाम् (व्यभिचारिणीं) पुरुषघ्नीं (पुरुषघातिनीं) अगर्भिणीं (निजगर्भनाशेन अगर्भिणीम्) सेतुभेदकरीं (मर्य्यादाभङ्गकारिणीं) च स्त्रियं, शिलां बद्ध्वा अप्सु प्रवेशयेत् (घातयेत्)।



Beng—যে স্ত্রীলোক ব্যভিচারিণী ও দুষ্টা, ভ্রূণপুরুষ নাশিনী বা পুরুষহত্যাকারিনী স্বগর্ভপাতিণী হইয়া অগর্ভিণী এবং নারীর মর্য্যাদা লংঘনকারিণী,—এদের গলায় পাথর বাঁধিয়া জলমধ্যে নিক্ষেপ করিবে।

Eng.—A vile characterless corrupt woman causing abortion of others and of self, a murderer of males (or male embryo or issues in the womb) and a violator of laws (specially feminine laws) should be thrown down in water after tying a heavy stone-slab in her neck.

Mita—अपि च विशेषेण प्रदुष्टा "विप्रदुष्टा" भ्रूणघ्नी, स्वगर्भपातिनी च। या च पुरुषस्य हन्त्री, सेतूनांभेत्री च—एता गर्भरहिताः ग्रीवायां शिलां बद्ध्वा अप्सु "प्रवेशयेत्" यथा न प्लवन्ते॥ २७८॥

CHARCHA

1. विप्रदुष्टाम्—Mita takes it as meaning भ्रूणघ्नी स्वगर्भपातिनी च। But we suggest to take विप्रदुष्टा as an unchaste व्यभिचारिणी woman. ताम्। Indeed Lexicon renders विप्रदुष्ट as "corrupt". These prostitutes mostly detroy their generative power by herbs.

2. पुरुषघ्नीम्—we take it as पुरुषं (भ्रूणपुरुषं वा) हन्ति वा हतवती इति पुरुष+हन+क्विप् स्त्रियाम्=पुरुषघ्नी, ताम। she is not only a murderer of males but also of male embryos. Mita takes it as पुरुषस्य हन्त्री only.

3. सेतुभेदकरीम—सेतु is मर्य्यादा or law (नियम)। तस्य भेदः। तं करोतीति इति ट प्रत्ययः। स्त्रियाम्…करीम्।

4. अगर्भिणीम्—Being विप्रदुष्टा—these are अगर्भिणी by causing self abortion too. Mita construes it as गर्भरहित only.

279. Capital punishment for women giving poison to others and of murderer of husband etc.

विषाग्निदां पतिगुरुनिजापत्यप्रमापणीम् ।
विकर्णकरनासौष्ठीं कृत्वा गोभिः प्रमापयेत् ॥ २७९ ॥

Prose—विषाग्निदां पतिगुरुनिजापत्यप्रमापणीम् (पत्यादिहत्याकारिणीं) विकर्णकरनासौष्ठीं कृत्वा गोभिः (दुष्टवलीवर्दैः) प्रमापयेत् (मारयेत)।

Beng.—যে স্ত্রীলোক অন্যকে খাদ্যসহ বিষদেয়, বা অন্যকে মারিবার জন্য গ্রামে বা অন্যের ঘরে আগুণ লাগায়, বা নিজপতি, শ্বশুর ও সন্তানকে হত্যা করে, সেই নারীর কান, হাত, নাক ও ওষ্ঠাধর ছেদন করিয়া দুষ্টষাড়ের দ্বারা মারিবেন।

Eng.—A woman giving poison to others, or causing fire in a village or house to kill others, a murderess of husband, father-in-law or of her own children, should be killed through untrained wild bulls after cutting her ears, hand, nose and lips.

Mita. किञ्च—"अगर्भिणीम्" इत्यनुवर्त्तते।, या च परवधार्थम् अन्नपानादिषु विषं ददाति क्षिपति। या च दाहार्थं ग्रामादिष्वग्निं ददाति, तथा या च निजपतिगुर्वपत्यानि मारयति, तां विच्छिन्नकर्णकरनासौष्ठीं कृत्वा अदान्तैः दुष्टवलीवर्दैः प्रवाह्य मारयेत्। [स्तेयप्रकरणे यदेतत् साहसिकस्य दण्ड विधानं तत्प्रासङ्गिकमिति मन्तव्यम्] ॥ २७९ ॥

### CHARCHA

1. पति &c.—पति-गुरु-निजापत्यानि, द्वन्द्व। प्र मा+णिच्+ल्युट कर्त्तरि by the rule "कृत्यल्युटो बहुलम्"=प्रमापणी (स्त्रियाम्) murderess. पतिगुरुनिजापत्यानां प्रमापणी। ताम्॥ विषाग्नी ददाति या सा विषाग्निदा (with क)। ताम्॥



2. विकर्ण etc.—कर्णौ च करौ च नासा च ओष्ठौ च इति प्राण्यङ्गत्वात् कर्णकरनासौष्ठम्। विच्छिन्नकर्णादिकं यस्याः विकर्णकरनासौष्ठी। ताम्। obj. of कृत्वा। These epithets apply to स्त्रियम् understood; separately all much women. Mita says (cp "अगर्भिणीम् इति अनुवर्त्तते)। such विषाग्नि—प्रमापणी women should be अगर्भिणी for taking the punishment. विषाग्निदा and पति प्रमापणी i.e. both will be construed with अगर्भिणी। such a गर्भिणी should not have this punishment for वयःकालशक्त्यनुसारेण, कुलशीलादि विचारेण च दण्डः स्यात् ॥

280. The procedure to trace out murderer in unknown cases.

अविज्ञातहतस्याशु कलहं सुतवान्धवाः ।
प्रष्टव्या योषितश्चास्य परपुंसि रताः पृथक् ॥ २८० ॥

Prose—अविज्ञातहतस्य (सम्बन्धे) तस्य सुतबान्धवाः कलहं प्रष्टव्याः। अस्य योषितः प्रष्टव्याः, अस्य परपुंसिरताः (व्यभिचारिण्यश्च) अपि पृथक् प्रष्टव्याः।

Beng.—কেহ যদি কোন অবিজ্ঞাত পুরুষকর্ত্তৃক ঘাতিত হয়, তবে প্রথমে এর পুত্র ও নিকটাত্মীয়দের জিজ্ঞাসা করিবে—"কার সহিত এর কলহ ছিল"। মৃতের সম্বন্ধিণী যোষিৎ বর্গকেও জিজ্ঞাসা করিবে। (সম্ভাব্যস্থলে) তার ব্যভিচারিণী রক্ষিতাকেও পৃথকভাবে জিজ্ঞাসা করিবে। [অথবা তত্রস্থ ব্যভিচারিণীগণকে তার চরিত্র সম্বন্ধে খোঁজ করিবে]।

Eng.—If one is murdered by some unknown person, then first of all his sons and near relations should be asked or enquired—with whom the dead had quarrel; his near female relations, and his herlot kept should

also be enquired of this separately. [or the harlots there should be enquired about the character of the dead].

Mita—अविज्ञातकर्तृके हनने हन्तृज्ञानोपायमाह—"अविज्ञातपुरुषेण हतस्य" अविज्ञातपुरुषेण घातितस्य सम्बन्धिनः "सुताः, प्रत्यासन्नबान्धवाश्च 'केनास्य कलहो जात" इति कलहमाशु प्रष्टव्याः। तथा मृतस्य सम्बन्धिन्यो योषितः याश्च परपुंसि रता व्यभिचारिण्यस्ता अपि प्रष्टव्याः॥ २८०॥

## CHARCHA

1. अविज्ञातहतस्य—अविज्ञात is अविज्ञातपुरुष। तेन हतः घातितः। ततद्। तस्य। शेषे षष्ठी॥

2. प्रष्टव्याः—प्रच्छ+तव्य कर्मणि। प्रच्छ is द्विकर्मक and is दुहादि। So its अप्रधानकम्—"सुतबान्धवाः," is उक्त here and कलहम् remain undeclared,

281. Further mode of asking in case of murder.

स्त्रीद्रव्यवृत्तिकामो वा केन वायं गतः सह।
मृत्युदेशसमासन्नं पृच्छेद्वापि जनं शनैः॥ २८१॥

Prose—"अयं (अविज्ञातहतः पुरुषः) स्त्रीद्रव्यवृत्तिकामः आसीत्, वा केन सह अयं गतः (विदेशं गतः)" इति मृत्युदेशसमासन्नं जनं वा शनैः पृच्छेत्।

Beng.—"উক্তমৃতব্যক্তি স্ত্রীকামুক ছিল, না কোন দ্রব্যবিশেষ লালসাযুক্ত ছিল, না কোন বৃত্তির আশায় ছিল, কার সহিত এ বিদেশে গেল (বা আসিল)" ইত্যাদি ক্রমে ক্রমে মৃত্যুস্থাননিকট বাসীদের নিকটও মৃতসম্বন্ধে জিজ্ঞাসা করিবেন।

Eng.—Was the murdered person passionate for woman, for some article or was he in search for a livelihood; with whom did he go abroad—the police officer



shall gradually enquire of these informations to the inhabitants residing near the murder-place.

Mita—कथं प्रष्टव्या इत्यत आह—'किमयं स्त्रीकामो द्रव्यकामो वृत्तिकामो वा', तथा 'कस्यां किं सम्बन्धिन्यां वा स्त्रियामस्य रतिरासीत्', 'कस्मिन् द्रव्ये वा प्रीतिः" "कुतो वा वृत्तिकामः", "केन वा सह देशान्तरं गतः"—इति नानाप्रकारं व्यभिचारिण्यः योषितः पृथक् पृथक् विश्वास्य प्रष्टव्याः। तथा मरणदेश-निकटवर्त्तिनः गोपाटविकाद्या ये जनास्तेपि विश्वासपूर्वकं प्रष्टव्याः। एवं नाना-प्रकारैः प्रश्नैः हन्तारं निश्चित्य तदुचितो दण्डो विधातव्यः॥ २८१॥

## CHARCHA

1. स्त्रीद्रव्य &c.—स्त्री च द्रव्यं च वृत्तिश्च स्त्रीद्रव्यवृत्तयः, द्वन्द्व। ताः कामयते इति स्त्रीद्रव्यवृत्ति+कामि+ण कर्त्तरि=स्त्रीद्रव्यवृत्तिकामः a desirer or searcher of these.

2. मृत्युदेश etc.—मृत्युदेश is place of murder. मृत्युदेशस्य समासन्नः (निकटवर्त्ती)। तम्। Qual. जनम्। The police officer will take all these informations from local persons on the spot and neighbourhood of murder, to find out the murderer. There enquires from local persons will be शनैः in gradual order after creating confidence on them.

282. Burners of paddy field etc and adulterer of a queen should be burnt down.

क्षेत्रवेश्मवनग्रामविवीतखलदाहकाः।
राजपत्न्यभिगामी च दग्धव्यास्तु कटाग्निना॥ २८२॥

Prose—क्षेत्रवेश्मवनग्रामविवीतखलदाहकाः च राजपत्न्यभिगामी कटाग्निना दग्धव्याः (भवेयुः)। [N. B. खल is धान्यमर्दनस्थान। Thus

kulluika renders खलात् under Manu XI. sl. 17 as "खलात्=धान्यमर्दनस्थानात्" ] ।

Beng.—শস্যপূর্ণ ক্ষেত্র, গৃহ, আরামবন, গ্রাম, কাষ্ঠতৃণসঞ্চয় স্থান ধান্য মর্দনস্থান যারা পোড়াইয়া দেয় বা রাজপত্নীগন্তা হয়, তাদের বীরণাদিনির্মিত কট বা মাদুরে জড়াইয়া পোড়াইয়া মারিবে।

Eng,—The burners of paddy fields, houses pleasure-gardens, villages, or farms where fuels etc are stocked, or of thrashing places, and an adulterer of the queen should be burnt down by wrapping in mats of ushira grass.

Mita—किञ्च "क्षेत्रं" पक्वकलशस्योपेतम्, "वेश्म" गृहम्, "वनम्" अटवीं क्रीडावनं वा, ग्रामम्, "विवीतं" उक्तलक्षणं काष्ठतृणादिसञ्चयस्थानम्। खलं ( धान्यमर्दनस्थानं ) वा ये दहन्ति, येच राजपत्नीमभिसच्छन्ति। तान् सर्वान "कटैः" वीरणमयैः वेष्टयित्वा दहेत्। क्षेत्रादेः दाहकानां मारणदण्डप्रसङ्गात् दण्डविधानम् ॥ २८२ ॥

## CHARCHA

1. क्षेत्र etc—for meaning of क्षेत्र, वेश्मन् etc—see Mitakshara. क्षेत्रञ्च वेश्म च वनं च ग्रामश्च विवीतश्च (विवीतो वा), खलं च इति क्षेत्रवेश्मनग्रामविवीतखलानि, द्वन्द्व,। तेषां दाहकाः। दाहक connects or goes will all these "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्यकमभिसम्बध्यते" ॥ राजपत्न्यभिगामी has sing. to denote all such.

2. कटाग्निना—करणे ३या; कट is mat of virana grass. कठस्यअग्निः। तेन। करणे ३या।

## अथ स्त्रीसंग्रहणप्रकरणम्

[ The section on seduction etc of women ]

[ N. B.—Here संग्रहण means "to take as own, to seduce" Then स्त्रीसंग्रहण means seducing women specially परस्त्री into debauchery or corruption. Thus Mitakshara says "स्त्रीपुंसयोर्मिथुनीभावः संग्रहणम्" । ]

Mitakshera's Introduction here—"स्त्रीसंग्रहणाख्यं विवादपदं व्याख्यायते। प्रथमसाहसादि दण्डप्राप्त्यर्थं त्रेधा तत्स्वरूपंव्यासेन विवृतम्—" त्रिविधंतत् समाख्यातं प्रथमं मध्यमोत्तमम्। अदेशकालभाषाभिः निर्जने च परस्त्रियाः। कटाक्षावेक्षणं हास्यं प्रथमं साहसं स्मृतम् ॥ प्रेषणं गान्धमाल्यानां धूपभूषणवाससाम्। प्रलोभनं चान्नपानै मध्यमं साहसं स्मृतम् ॥ सहासनं विविक्ते तु परस्परमुपाश्रयः। केशाकेशिग्रहश्चैव सम्यक् संग्रहणं स्मृतम्" ॥ स्त्रीपुंसयोर्मिथुनीभावः संग्रहणम् ॥ [ See also Mita under sl. 284 etc. ]

283. The way to detect persons engaged in seducing women.

> पुमान्संग्रहणे ग्राह्यः केशाकेशि परस्त्रिया।
> सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौद्वयोस्तथा ॥ २८३ ॥

Proge—संग्रहणे प्रवृत्तः पुमान् परस्त्रिया ( सह ) केशाकेशि चेत ग्राह्यः ( गृहीत्वा दण्डयितव्यः ); सद्यः वा कामजैः चिह्नैः ( नखदन्तक्षतादि चिह्नैः ) तथा द्वयोः ( स्त्रीपुंसयोः ) प्रतिपत्त्यौ ( स्वीकारे, अवैधप्रणयस्वीकारे ) ( तद्द्वरा ) ज्ञात्वा ग्राह्यः ( गृहीत्वा दण्डयितव्यः )।

Beng.—পরস্ত্রীর সহিত কেশাকেশি ব্যবহার দ্বারা এই ব্যক্তি স্ত্রীসংগ্রহণে প্রবৃত্ত বুঝিবে এবং ধরিয়া দণ্ড দিবে। তদ্রূপ নখ দন্ত

কতাদিকামজ চিহ্নদ্বারা এবং পরস্পরের স্বীকারোক্তি দ্বারা বুঝিবে এই ব্যক্তি পরস্ত্রীসংগ্রহণে প্রবৃত্ত, তখন একে ধরিয়া দণ্ড দিবে।

Eng.—From amorous sports with hair with another's woman, from signs of scratches with nails tooth etc, on lips or faces or from each other's confession of love, a person is inferred as passionately disposed and is to be taken in for adequate punishment.

Mita—संग्रहणज्ञानपूर्वत्वात् तत्कर्तुर्दण्डविधानस्य तज्ज्ञानोपायम् तावदाह—संग्रहणे प्रवृत्तः पुमान् केशाकेश्यादिभिर्लिङ्गैः ज्ञात्वा गृहीतव्यः। [परस्परकेशग्रहणपूर्विका क्रीडा केशाकेशि। "तत्रतेनेदम् इति सरूपे" इति बहुव्रीहौ सति "इच् कर्मव्यतिहारे" इति समासान्त इच् प्रत्ययः। (तिष्ठद्गुप्रभृतिषु इच्प्रत्ययस्य पाठात्) अव्ययत्वाच्च लुप्ततृतीयाविभक्तिः]। ततश्चायमर्थः—परभार्यया सह केशाकेशिक्रीडनेन, अभिनवैः कररुहदशनादिकृतव्रणैः रागकृतैर्लिङ्गैः द्वयोःसंप्रतित्त्या वा ज्ञात्वा संग्रहणे प्रवृत्तः (पुमान्) ग्रहीतव्यः। [परस्त्रीग्रहणं नियुक्तावरुद्धादि व्युदासार्थम्—Here परस्त्रीग्रहण is to prohibit नियुक्तस्त्री वा अवरुद्धस्त्री (See ahead)। ]

CHARCHA

1. केशाकेशि—केशेषु केशेषु गृहीत्वा प्रवृत्ते रमणे, कर्मव्यतिहारे द्योत्ये बहुव्रीहि by "तत्रतेनेदं इति सरूपे," then इच् comes by the rule "इच् कर्मव्यतिहारे" (कर्मव्यतिहार is interchange of action) then first केश becomes केशा with दीर्घ by the rule "अन्येषामपि दृश्यते"। Lastly whole is an अव्ययीभाव and अव्यय for इच् प्रत्ययान्त word is read in the तिष्ठद्गु class in अव्ययीभावीमास। It has the sense of तृतीया here. अव्ययत्वात् विभक्तिलोपः। Thus केशाकेशि ग्राह्यः means केशाकेशिचिह्ने न ग्राह्यः॥ परस्त्रिया has अप्रधानशब्दयोगे ३या।



2. प्रतिपत्तौ—प्रतिपत्ति is स्वीकार (confession). तस्याम् भावे ७मी। द्वयोः संप्रतिपत्तौसत्याम्॥

284. other signs to detect seducing person.

नीवीस्तनप्रावरणसक्थिकेशावमर्शनम्।
अदेशकालसंभाषं सहैकासनमेव च ॥ ২৮৪॥

Prose—यः नीविस्तनप्रावरण-सक्थिकेशावमर्शनम्, अदेशकालसंभाषं सहैकासनम् आचरति, स पुमान् अपि संग्रहणे प्रवृत्तः ततः ग्राह्यः (गृहीत्वा दण्ड-यितव्यः)।

Prose—যে ব্যক্তি পরস্ত্রীর কটিবস্ত্র, স্তনাবরক বস্ত্র; সক্থিদেশ (জঘনদেশ) বা কেশস্পর্শ করে, অকালে অস্থানে (অর্থাৎ গোপনে) পরস্ত্রীর সহিত সংভাষণ করে, বা একত্রে একমঞ্চাদিতে বসে, সে স্ত্রীসংগ্রহণে প্রবৃত্ত জানিয়া তাকে ধরিবে (ও উপযুক্ত দণ্ড দিবে)।

Eng.—The person who touches the waist cloth or breast cloth or the thigh or hair of another's woman, affectionately speaks with her in darkness or in a secret place, or sits with her privately in the same sit, is to be understood as engaged in seducing woman (and should be caught and punished).

Mita—किञ्च, यः पुनः परदारपरिधानग्रन्थिप्रदेश-कुचप्रावरण-जघनमूर्ध-रुहादिस्पर्शनं साभिलाष इवाचरति। तथा अदेशे निर्जने जनानाकीर्णे वा अन्धकारकाले अकाले संलापनं (? मंलपनं) करोति। परभार्य्यया वा सह एकमञ्चकादौ विरंसया अवतिष्ठते यः, सोपि संग्रहणे प्रवृत्तो ग्राह्यः। [एतच्च आशङ्क्यमानदोषयुक्तपुरुषविषयम्। इतरस्य तु न दोषः। यथाहमनुः—"यस्त्वनाक्षारितः पूर्वमभिभाषेत कारणात्। न दोषं प्राप्नुयात् न हि तस्य

व्यतिक्रमः ।" इति ॥ यः परस्त्रिया स्पृष्टः क्षमते ( सहते ) असावपि ग्राह्य इति तेनैवोक्तम्—"स्त्रियं स्पृशेद् अदेशेयः स्पृष्टो वा मर्षयेत्तथा परस्परस्यानुमते सर्वं संग्रहणं मतम्" इति । यश्च ममेयं विदग्धा असकृत रमितचरी ( पूर्वं रमिता ) इति श्लाघया भुजङ्गजनसमक्षं ख्यापयति असावपि ग्राह्य इति तेनैवोक्तम् ॥ "दर्पाद्वा यदि वा मोहात् श्लाघया वा स्वयं वदेत् । पूर्वं मयेयं भुक्तेति तच्च संग्रहणं स्मृतम्" । इति ] ॥ २८४ ॥

## CHARCHA

1. नीवी etc—Both नीवि and नीवी means कटिवस्त्र, cp "प्रस्थानभिन्नां न ववन्ध नीविम्" Rag VII, and "नीविं प्रति प्रणिहिते करे प्रियेण" etc. Rarely it means कटिदेश also. स्तनस्य प्रावरणम् ( आच्छादनवस्त्रम् ) स्तनप्रावारणम् । प्रावरण is usually upper garment. सक्थि is thigh ( also buttock here ) ; अवमर्शनम् is touching. The compound is obj of आचरति etc understood. See Prose.

2. अदेश &c—देशश्च कालश्च । देशकालौ, द्वन्द्व । अप्रशस्तौ देशकालौ आदेशकालौ, कर्मधा । तत्र संभाषः । सुप्सुपा । तम् । obj. of आचरति ।

3, सहैकासनम्—सह ( सार्द्धम् वा समानंसदृशं ) एकासनम्, सुप्सुपा । obj. of आचरति ।

285. Punishement of both female and male in such prohibited matter.

स्त्री निषेधे शतं दद्याद् द्विशतं तु दमं पुमान् ।
प्रतिषेधे तयोर्दण्डो यथा संग्रहणे तथा ॥ २८५ ॥

Prose—निषेधे ( निषेधविषये, निषेधे सति वा ) प्रवर्त्तमाना स्त्रीशतं पणं दण्डं दद्यात्, पुमान् द्विशतं ( पणं ) दमं ( दण्डं ) दद्यात् । प्रतिषेधेपि तयोः प्रवर्त्तमानयोः संग्रहणे ( सम्भोगे ) यथा दण्डः तथा होयः ।





Beng—নিষেধ করিয়া দিলেও, রমণী যদি পুরুষের প্রতি প্রবৃত্তা হন তবে শতপণ দণ্ড হইবে, আর এইরূপে নিষিদ্ধ পুরুষ প্রবৃত্ত হইলে দুইশত পণ দণ্ড হইবে। স্ত্রীপুরুষ উভয়েই যদি প্রতিষেধ সত্ত্বেও পরস্পর প্রবৃত্ত হয়, তবে পরনারীসম্ভোগে যে দণ্ড বিধান আছে এ ক্ষেত্রেও তাহাই হইবে।

Eng.—If a women is attracted to a man in spite of prohibition, then she sill be fined a hundred panas ; a man so doing will be fined two hundred panas ; if both are attracted to each other in spite of prohibition then punishment will be as stated in full illegal enjoyment.

Mita—प्रतिषिद्धयोः स्त्रीपुंसयोः पुनः संलापादिकरणे दण्डमाह—प्रतिषिध्यते इति "प्रतिषेधः"—पतिपित्रादिभिः येन सह सम्भाषणादिकं निषिद्धं तत्र प्रवर्त्तमाना स्त्री शतपणं दण्डं दद्यात् । पुरुषः पुनरेवं निषिद्धे प्रवर्त्तमानो द्विशतं दद्यात् । द्वयोस्तु स्त्रीपुंसयोः प्रतिषिद्धे प्रवर्त्तमानयोः, "संग्रहणे" सम्भोगे वर्णानुसारेण यो दण्डो वक्ष्यते ( see sl. 286) स एव विज्ञेयः । [ एतच्च चारणादिभार्य्याव्यतिरेकेण । "नैष चारणदारेषु विधिः आत्मोपजीविषु । सज्जयन्ति हि तेनारीं निगूढाश्चारयन्ति च" इति मनुस्मरणात्—This does not hold good in चारणस्त्री, for they are आत्मोपजीवी and made lean on others ] ॥ २८५ ॥ Charcha—Easy. [ संग्रहण is सम्भोग here ]. Remark—here the reading "स्त्री निषेधे शतं दण्ड्या द्विशतं तु दमं पुमान्" is more forceful.

286. दण्ड of various castes in संग्रहण

सजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः ।
प्रातिलोम्ये वधः पुंसो नार्य्याः कर्णादिकर्त्तनम् ॥ २८६ ॥

Prose—सजातौ संग्रहणे उत्तमः ( उत्तमसाहसः ) दण्डः, आनुलोम्ये ( उत्तमात् अधमे ) तु मध्यमः ( मध्यमसाहसः ) दण्डः। प्रातिलोम्ये ( अधमस्य उत्तमे संग्रहणे ) पुंसः वधः दण्डः, नार्य्याः कर्णादिकर्त्तनम् दण्डः स्यात्।

Beng.—ব্রাহ্মণাদি চারিবর্ণের স্বজাতিতে গুপ্তা পরস্ত্রীতে সম্ভোগে উত্তমসাহস দণ্ড ( যথা হাজার আশীপণ ) হইবে; উত্তমবর্ণ হীনবর্ণের পরস্ত্রী সংস্তোগে মধ্যমসাহস দণ্ড ( ৫ শত পণ ) হইবে; আর প্রতিলোমভাবে অধমবর্ণ উত্তমবর্ণস্ত্রীতে উপগত হইলে, পুরুষের বধদণ্ড, আর নারীর কর্ণাদিচ্ছেদন দণ্ড হইবে।

Eng.—Of the four castes of Brahmana, kshatriya etc. if there be secret enjoyment of another's wife in the same caste then there will be a fine of ( 1080 panas ) as in उत्तमसाहस ; in such enjoyment of a higher caste to a lower one then there will be a fine of 500 panas as in मध्यमसाहस। But in case of a lower caste enjoying secretly a woman ( another's wife ) of higher caste ( i.e, in प्रतिलोम or reverse order from low to high ), the male will have capital punishment and a famale will undergo punishment of cutting off of ear, nose etc. [ N.B.—Everywhere the दण्डविधान will be by the king, for he is to protect all ].

Mita.—तमिदानीं संग्रहणे दण्डमाह—

चतुर्णामपि वर्णानां बलात्कारेण सजातीयगुप्तपरदाराभिगमने साशीतिपणसहस्रं दण्डनीयः। यदा त्वानुलोम्येन हीनवर्णां स्त्रियमगुप्तामभिगच्छति, तदा मध्यमसाहसं दण्डनीयः। यदा पुनः सवर्णामगुप्तामानुलोम्येन गुप्तां वा व्रजति तदा मानवे विशेष उक्तः—'सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन्। शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह संगतः॥' तथा—'सहस्रं ब्राह्मणो दण्ड्यो गुप्ते तु ते व्रजन्। शूद्रायां क्षत्रियविशोः सहस्रं तु भवेद्दमः॥' इति॥



एतच्च गुरुसखिभार्यादिव्यतिरेकेण द्रष्टव्यम्।—'माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा। पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा॥ दुहिताचार्यभार्या च सगोत्रा शरणागता। राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या॥ आसामन्यतमां गच्छन्गुरुतल्पग उच्यते। शिश्नस्योत्कर्तनात्तत्र नान्यो दण्डो विधीयते॥' ( १२।७३—७५ ) इति नारदस्मरणात्॥ प्रातिलोम्ये उत्कृष्टवर्णस्त्रीगमने क्षत्रियादेः पुरुषस्य वधः। एतच्च गुप्ताविषयम्; अन्यत्र तु धनदण्डः। 'उभावपि हि तावेव ब्राह्मण्या गुप्तया सह। विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना॥ ब्राह्मणीं यद्यगुप्तां तु सेवेतां वैश्यपार्थिवौ। वैश्यं पञ्चशतं कुर्यात्क्षत्रियं तु सहस्रिणम्॥' ( ८।३७७।३७६ ) इति मनुस्मरणात्। शूद्रस्य पुनरगुप्तामुत्कृष्टवर्णां स्त्रियं व्रजतो लिङ्गच्छेदनसर्वस्वापहारौ; गुप्तां तु व्रजंस्तस्य वधसर्वस्वापहाराविति तेनैवोक्तम्। ( मनुः ८।३७४ )—'शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन्। अगुप्तमङ्गसर्वस्वैर्गुप्तं सर्वेण हीयते॥' इति। नार्याः पुनर्हीनवर्णं व्रजन्त्याः कर्णयोः, 'आदि'ग्रहणान्नासादेश्च कर्त्तनम्। आनुलोम्येन वा सवर्णं वा व्रजन्त्या दण्डः कल्प्यः। अयं च वधायुपदेशो राज्ञ एव, तस्यैव पालनाधिकारान्न द्विजातिमात्रस्य। तस्य 'ब्राह्मणः परीक्षार्थमपि शस्त्रं नाददीत' इति शस्त्रग्रहणनिषेधात्। यदा तु राज्ञो निवेदनेन कालविलम्बनेन कार्यातिपाताशङ्का तदा स्वयमेव जारादीन्हन्यात्। ( मनुः ८।३४८ )—'शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते'। तथा ( मनुः ८।३५१ )—'नाततायिवधे दोषो हन्तुर्भवति कश्चन। प्रकाशं वाऽप्रकाशं वा मन्युस्तं मन्युमृच्छति॥' इति शस्त्रग्रहणाभ्यनुज्ञानाच्च। तथा क्षत्रियवैश्ययोरन्योन्यस्त्रियभिगमने यथाक्रमं सहस्र-पञ्चशतपणात्मकौ दण्डौ वेदितव्यौ। तदाह मनुः ( ८।३८२ )—'वैश्यश्चेत्क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत्। यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः॥' इति॥ २८६॥

CHARCHA—For आनुलोम्य ( अनुलोम+ष्यञ् see sl. 182 & 207 ) right order & प्रातिलोम्य or reverse order see ante. 207 etc.

**287.** Now punishment is said of abduction &c. of virgins or unmarried girls.

अलंकृतां हरन्कन्यामुत्तमं ह्यन्यथाधमम् ।
दण्डं दद्यात् सवर्णासु प्रातिलोम्ये वधः स्मृतः ॥ २८७ ॥

Prose—सवर्णासु ( विवाहार्थम् ) अलंकृतां कन्यां हरन् जनः उत्तमं (उत्तमसाहसं) दण्डं दद्यात्, अन्यथा ( अविवाहोन्मुखीं कन्यां हरन् ) अधमं दण्डं दद्यात् । प्रातिलोम्ये ( उत्कृष्टवर्णकन्यायाः अधमवर्णपुरुषेण हरणे सति ) वध एव दण्डः ( स्मृतः ) । [ N.B —शासनाधिकृतः राजा एव एतं दण्डं विदध्यात् ] ।

Beng.—বিবাহোন্মুখী অলংকৃতা সবর্ণা কন্যাকে হরণ করিলে উত্তমসাহস দণ্ড দিতে হইবে। আর অবিবাহোন্মুখী সবর্ণা কন্যাকে হরণ করিলে অধমসাহস দণ্ড দিতে হইবে। কিন্তু প্রতিলোমভাবে অর্থাৎ অধমবর্ণ পুরুষ যদি উৎকৃষ্ট বা উত্তমবর্ণা কন্যা অপহরণ করে তবে বধ দণ্ড হইবে।

Eng.—If amongst the same caste a male forcibly carries away an adorned maiden going to be married, then his punishment will be as in उत्तमसाहस । Otherwise i e, by forcible carrying away of a girl of some caste not going to be wedded, the fine will be as of अधमसाहस । If however there is forcible carrying of a girl of higher caste by one of a lower caste then there will be capital punishment. [ N.B.—Note सवर्ण हरणे दण्डः प्रातिलोम्यहरणे वधः ] ।

Mita—पारदार्य्यप्रसंङ्गात् कन्यायामपि दण्डमाह—विवाहाभिमुखीभूताम् अलंकृतां सवर्णां कन्यामपहरन् उत्तमसाहसं दण्डनीयः। तदनभिमुखीं सवर्णां हरन् प्रथमसाहसम् दण्डनीयः। उत्कृष्टवर्णां कन्यामपहरतः पुनः क्षत्रियादेः



वध एव ( दण्डः ) । [ दण्डविधानात् अपहर्त्तृसकाशात् आच्छिद्य अन्यस्मैदेया इति गम्यते—owing to this दण्डविधान, it is inferred that the कन्या is to be taken back from the अपहर्त्ता and be given in marriage to a suitable groom ] ॥

Charcha—Easy.

288. दण्ड is in हरण of an unwilling maiden etc

सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः ।
दूषणे तु करच्छेद उत्तमायां वधस्तथा ॥ २८८ ॥

Prose—अनुलोमासु सकामासु ( विषये, कन्याहरणविषये ) न दोषः, अन्यथा ( अकामकन्याहरणे ) दमः ( प्रथमसाहसदण्डः ) स्यात् । दूषणे ( कन्यादूषणे, संग्रहणेन कन्यात्वनाशे सति ) करच्छेदः ( दण्डः ), उत्तमायां ( अनिच्छन्त्यां कन्यायां दूषितायां सत्यां ) वधः दण्डः स्यात् ।

Beng.—উচ্চবর্ণের পুরুষ যদি অধমবর্ণের সকামা (ইচ্ছুক) কন্যাকে হরণ করে, তবে দোষ হইবে না; কিন্তু তাদৃশ পুরুষ অনিচ্ছুক কন্যাকে হরণ করিলে প্রথমসাহস দণ্ড হইবে। আর অকামা (অনিচ্ছুক) কন্যাকে দূষিত করিলে করচ্ছেদ দণ্ড হইবে। ইহাও অনুলোম বর্ণবিষয়ক। কিন্তু নীচবর্ণ পুরুষ উত্তমবর্ণের অনিচ্ছুক কন্যাকে দূষিত করিলে, তার বধ দণ্ড হইবে।

Eng —If a male of higher caste carries away a willing maiden of a lower caste then there is no punishment ; but if such a male carries away an unwilling maiden then he is to be punished as in अधमसाहस ( =प्रथम साहस ) । If again a male of a higher caste pollutes an unwilling maiden of lower caste then his hand is to be lopped off ;

if again a male of a low caste pollutes an unwilling maiden of a higher caste then there will be capital punishment.

Mita—आनुलोम्यापहरणे दण्डमाह—यदि सानुरागां हीनवर्णां कन्यामपहरति तदा दोषाभावात् न दण्डः। अन्यथा तु अनिच्छन्तीमपहरतः प्रथमसाहसो दण्डः ॥ पुनश्च कन्यादूषणे दण्डमाह—अनुलोमासु इत्यनुवर्त्तते।

'अनुलोमासु' इत्यनुवर्त्तते। यद्यकामां कन्यां बलात्कारेण नखक्षतादिना दूषयति तदा तस्य करश्छेत्तव्यः। यदा पुनस्तामेवाङ्गुलिप्रक्षेपेण योनिक्षतं कुर्वन्दूषयति तदा मनूक्तषट्शतसहितोऽङ्गुलिच्छेदः। 'अभिषह्य तु स कन्यां कुर्याद्दर्पेण मानवः। तस्याशु कर्त्ये अङ्गुल्यौ दण्डं चार्हति षट्शतम् ॥' (मनुः ८।३६७)—इति। यदा पुनः सानुरागां पूर्ववद्दूषयति तदाऽपि तेनैव विशेष उक्तः (मनुः ८।३६८)—'सकामां दूषयन्कन्यां नाङ्गुलिच्छेदमर्हति। द्विशतं तु दमं दाप्यः प्रसङ्गविनिवृत्तये।' इति। यदा तु कन्यैव कन्यां दूषयति, विदग्धा वा, तत्रापि विशेषस्तेनैवोक्तः। 'कन्यैव कन्यां या कुर्यात्तस्यास्तु द्विशतो दमः। या तु कन्यां प्रकुर्यात्स्त्री सा सद्यो मौण्ड्यमर्हति ॥ अङ्गुल्योरेव वा च्छेदं खरेणोद्वहनं तथा ॥' (मनुः ८।३६९)—इति। 'कन्यां कुर्यात्' इति कन्यां योनिक्षतवतीं कुर्यादित्यर्थः ॥ तदा पुनरुत्कृष्टजातीयां कन्यामविशेषात्सकामामकामां वाऽभिगच्छति तदा हीनस्य क्षत्रियादेर्वध एव; 'उत्तमां सेवमानस्तु जघन्यो वधमर्हति' (८।३६६)—इति मनुस्मरणात् ॥ यदा सवर्णां सकामामभिगच्छति तदा गोमिथुनं शुल्कं तत्पित्रे दद्यात्, यदीच्छति; पितरि तु शुल्कमनिच्छति दण्डरूपेण तदेव राज्ञे दद्यात्। सवर्णामकामां तु गच्छतो वध एव: यथाह मनुः (८।३६६)—'शुल्कं दद्यात्सेवमानः समामिच्छेत्पिता यदि'। (८।३६४)—'योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति। सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः ॥' इति ॥ २८८ ॥

Charcha—Easy, see Prose & Mita.



**289. Punishment in false imputation of blame on maiden etc.**

शतं स्त्रीदूषणे दद्याद् द्वे तु मिथ्याभिशंसने।
पशून् गच्छन् शतं दाप्यो हीनस्त्रीं गाश्च मध्यमम् ॥ २८९ ॥

Prose—स्त्रीदूषणे (कन्यास्त्रीदूषणे) शतं (पणं दमं) दद्यात, मिथ्याभिशंसने तु द्वे शते दमं दद्यात्। पशून् गच्छन् शतं दाप्यः, हीनस्त्रीं गां च गच्छन् मध्यमम् (मध्यमसाहसं) दमं दद्यात्।

Beng.—কুমারী কন্যার চরিত্র বিষয়ে দোষোদ্ঘাটন করিলে শতপণ দণ্ড হইবে। আর ঐ উক্তি সর্বথা মিথ্যা হইলে দুইশত পণ দণ্ড দিবে। পশু গমনে শতপণ দণ্ড দিতে হইবে। আর হীনজাতীয়া স্ত্রী বা গোতে অভিগমন করিলে মধ্যমসাহস দণ্ড হইবে (অর্থাৎ অন্ততঃ ৫০০ পণ)।

Eng.—If an unmarried girl is villified with regard to her character then there will be a fine of 100 panas; if these villifications are absolutely false then the fine will be 200 panas; if one goes to some animal like goat etc then he will have to pay a fine of 100 panas, and if one goes to a girl of a very low order or to a cow then his punishment will be as in मध्यमसाहस।

Mita—किञ्च, स्त्रीशब्देनात्र प्रकृतत्वात् कन्यावमृश्यते। तस्या यदि कश्चिद् विद्यमानानेव अपस्मार-राजयक्ष्मादिदीर्घकुत्सितरोगसंसृष्टमैथुनत्वादिदोषान् प्रकाश्य "इयमकन्या" इति दूषयति असौ शतं दाप्यः। मिथ्याभिशंसने तु पुनरविद्यमानदोषाविष्करणेन दूषणे द्वे शते दापनीयः। गोव्यतिरिक्त पशुगमने तु शतं दाप्यः। यः पुनः हीनां स्त्रीयम् अन्त्यावसायिनीम् अविशेषात् सकामामकामां वा, गां च अभिगच्छति असौ मध्यमसाहसं दण्डनीयः ॥ २८९ ॥

## CHARCHA

1. स्त्रीदूषणे—दुष+णिच्+ल्युट्=दूषण here villification of character. स्त्रियाः (प्रकृतत्वात् कन्यायाः) दूषणम्। तस्मिन्। भावे ७मी। so also parse मिथ्याभिशंसन।

If again the villifications are absolutely false, then दण्ड is greater. मिथ्याभिशंसिते and मिथ्याभिशंसिता (शंस+तृच्) are also readings here. But मिथ्याभिशंसिता will break the क्रम of first clause here, though precise.

290, fine in संग्रहण of restricted दासी and भुजिष्या &c.

अवरुद्धासु दासीषु भजिष्यासु तथैव च।
गम्यास्वपि पुमान् दाप्यः पञ्चाशत्पणिकं दमम्॥ २९० ॥

Prose—(परपरिगृहीतेषु) अवरुद्धासु दासीषु भुजिष्यासु च तथा अन्यासु गम्यासु गच्छन् पुमान् पञ्चाशतपणिकं दमम् दाप्यः। [N.B.—पञ्चाशतपणमस्ति अस्मिन् इति पञ्चाशतपणिकम् (Qual दमम्) with ठन् by "अतइनिठनौ"। See उत्तमर्णिक अधमर्णिक &c ante]।

Beng.—(যে দাসীকে তার স্বামী দাসীকার্য্য করিতে নিষেধ করে, এইরূপে অন্যপুরুষসেবা হইতে রুদ্ধা তাদৃশী দাসীকে "অবরুদ্ধা দাসী" বলা হয়। যাহারা অন্যপুরুষের সেবাকার্য্যেই নিযুক্ত তাদের ভুজিষ্যা বলা হয়)। এতাদৃশ অন্যের অবরুদ্ধা দাসী বা রক্ষিতা ভুজিষ্যা বা অন্যের উপভোগ্যা স্বৈরিণী রমণীতে গমন করিলে, গমনকারী পুরুষ পঞ্চাশৎপণ দণ্ড দিতে বাধ্য হইবে।

Eng.—A person enjoying a restricted married wife of another or an engaged married of another or some other enjoyable self-willed woman (kept etc) of another will have to pay a fine of hundred panas.



Mita—साधारणस्त्रीगमने दण्डमाह—[गच्छन इत्यनुवर्त्तते]। उक्तलक्षणा (परशुश्रूषाकारिण्यो) वर्णस्त्रियो दास्यः, ता एव स्वामिना शुश्रूषाद्यानिभ्युदासार्थं गृहे एव स्थातव्यमित्येवं पुरुषान्तरभोगतो निरुद्धा "अवरुद्धाः"। पुरुषनियतपरिग्रहा भुजिष्या। यदा दास्योऽवरुद्धा भुजिष्या वा भवेयुः तदा तासु तथा [च-शब्दात् वेश्यास्वैरिणीनामपि साधारणस्त्रीणां भुजिष्याणां च ग्रहणम्] तासु सर्वपुरुषसाधारणतया गम्यास्वपि गच्छन् पञ्चाशत्पणं दण्डनीयः। परपरिगृहीतत्वेन तासामपि परदारतुल्यत्वात्' एतच्च स्पष्टमुक्तं नारदेन (१२।७८-७९) —'स्वैरिण्यब्राह्मणी वेश्या दासी निष्कासिनी च या। गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः॥ आस्वेव तु भुजिष्यासु दोषः स्यात्परदारवत्। गम्यास्वपि हि नोपेयाद्यतस्ताः सपरिग्रहाः॥' इति॥ निष्कासिनी स्वाम्यनवरुद्धा दासी। ननु च स्वैरिण्यादीनां साधारणतया गम्यत्वाभिधानमुक्तम्। नहि जातितः शस्त्रतो वा काश्चन लोके साधारणाः स्त्रिय उपलभ्यन्ते। तथा हि—स्वैरिण्यो दास्यश्च तावद्वर्णस्त्रिय एव; 'स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत्। वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः॥' इति मनुस्मरणात्॥ नच वर्णस्त्रीणां पत्यौ जीवति मृते वा पुरुषान्तरोपभोगो घटते; 'दुःशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः। परिचार्यः स्त्रिया साध्व्या सततं देववत्पतिः॥ कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः। नतु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु॥' (मनु ५।१५४-१५७)—इति निषेधस्मरणात्॥ नापि कन्यावस्थायाः साधारणत्वम्। पित्रादिपरिरक्षितायाः कन्याया एव दानोपदेशात्। तदभावेऽपि तथाविधाया एव स्वयंवरोपदेशात्। नच दासीभावात्स्वधर्माधिकारच्युतिः। पारतन्त्र्यं हि दास्यम्, न स्वधर्मपरित्यागः। नापि वेश्या साधारणी; वर्णानुलोमजव्यतिरेकेण गम्यजात्यन्तरासंभवात्। तदन्तःपातित्वे च पूर्ववदेवागम्यत्वम्; प्रतिलोमजत्वे ते तासां नितारामगम्यत्वम्। अतः पुरुषान्तरोपभोगे तासां निन्दितकर्माभ्यासेन पातित्यात्, पतितसंसर्गस्य निषिद्धत्वाच्च न सकलपुरुषोपभोगयोग्यत्वम्। सत्यमेवम्। किंत्वत्र स्वैरिण्यादुपभोगे पित्रादिरक्षा-राजदण्डभयादिदृष्टदोषाभावाद्गम्यत्वं वाचोयुक्तिः। दण्डाभावश्चावरुद्धासु दासी-

भिवृति नियतपुरुषपरिग्रहोपाधितो दण्डविधानात्तदुपाधिरहितास्वर्थादवगम्यते। स्वैरिण्यादीनां पुनर्दण्डाभावो विधानाभावात्॥ 'कन्यां भजन्तीमुत्कृष्टां न किंचिदपि दापयेत्॥' इति लिङ्गनिदर्शनाच्चावगम्यते। प्रायश्चित्तं तु स्वधर्मस्खलननिमित्तं गम्यानां गन्तॄणां चाविशेषाद्भवत्येव। यत्पुनर्वेश्यानां जात्यन्तरासंभवेन वर्णान्तःपातित्वमनुमानादुक्तम्—'वेश्या वर्णानुलोमाद्यन्तःपातिन्यः; मनुष्यजात्याश्रयत्वात्, ब्राह्मणादिवत्' इति। तत्र; कुण्डगोलकादिभिरनैकान्तिकत्वात्। अतो वेश्याख्या काचिज्जातिरनादिर्वेश्यायामुत्कृष्टजातेः समानजातेर्वा पुरुषादुत्पन्ना पुरुषसंभोगवृत्तिर्वेश्येति ब्राह्मण्यादिवल्लोकप्रसिद्धिबलादभ्युपगमनीयम्। नच निर्मूलेयं प्रसिद्धिः। स्मर्यते हि स्कन्दपुराणे—'पञ्चचूडा नाम काश्चनाप्सरसः, तत्संततिर्वेश्याख्या पञ्चमी जातिः' इति। अतस्तासां नियतपुरुषपरिणयनविधिविधुरतया समानोत्कृष्टजातिपुरुषाभिगमने नादृष्टदोषो नापि दण्डः। तासु चानवरुद्धासु गच्छतां पुरुषाणां यद्यपि न दण्डस्तथाऽप्यदृष्टदोषोऽस्त्येव। 'स्वदारनिरतः सदा' (१।४५) इति नियमात्।—'पशुवेश्याभिगमने प्राजापत्यं विधीयते' इति प्रायश्चित्तस्मरणाच्चेति निरवद्यम्॥ २९०॥

## CHARCHA

1. अवरुद्धासु दासीषु—दासी are maid sarvants meant to serve others, and of these who are being restricted by their husbands not to serve others by living there are अवरुद्धा दासी॥ Acc. to Raghunath "भुङ्क्ते स्वाम्युच्छिष्टम् इतिभुज+किष्यन् (औणादिक) स्त्रियाम्=भुजिष्या lit. she who lives on refuse of her employer's table i e.=women servant भुजिष्या thus are paid maid sarvents who are meant to serve others all along; other गम्या here are स्वैरिणी who leave their husbands and take resort to other, also kept of others and not public prostitutes. अर्थ ज्मी। See also Mita. Such of others should not be enjoyed, then this will be the



punishment. Such women of others are like परदार "परपरिगृहीतत्वेन आसां परदारतुल्यत्वात्"—Mita.

291. Punishment in forcible enjoyment of above types of woman.

प्रसह्य दास्यभिगमे दण्डो दशपणःस्मृतः।
बहूनां यद्यकामासौ चतुर्विंशतिकः पृथक्॥ २९१॥

Prose—प्रसह्य दास्यभिगमे दशपणः दण्डः स्मृतः। यदि असौ (दासी) अकामा, तत्र बहूनाम् प्रसह्य अभिगमे पृथक् चतुर्विंशतिकः (दण्डः स्मृतः)।

Beng.—যাহারা পরপুরুষভোগ দ্বারা জীবিকা অর্জন করে, এরূপ দাস্যাদিতে জোর করিয়া (অর্থাদি না দিয়া) ভোগ করিলে দশপণ দণ্ড হইবে। আর যদি এতাদৃশ দাস্যাদি অকামা অর্থাৎ ভোগদানে অনুচ্ছুক হয়, তবে বহুলোক বলপূর্বক উপগত হইলে প্রত্যেকেরই চব্বিশপণ দণ্ড হইবে।

[ N.B.—दासी here stands for दासी स्वैरिणी etc. ]

Eng.—Those दासी, स्वैरिणी etc that live by selling their bodies should not be forcibly enjoyed without paying money; then there will be a fine of ten panas; if an unwilling such दासी etc. are forcibly enjoyed by many, then the fine will be twenty four panas for each one of them (पृथक्)।

Mita—"अवरुद्धासु दासीषु" इत्यनेन दासीस्वैरिण्यादिभुजिष्याभिगमने दण्डं विदधतः तासु अभुजिष्यासु दण्डो नास्ति इत्यर्थादुक्तम्। तस्यापवादमाह—पुरुषसंभोगजीविकासु दासीषु स्वैरिण्यादिषु 'शुल्कदानमन्तरेण सह। बलात्कारेण अभिगच्छतः दशपणो दण्डः'। यदि बहव एकामनिच्छन्तीमपि बलात्

-कारेण अभिगच्छन्ति तर्हि प्रत्येकं चतुर्विंशतिपणपरिमितं दण्डं दण्डनीयाः। [ यदा पुनस्तदिच्छया भाटिं ( मूल्यं ) दत्त्वा पश्चादनिच्छन्तीमपि बलाद्व्रजन्ति तदा तेषामदोषः, यदि व्याध्यभिभवस्तस्या न स्यात्। "व्याधिता सश्रमा व्यग्रा राजकर्मपरायणा। आमन्त्रिता चेत् नागच्छेत् अदण्ड्या वडवास्मृता॥ इति नारदवचनात ] ॥ २९१ ॥

## CHARCHA

1. प्रसह्य—an अव्यय meaning बलात्। See ante also.
2. चतुर्विंशतिकः—with मत्वर्थ ठन् as in पञ्चाशत्पणिकं दमम्।

291. Punishment for harlots on denial after taking money.

> गृहीतवेतना वेश्या नेच्छन्ती द्विगुणं वहेत्।
> अगृहीतेसमं दाप्यः पुमानप्येवमेव हि ।। २९२ ।।

Prose—गृहीतवेतना ( शुल्कं गृहीत्वा ) वेश्या न इच्छन्ती यदि तदा द्विगुणं दमं वहेत् ( दद्यात् )। शुल्के अगृहीते ( किन्तु स्वीकारे सति ) पश्चात् नेच्छन्ती समं ( मूल्यं शुल्कं ) वहेत् ( दद्यात् )। पुमान् अपि एवमेव हि दाप्यः।

Beng—মূল্য বা ভাটক লইয়া পরে যদি বেশ্যা ভোগদানে অনিচ্ছুক হয়, তবে গৃহীতমূল্যের দ্বিগুণ দণ্ড দিবে। আর মূল্য না লইলেও যদি অঙ্গীকার করিয়া পরে অনিচ্ছুক হয়, তবে স্বীকৃত শুল্কমূল্য দিবে। পুরুষ ও যদি অর্থ দিয়া পরে অনিচ্ছুক হয় তবে উক্তরূপ দণ্ড দিবে।

Eng.—If a harlot is unwilling to give her body after taking money, then she will pay twice as much ; if she does not take money but disagrees after verbal agreeing then she will have to pay proportionate agreed money ; such is



the case for a male who secedes after paying etc. also [ N.B.—usually money is forfeited in case of males seceding after paying ].

Mita—यदा तु शुल्कं गृहीत्वा स्वस्थापि अर्थपतिं नेच्छति तदा द्विगुणं शुल्कं वहेत् दद्यात्, तथा शुल्कं दत्त्वा स्वयमनिच्छतः स्वस्थस्य पुंसः शुल्कहानिरेव। [ "शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत्। अनिच्छन् दण्डशुल्कोपि शुल्कहानिमवाप्नुयात्" इति नारदस्मरणात्। तथा अन्योपि विशेषस्तेनैव दर्शितः—'अप्रयच्छन् तथा शुल्कम् अनुभूय पुमान् स्त्रियम् अक्रमेण च संगच्छन् पाददन्तनखादिभिः। अयोनौ वाभिगच्छेत् यो वहुभिर्वापि वासयेत्। शुल्कमष्टगुणं दाप्यः विनयं तावदेव तु॥ वेश्याप्रधाना यास्तत्र कामुकास्तद् गृहोषिताः। तत् समुत्थेषु कार्य्येषु निर्णयं संशयेविदुः" इति ॥ २९२ ॥

Charcha—1. वहेत्—Here it means दद्यात्।

293. Punishment for unnatural enjoyment etc.

> अयोनौ गच्छतो योषां पुरूषं वाभिमेहतः।
> चतुर्विंशतिको दण्डस्तथा प्रव्रजितागमे ॥ २९३ ॥

Prose—योषां ( स्वयोषां ) अयोगो गच्छतः ( पुंसः ) पुरूषं अभिमेहतः ( जनस्य ), तथा प्रव्रजितागमे ( सन्नासिन्यभिगमे ) चतुर्विंशतिकः दण्डः स्यात्।

Beng. etc—Easy.

Mita—किञ्च यस्तु स्वयोषां मुखादौ अभिगच्छति, पुरूषं वा अभिमुखः सन् मेहति ( मलंत्यजति ), तथा प्रव्रजितां वा गच्छति, असौ चतुर्विंशतिपणान् दण्डनीयः ॥ २९७ ॥

294. Punishment for enjoying Chandali woman etc.

> अन्त्याभिगमने त्वाङ्क्य कुबन्धेन प्रवासयेत्।
> शूद्रस्तथान्त्य एव स्याद् अन्त्यस्य आर्यागमे वधः॥ २९४ ॥

Prose—अन्त्याभिगमने ( अन्त्या चाण्डाली, तस्याभिगमने सति ) कुवन्धेन ( भगाकारचिन्हेन ) तु आङ्क्य ( अङ्कयित्वा चिह्नयित्वा ) प्रवासयेत् ( स्वराष्ट्रात् बहिष्कुर्य्यात् )। शूद्रः ( अन्त्याभिगमने ) अन्त्य एव स्यात्। अन्त्यस्य आर्यागमे ( उत्तमवर्णस्त्र्यभिगमे सति ) वधः दण्डः स्यात्। [N.B.—The reading आङ्क्य ( आ+अङ्क णिच् ल्यप ) is better than तु अङ्कः here ; for ther a 'च' is to be made understood. Mita also has अङ्कयित्वा here. ]

Beng.—চণ্ডালীতে উপগত হইলে সেই পুরুষকে কুৎসিতচিহ্নে চিহ্নিত করিয়া রাষ্ট্র হইতে বাহির করিয়া দিবে। শূদ্র চণ্ডালীতে উপগত হইলে সে চণ্ডালত্ব প্রাপ্ত হইবে। আর চণ্ডাল যদি উচ্চবর্ণা রমণাতে উপগত হয়, তবে তার বধ দণ্ড হইবে।

Eng.—If one goes to a Chandali woman, then he is to be imprinted with ugly signs on the forehead and turned out of the kingdom ( country ); if a sudra enjoys a Chandali then he himself becomes Chandali ; if a Chandala enjoys a woman of any higher caste then he is to undergo capital punishment.

Mita—किञ्च अन्त्याचण्डाली तद्गमने [ त्रैवर्णिकान् प्रायश्चित्तानभिमुखान "सहस्रं त्वन्त्यजस्त्रियम्" इतिमनुवचनात पणसहस्रं दण्डयित्वा ] "कुवन्धेन" कुत्सितवन्धेन भगाकारेण अङ्कयित्वा स्वराष्ट्रान्निर्वासयेत। [ प्रायश्चित्ताभिमुखस्यपुनर्दण्डनमेव ] शूद्रः पुनश्चाण्डाल्यभिगमे अन्त्य एव चण्डाल एव भवति। अन्त्यजस्य पुनः चाण्डालादेः उत्कृष्टजातिस्त्र्यभिगमे वध एव ( दण्डः ) ॥ २९४ ॥

इतिस्त्रीसंग्रहणप्रकरणम् ॥

## अथ प्रकीर्णकप्रकरणम्

[ The section on miscellaneous mainly touching the king, his officers etc not said or touched before. प्रकीर्णमेव प्रकीर्णकम् miscellaneous matters ; compare Mitakshara here "यो नृपाश्रयो व्यवहारस्तत् प्रकीर्णकम् इति अर्थाल्लक्षितं भवति" ]।

### Introductory Notes Here in Mitakshara

व्यवहारप्रकरणमध्ये स्त्रीपुंसयोगाख्यमप्यपरं विवादपदं मनुनारदाभ्यां विवृतम्। तत्र नारदः ( १२।१ )—'विवाहादिविधिः स्त्रीणां यत्र पुंसां च कीर्त्यते। स्त्रीपुंसयोगसंज्ञं तद्विवादपदमुच्यते ॥' इति। मनुरप्याह ( ९।२ )—'अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम्। विषयेषु च सज्जन्त्यः संस्थाप्या ह्यात्मानो वशे ॥' इत्यादि ॥ यद्यपि स्त्रीपुंसयोः परस्परमर्थिप्रत्यर्थितया नृपसमक्षं व्यवहारो निषिद्धः, तथापि प्रत्यक्षेण कर्णपरम्परया वा विदिते तयोः परस्परातिचारे दण्डादिना दम्पती निजधर्ममार्गे राज्ञा स्थापनीयौ। इतरथा दोषभाग्भवतीति व्यवहारप्रकरणे राजधर्ममध्येऽस्य स्त्रीपुंसधर्मजातस्योपदेशः। एतच्च विवाहप्रकरण एव संप्रपञ्चं प्रतिपादितमिति योगीश्वरेण न पुनरत्रोक्तम् ॥

सांप्रतं प्रकीर्णकाख्यं व्यवहारपदं प्रस्तूयते। तल्लक्षणं च कथितं नारदेन (१६।१-४)—'प्रकीर्णकेषु विज्ञेया व्यवहारा नृपाश्रयाः। राज्ञामाज्ञाप्रतीघातस्तत्कर्मकरणं तथा ॥ पुरःप्रदानं संभेदः प्रकृतीनां तथैव च। पाखण्डिनैगमश्रेणिगणधर्मविपर्ययाः ॥ पितापुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः। प्रतिग्रहविलोपश्च कोपश्चाश्रमिणामपि ॥ वर्णसंकरदोषश्च तद्वृत्तिनियमस्तथा। न दृष्टं यच्च पूर्वेषु सर्वं तत्स्यात्प्रकीर्णके ॥' इति ॥ प्रकीर्णके विवादपदे ये विवादा राजाज्ञोल्लङ्घनतदाज्ञाकरणादिविषयास्ते नृपसमवायिनः। नृप एव तत्र स्मृत्याचारव्यपेतमार्गेण वर्तमानानां प्रतिकूलतामास्थाय व्यवहारनिर्णयं कुर्यात् ॥ एवं च वदता यो नृपाश्रयो व्यवहारस्तत्प्रकीर्णकमित्यर्थाल्लक्षितं भवति ॥

259. The wrong writers of documents, and connivers of outrages are to be punished.

ऊनं वाप्यभ्यधिकं वापि लिखेद् यो राजशासनम् ।
पारदारिकचौरं वा मुञ्चतो दण्ड उत्तमः ॥ २९५ ॥

Prose—यः ( राजपुरुषः ) राजशासनम् ऊनं वा यदि वा अभ्यधिकं लिखेत तस्य, वा पारदारिकचौरं मुञ्चतः ( जनस्य ) उत्तमः ( उत्तमसाहसकथितः ) दण्डः स्यात् ।

Beng.—যে রাজপুরুষ ভূম্যাদি-বিষয়ক দ্রব্যাদির পরিমাণ কম বা বেশী দলিলে লেখে, বা যে রক্ষিপুরুষ পরস্ত্রীধর্ষণকারী বা চোরকে ধরিয়া রাজার নিকট সমর্পণ না করিয়া ছাড়িয়া দেয়, সেও ( অর্থাৎ এই দুইপ্রকার লোকই ) উত্তমসাহস দণ্ডে দণ্ডনীয় ।

Eng.—The officer who writes less or more measurements of lands etc in documents or if the officer connives and lets go an adulterer ( a molester of another's wife ) or a thief, should be punished with उत्तमसाहसदण्ड ।

Mita—तत्र अपराधविशेषेण दण्डविशेषमाह—राजदत्तभूमेः निबन्धस्य वा परिमाणात् न्यूनत्वमाधिक्यं वा प्रकाशयन् राजशासनं योभिलिखति, यश्च पारदारिकं चौरं वा गृहीत्वा राज्ञे अनर्पयित्वा मुञ्चति, तावुभौ उत्तमसाहस दण्डनीयौ ॥ २९५ ॥

CHARCHA

1. यः—Refers to यः राजपुरुषः ( royal officer ), राज्ञः शासनम् =राजशासनम् the documents of kings ६ तत् ।

2. पारदारिकचौरम्—परस्य दाराः इति परदाराः, ६ तत्— । परदारान् गच्छतीति परदार+ठक् by the varttika "गच्छतौ परदारादिभ्यः"=





पारदारिकः an outrager—a molester of परस्त्री । पारदारिकसहितः चौरः इति पारदारिकचौरः, शाकपार्थिवादितत् । In usual course a समाहारद्वन्द्व cant be got in such cases but can some how be established by the dictum "सर्वो द्वन्द्वो विभाषा एकवद् भवति" । See our वधूवरम् in sak. and ante.

296. Punishment for other's defilers by food.

अभक्ष्येण द्विजं दुष्यन् दण्ड्य उत्तमसाहसम् ।
मध्यमं क्षत्रियं वैश्यं प्रथमं शूद्रमर्धिकम् ॥ २९६ ॥

Prose—द्विजम् अभक्ष्येण दुष्यन् ( दुष्यन् जनः ) उत्तमसाहसं दण्ड्यः । क्षत्रियं ( दुष्यन् ) मध्यमं ( मध्यमसाहसं ), वैश्यं ( दुष्यन् ) प्रथमम् ( वा अधमसाहसं ) दण्ड्यः, शूद्रं दुष्यन् अर्धिकम् ( अर्द्धं प्रथमसाहस्य अर्द्धपरिमाणं ) दण्ड्यः ।

Beng.—যদি কেহ ব্রাহ্মণকে অভক্ষ্য বস্তুমিশ্রিত অন্নপানাদি দ্বারা দূষিত করে ( অর্থাৎ তার ধর্মনিয়ম নষ্টকরে ), তবে তার উত্তম সাহস দণ্ড হইবে। ক্ষত্রিয়কে এভাবে দূষিত করিলে মধ্যমসাহস দণ্ড, বৈশ্যকে দূষিত করিলে অধমসাহস দণ্ড এবং শূদ্রকে দূষিত করিলে অধমসাহসদণ্ডের অর্দ্ধেকদণ্ড হইবে ।

Eng.—One defiling a Brahman by giving him his non-edible drink or food should be punished as in उत्तमसाहस, one so defiling a Kshatriya will be punished as in मध्यमसाहस, one so defiling a Vaishya will be punished as in अधमसाहस ; one so defiling a Sudra will have to pay half as much as in अधमसाहस ।

Mita—प्रसङ्गात् नृपाश्रयव्यतिरिक्तव्यवहारविषयमपि दण्डमाह—मूत्र-पुरीषादिना अभक्ष्येण भक्ष्यपानेन द्रव्यान्नपानादिमिश्रणेन स्वरूपेण वा ब्राह्मणं

दूषयित्वा खादयित्वा उत्तमसाहसं दण्ड्यो भवति। क्षत्रियं पुनरेवं दूषयित्वा मध्यमम्। वैश्यं दूषयित्वा प्रथमम्, शूद्रं दूषयित्वा प्रथमसाहसस्यार्द्धम्, दण्ड्यो भवति इति सम्बन्धः। लशुनाद्यभक्ष्यदूषणे तु दोषतारतम्यात् दण्डतारतम्य-मूहनीयम् ॥

CHARCHA

1. दुष्यन्—दुष (दिवादि)+शतृ। usually दिवादिदुष is अकर्मक as 'विद्वान् दुष्यति चापशब्दैः' etc. Here दुष is used as अन्तर्भावितण्यर्थ i.e, in the sense of दूषण (defiling another). The reading दूष्यः is bad in gram. here. Thus अभक्ष्येण द्विजं दूष्यः जनः is unidiomatic; द्विजस्य दूष्यः जनः is intelligible; further कृत्यप्रत्यय denotes प्रैष or विधि, अतिसर्ग or request or प्राप्तकाल or proper time, or अर्ह or योग्यता (see the rules 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' and 'अर्हे कृत्यतृचश्च), but this is not the sense here, the meaning here being a matter of past & present दूषण। So we prefer दुष्यन् here.

297. Punishment for selling adulterated gold and meat.

कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी।
त्र्यङ्गहीनस्तु कर्त्तव्यो दाप्यश्चोत्तमसाहसम्। ॥ २९७ ॥

Prose—कूटस्वर्णव्यवहारी, विमांसस्य च विक्रयी त्र्यङ्गहीनस्तु कर्त्तव्यः उत्तमसाहसं दमं च दाप्यः।

Beng.—যে বণিক্ কৃত্রিম সোনাকে খাঁটি সোনা বলিয়া বিক্রয় করে, বা যে অবিশুদ্ধ মাংস বা অখাদ্য মাংস বিক্রয় করে, তাদের প্রত্যেককে তিন অঙ্গ (নাসিকা কর্ণ, হস্ত—এই তিন অঙ্গ) হীন



করিয়া (অকর্মণ্য করিয়া বা কাটিয়া) পরে উত্তমসাহস দণ্ড দেওয়াইবেক।

Eng.—The trader dealing with imitation gold (or silver) as genuine one, or one dealing with objectionable or inedible meat will be made devoid of three limbs (of nose, ear and hand) and also made to pay punishment as in उत्तमसाहस।

Mita—किञ्च वसवेधाद्यापादितवर्णोत्कर्षैः कूटैः स्वर्णैः व्यवहारशीलो यः स्वर्णकारादि। यश्च 'विमांसस्य' कुत्सितमांसस्य श्वादिसंबन्धस्य 'विक्रयशीलः' सौनिकादिः [च-शब्दात् रजतादि व्यवहारी च] ते सर्वे प्रत्येकं नासाकर्णकरैः त्रिभिः अङ्गैः हीनाः कार्य्याः। 'चशब्दात्' त्र्यङ्गच्छेदेन समुच्चितमुत्तमसाहसं दण्डं दाप्याः। [यत् पुनर्मनुनोक्तम्—'सर्वकण्टकपापिष्ठं हेमकारं तु पार्थिवः। प्रवर्त्तमानमन्याये छेदयेत्लवशः क्षुरैः' इति, तदेतत् देवब्राह्मणराजस्वर्णविषयम्] ॥

CHARHCA

1. कूटस्वर्ण &c—कूट is feint, false. कूटं स्वर्णम्। तस्य व्यवहारः। स अस्ति अस्य इति मत्वर्थीय इनिः। or कूटस्वर्णं व्यवहरति इति णिनि। उक्त कर्म of कर्त्तव्य and दाप्यः।

2. विमांसस्य—शेषे षष्ठी। विरुद्धं मांसम् इति विमांसम्, meat contrary to one's edibility or विरसं मांसम् विमांसम् bad-tasting, food or decomposed meat.

3. विक्रयी—विक्रयः अस्ति अस्य इति मत्वर्थीय इनि। or औणादिक इनि। णिनि should give विक्रायी ॥ त्र्यङ्ग refers to 3 अङ्ग of nose ear & hand. त्र्यङ्गैः हीनः, ततत्।

4. Remark—Though slokas 296 297-301 do not directly concern the king, still these reflect discredit to adminis-

-tration if such समाजविरोधी जनदूषक persons go unpunished in the kingdom. Such दुष्कृति and दुर्नीति should always be checked by the administrator with strong punishments of उत्तमसाहस। So these are dealt with here.

298. No crime accrues to the goader if one being forewarned is injured by animals.

चतुष्पादकृतो दोषो नापेहीति प्रजल्पतः।
काष्ठ-लोष्टेषु-पाषाण-बाहुयुग्यकृतस्तथा ॥ २९८ ॥

Prose—'अपेहि' इति प्रजल्पतः (चालकस्य, स्वामिनो वा) चतुष्पादकृतः-दोषः (मनुष्यमारणरूपदोषः) न स्यात्। तथा 'अपेहि' इति प्रजल्पतः जनस्य काष्ठलोष्टेषु-पाषाण-बाहुयुग्यकृतः (काष्ठादीन् क्षिपतः जनस्य तत्कृतः मनुष्य-मारणरूपः) दोषः न स्यात्।

Beng.—"সরিয়া যাও"—এইরূপ বলার পরও যদি চতুষ্পাদজন্তু গো-মহিষ হস্তী দ্বারা কেহ আহত হয়, তবে চালক বা পালকের কোন দোষ হইবে না। তদ্রূপ নিষেধ করা সত্ত্বেও যদি কাষ্ঠ, ইষ্টক, বাণ, পাষাণ, বাহু ক্ষেপন স্থানের নিকট থাকিয়া বা যুগ (জোয়াল) বাহী অশ্বের নিকট থাকিয়া কেহ আহত হয় তবে উৎক্ষেপকের কোন দোষ হইবে না।

Eng.—The fault in wounding persons by four-footed animals (like cow, buffalo, elephant etc.) will not accrue to their goaders or masters, if they warn others saying 'go away hence'. Similarly one wounded even if warned to remain near throwing of woods, bricks, arrows, stone's



near hand-stretching area or remaining before horses with yokes on, cannot involve the person engaged there.

Mita—विषयविशेषे दण्डाभावमाह—"चतुष्पादैर्गोगजादिजातिभिः कृतोयो-दोषः" मनुष्यमारणादिरूपः असौ गवादिस्वामिनो न भवति, अपसरेति प्रकर्षेण उच्चैर्भाषमाणस्य। तथा—लकुट-लोष्ट-सायक-पाषाणोत्क्षेपणेन "बाहुना युग्येन च" युगं वहता अश्वादिना कृतोमः पूर्वोक्तदोषः सोपि काष्ठादीन् प्रास्यतो न भवति, अपसरेति प्रजल्पतः। काष्ठाद्युत्क्षेपणेन हिंसायां दोषाभावकथनं दण्डाभावप्रतिपादनार्थम्। प्रायश्चित्तं पुनः अबुद्धिपूर्वकंनिमित्तम् अस्य अस्त्येव। [काष्ठादि ग्रहणं च शक्तितोमरादेः उपलक्षणम्] ॥ २९८ ॥

CHARCHA

1. चतुष्पादकृतः—चत्वारः पादाः अस्य, चतुष्पादः, बहु। no समासान्त—अनित्यत्वात्। तेन कृतः, तत्त्। Qual दोषः। The fault of मनुष्यमारणदोष by चतुष्पाद जन्तु will not go to—"अपेहि" इति प्रजल्पतः (कथयतः)। See Mita.

2. काष्ठ etc—युग is yoke of cars plouging &c. युगंवहति युग्य with यत्प्रत्यय by the rule" तद्वहति रथयुगप्रासङ्गम्"। युग्य is horse with yoke on its shoulder. So बाहु is बाहूत्क्षेपस्थान, so take काष्ठ etc. First द्वन्द्व। Then तत्त्। Refers to such मारण दोष ॥ अप+इ लोट हि will give अपेहि and not अपैहि ॥

299. Being warned one must not be near a bullock not properly tied to the car or near a broken car.

छिन्ननस्येन यानेन तथा भग्नयुगादिना।
पश्चाच्चैवापसरता हिंसने स्वाम्यदोषभाक् ॥ २९९ ॥

Prose—छिन्ननस्येन भग्नयुगादिना यानेन पश्चात् अपसरता (अनेन) हिंसने अदोषभाक् स्यात्।

Beng.—যে যানের বলীবর্দাদির নাসাদড়ি ছিন্ন এবং যে যানের যুগ (জোয়াল) বা চাকা ভাঙ্গিয়া গিয়াছে সেই শকটে পিছু হাটিবার সময় স্বামীকর্তৃক মনুষ্যাদিহিংসন হইলে স্বামীর দোষ হইবে না (যদি পূর্বেই "সরিয়া যাও" বলিয়া সাবধান করিয়া দেওয়া হয়)

Prose—The owner going by his car having its nose-thread torn, yokes and wheels tottering, and hurting others while turning backwards or sideways will not be guilty (if he warns others beforehand).

Mita—किञ्च, नसि भवा रज्जुः नस्या। छिन्ना शकटादियुक्तवलीवर्दनस्या रज्जुः यस्मिन्याने, तत् छिन्ननस्यं शकटादि, तेन तथा भग्नयुगेन [ आदिग्रहणात् भग्नाक्षचक्रादितेन च ] यानेन, पश्चात् पृष्ठतो अपसरता [ च शब्दात् तिर्य्यगपगच्छता प्रतिमुखं वा गच्छता च, मनुष्यादिहिंसने स्वामी प्राजको वा (=चालको वा) दोषभाक् न भवति। अतत्प्रयत्नजनितत्वात् हिंसनस्य। [ तथा च मनुः—'छिन्ननास्ये भग्नयुगे तिर्य्यक् प्रतिमुखागते अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च। छेदने चैवयन्त्रानां योक्तृरश्म्योस्तथैव च। आक्रन्दे सत्यपेहिइति न दण्डं मनुरब्रवीत्' ॥ इति ] ॥ २९९ ॥

## CHARCHA

1. छिन्ननस्येन—नासिकायै हितं नस्यम् with यत् and नासिका becoming नस् by the dictum 'नस् नासिकार्याः' under the rule 'तस्मैहितम्'; next बहु। See Mita. Qual. यानेन (which has करणे ३या)।

2. Remark—Here also there shall be forewarning by the owner or driver of the car as 'अपेहि'। Otherwise दोष will accrue.

300, दण्ड in such other cases—



शक्तो ह्यमोक्षयन् स्वामी दंष्ट्रिणां शृङ्गिणां तथा।
प्रथमं साहसं दद्यात् विक्रुष्टे द्विगुणं ततः ॥ ३०० ॥

Prose—स्वामी शक्तोपि दंष्ट्रिणां तथा शृङ्गिणां (सम्बन्धे=सम्बन्धविवक्षया षष्ठी) आहतं जनं अमोक्षयन् प्रथमं साहस दण्डं दद्यात्। 'विक्रुष्टेपि' अमोक्षयन् ततः द्विगुणं दण्डं दद्यात्। [ अत्र विशदविवरणन्तुमिताक्षरायां द्रष्टव्यम् ]

Beng.—স্বামী যদি সমর্থ হইয়াও, দংস্ট্রিগজাদিদ্বারা বা শৃঙ্গী মহিষাদিদ্বারা আহত ব্যক্তি উদ্ধার না করেন, তবে প্রথমসাহস দণ্ড দিবেন। আর আক্রান্ত ব্যক্তি কাতরে চেঁচাইলেও যদি স্বামী রক্ষা বা উদ্ধার না করেন তবে প্রথমসাহসের দ্বিগুণ দণ্ড হইবে।

Eng.—If the owner or the goader does not deliver a person wounded by a tusker or a horned animal even if able, then he will be fined as in प्रथमसाहस। If again he does not deliver the wouded even when he cries for help then the fine will be twice as much. [ N.B.—Here driver's fault will be the fault of the owner etc.—See Mita].

Mita—उपक्षायां दण्डमाह—अप्रवीणप्राजकप्रेरितैर्दंष्ट्रिभिर्गजादिभिः शृङ्गिभिर्गवादिभिर्वध्यमानंसम र्थोऽपि तत्स्वामी यद्यमोक्षयन्नुपेक्षते, तदा अकुशलप्राजकनियोजननिमित्तं प्रथमसाहसं दण्डं दद्यात्। यदा तु 'मारितोऽहम्' इति विक्रुष्टेऽपि न मोक्षयति तदा द्विगुणम्। यदा पुनः प्रवीणमेव प्राजकं प्रेरयति तदा प्राजक एव दण्ड्यो न स्वामी। यथाह मनुः (८।२१४)—'प्राजकश्चेद्भवेदाप्तः (शक्तः) प्राजको दण्डमर्हति' इति ॥ प्राजको यन्ता। आप्तोऽभियुक्तः (शक्तः) प्राणिविशेषाच्च दण्डविशेषः कल्पनीयः। यथाह मनुः (८।२९६-९८)—'मनुष्यमारणे क्षिप्रं चौरवत्किल्बिषी भवेत्। प्राणभृत्सु महत्स्वर्धं गोगजोष्ट्रहयादिषु ॥ क्षुद्राणां च पशूनां तु हिंसायां द्विशतो दमः। पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु ॥ गर्दभाजावि-

कानां तु दण्डः स्यात्पञ्चमाषकः। माषकस्तु भवेद्दण्डः श्वशूकरनिपातने ॥' इति ॥

Charcha—Easy. See Tika & Prose.

391. If an illegal lover is called a thief to suppress infamy, then a fine of five hundred pana will be imposed.

जारं चौरेत्यभिवदन् दाप्यः पञ्चशतं दमम्।
उपजीव्य धनं मुञ्चंस्तदेवाष्टगुणीकृतम् ॥ ३०१ ॥

Prose—जारं—हे चौर इत्यभिवदन् जनः पञ्चशतं दमम् ( दण्डं ) दाप्यः। जारात् धनं उपजीव्य ( उत्कोचरूपेण धनं गृहीत्वा ) मुञ्चन् ( जारं मुञ्चन् ) ( पुरुषः, राजपुरुषो वा ) तत् ( गृहीतधनम् ) एव अष्टगुणीकृतं दमं दाप्यः।

Beng—পরস্ত্রীগামী জার ( উপপতি ) ঘরে আসিলে, তাকে কলঙ্ক ঢাকিবার জন্য চোর বলিয়া ধরাইয়া দিলে, পাঁচশত পণ দণ্ডদিতে হইবে। আবার জারের নিকট হইতে উৎকোচরূপ ধন গ্রহণ করিয়া তাকে যে ছাড়িয়া দিবে, তার উৎকোচস্বরূপে গৃহীত ধনের আটগুণ ধন দণ্ডদিতে হইবে।

Eng.—A lover having illicit connection with another's wife if handed over on the plea of a thief ( to suppress infamy ), then a fine of five hundred pana will be imposed; again if such an adulterer of woman be let loose by any one after taking bribe from him, then he is to pay a fine amounting eight times of the bribed sum.

Mita—किञ्च स्ववंशकलङ्कभयात् जारं पारदारिकं 'हे चौर निर्गच्छ' इत्यभिवदन् पञ्चशतं पणानां पञ्चशतानि यस्मिन् दमे, स तथोक्तस्तं दमं दाप्यः, यः पुनः जारहस्तात् 'धनमुपजीव्य' उत्कोचरूपेण गृहीत्वा जारं मुञ्चत्यसौ यावद्गृहीतं तावदष्टगुणीकृतं दण्डं दाप्यः ॥ ३०१ ॥



CHARCHA

1. चौर इत्यभिवदन्—Here we have सन्धि as चौरेत्यभिवदन्। Then चौर is case of addres. हे चौर निर्गच्छ—इत्यभिवदन्। See Mita. or say—जारं चौरः इत्यभिवदन्=जारं चौर इत्यभिवदन् by सन्धि; then a further सन्धि is done for metre as जारं चौरेत्यभिवदन्। An आर्षं प्रयोग। In this case चौरः has इतियोगे मा ॥

302. The villifier of the king, or the divulger of king's counsels or plans should be turned not of kingdom with his tongue cut off.

राज्ञोऽनिष्टप्रवक्तारं तस्यैवाक्रोशकारिणम्।
तन्मन्त्रस्य च भेत्तारं छित्त्वा जिह्वां प्रवासयेत् ॥ ३०२ ॥

Prose—राज्ञः ( सम्बन्धे ) अनिष्टप्रवक्तारं ( अनभिमतशत्रुस्तोतारं ) तस्य आक्रोशकारिणं ( निन्दाकारिणं ), तन्मन्त्रस्य ( रहस्यस्य राजमन्त्रस्य ) च भेत्तारं जिह्वां छित्वा प्रवासयेत्। [N.B.—construe अनिष्टस्य जनस्य प्रवक्तारम् with तृच् and आक्रोशं करोतीति आक्रोशकारिन् ( with णिनि )-तम् ]

Beng.—যে, রাজার অনভিপ্রেত শত্রুপ্রভৃতির নিয়ত প্রশংসাকরে, বা যে রাজার নিন্দাচরণ করে, আর যে রাজার রহস্য ( স্বরাষ্ট্র ও পররাষ্ট্রবিষয়ক ) মন্ত্রণাদির উদ্‌ঘাটন করে, রাজা তার জিহ্বা কাটিয়া রাষ্ট্র হইতে বাহির করিয়া দিবেন।

[ N.B.—In मन्त्रस्य भेत्तारम् avoid तृन्, then कर्मं षष्ठी will be barred by "न लोकाव्यय—स्वलर्थतृनाम्" ]।

Eng.—A praiser of king's enemies and a villifier of the king or a divulger of king's counsels ( of home and foreign affairs ) will be turned out of the kingdom with

his tongue cut off. [ N.B.—See Mita for other details, as capital punishment for राजकोशापहरण, and Brahman's punishment other than वध etc. ]

Mita—किंच, राज्ञोऽनिष्टस्यानभिमतस्यामित्रस्यस्तोत्रादेः प्रकर्षेण भूयो भूयो वक्तारं तस्यैव राज्ञ आक्रोशकारिणं निन्दाकरणशीलं तदीयस्य च मन्त्रस्य स्वराष्ट्रविवृद्धिहेतोः परराष्ट्रापक्षयकरस्य वा भेत्तारं अमित्रकर्णेषु जपन्तं तस्य जिह्वामुत्कृत्य स्वराष्ट्रान्निष्कासयेत् । [ कोशापहरणादौ पुनर्वध एव । ( मनुः ९।२७५ )—'राज्ञः कोशापहर्तॄंश्च प्रतिकूलेषु च स्थितान् । घातयेद्विविधैर्दण्डैररीणां चोपकारकान् ॥' इति मनुस्मरणात् । विविधैः सर्वस्वापहाराङ्गच्छेदवधरूपैरित्यर्थः । सर्वस्वापहारेऽपि यद्यस्य जीवनोपकरणं ( means of livelihood ) तन्नापहर्तव्यम् चौरोपकरणं विना । यथाह नारदः—( १७।१०,११ ) 'आयुधान्यायुधीयानां वाद्यादीन्वाद्यजीविनाम् । वेश्यास्त्रीणामलङ्कारान्वाद्यातोद्यादि तद्विदाम् ॥ यच्च यस्योपकरणं येन जीवन्ति कारुकाः । सर्वस्वहरणेऽप्येतन्न राजा हर्तुमर्हति ॥' इति । ब्राह्मणस्य पुनः 'न शारीरो ब्राह्मणे दण्डः' ( गौ० १२।४६ ) इति निषेधाद्वधस्थाने शिरोमुण्डनादिकं कर्तव्यम्—'ब्राह्मणस्य वधो मौण्ड्यं पुरान्निर्वासनाङ्कने । ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन तु ॥' इति मनुस्मरणात् ॥ ३०२ ॥

Charcha—Easy, see Prose & Beng.

**303.** Punishment for taking away & selling ornaments from dead bodies etc.

> मृताङ्गलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा ।
> राजयानासनारोढुः दण्ड उत्तमसाहसः ॥ ३०३ ॥

Paose—मृताङ्गलग्नविक्रेतुः तथा गुरोः ( गुरुजनस्य ) ताडयितुः, राजयानासनारोढुः उत्तमसाहस दण्डः विधातव्यः ( वा स्यात् ) ।



Beng—যে ব্যক্তি মৃতদেহের অঙ্গসংশ্লিষ্ট স্বর্ণবস্ত্রাদি বিক্রয় করে, যে গুরুজনদের প্রহারকরে, এবং যে বিনানুমতিতে রাজার ব্যবহার্য্য যানবাহন বা সিংহাসনে আরোহণ করে বা উপবেশন করে, তার উত্তমসাহস কথিত দণ্ড হইবে।

Eng.—A carrier and seller of gold or dresses or flowers etc. of a dead body, a beater of his superiors, or of one using (without permission) king's conveyances or one sitting on his royal throne will be punished as in उत्तमसाहस । [ N.B.—This is a bad custom or incident hampering and disturbing healthy administration so punishable ]

Mita—किञ्च मृतशरीरसम्बन्धिनो वस्त्रपुष्पादेर्विक्रेतुः । गुरोः पित्राचार्यादेः ताडयितुः । तथा राजानुमतिं विना तद्यानं गजाश्वादि, आसनं सिंहासनादि आरोहतश्च उत्तमसाहसो दण्डः ॥ ३०३ ॥

CHARCHA

1. मृताङ्गलग्न &c.—मृताङ्गे लग्नम्, सुपसुपा । तस्य ( स्वर्णवस्त्रपुष्पादेः ) विक्रेता ( तृच ) । ६तत् । तस्य । शेषे ६ष्ठी ॥ construe राजयानासनस्य आरोढुः दण्डः उत्तमसाहसः स्यात् । such will be punished for the bad example he will set to others.

**304.** A piercer of eyes of others, an astrologer presaging bad for the king etc will be heavily fined.

> द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा ।
> विप्रत्वेन च शूद्रस्य जीवतोऽष्टशतो दमः ॥ ३०४ ॥

Prose—द्विनेत्रभेदिनः ( क्रोधात् अन्यस्य नेत्रद्वयनाशिनः ), राजद्विष्टादेशकृतः ( राजानभिप्रेतं वस्तु ज्योतिर्वित्त्वेन कथयतः ), शूद्रस्य च विप्रत्वेन ( अहं विप्र

